झष्, भष्, अल्, हल्, वल्, रल्, जल्, शल् इत्यष्टत्रिंशत्प्रत्याहाराणां ।

तथाचोक्तम्

एको णङ्वाद् ग्राह्यौ द्वौ अशात् कयतस्त्रयः ।
चत्वारश्चमरात् पट् स्युर्यथायोगं षलाद्बुधैः ॥

तत्राणित्येतत्प्रत्याहारविधिरुच्यते । अइउणित्येतस्य णकारस्य

**१ अप्रयोगीत्** ॥ १।१।५ ॥ इहोपदिश्यमानो वर्णः समुदायो वा यो लौकिकशब्दप्रयोगे न दृश्यते स इत्संज्ञो भवति । इतीत्संज्ञायाम्

**२ सात्मेतेत्** ॥ १।१।१ ॥ इता सहोच्चार्यमाणो वर्णः समुदायो वा आत्मनः प्रभृत्या तस्मादितो व्यवस्थितानां वर्णानां संज्ञा भवत्यात्मना सह । इत्यणीत्यकारेकारोकारा उच्यन्ते एवमेङित्यादयोऽपि नेतव्याः । णकाराद्यनुबन्धानामिह कार्यार्थमुपदिष्टत्वात्तत्राणादिप्रत्याहारग्रहणेष्वग्रहणम् । अनुच्चारणा ह्यप्रयोगिणः । कथं पुनरिहानुपदिष्टानां दीर्घादीनां ग्रहणमिति चेत् सामान्याश्रयणात् दीर्घप्लुतानुनासिकग्रहणम् । अ इत्यादयो हि सर्वस्वव्यक्तिगतसामान्यदर्शनपरा उपादीयन्ते । तथाहि कश्चिदेकां कृष्णहस्वत्वादिगुणविशिष्टां सर्वस्वव्यक्तिगतगोत्वसामान्यरूपां गामग्रे प्रदर्श्य गौरित्युपदिष्टे अन्यत्र यथा शुक्लदीर्घत्वादिगुणविशिष्टानामपि गवां प्रतिपत्तिस्तथात्राप्येकस्मिन्हस्वानुनासिकत्वविशिष्टे सर्वस्वव्यक्तिगतावर्णत्वसामान्यरूपेऽकारे उपदिष्टेऽपि तत्संदर्शनां दीर्घप्लुतानुनासिकत्वविशिष्टानामपि वर्णानां ग्रहणं भवति । एवं इप्रभृतिष्वपि प्रतिपत्तव्यम् । के पुनः ह्रस्वादयः

ह्रस्वदीर्घप्लुतहलो ह्येकद्वित्र्यर्धमात्रिकाः ।
नासिकामनुयातश्च वर्णः स्यादनुनासिकः ॥

ऋवर्णग्रहणे ऌवर्णस्यापि ग्रहणं भवति । तथा च "दूरादामन्त्र्यस्य गुर्वैकोऽनृत्" ॥ २।३।२७ ॥ इत्यत्र ऋकारस्य प्लुते निषिद्धे ऌकारस्यापि

प्लुतनिषेधः प्राप्नोति तन्माभूदिति मत्वाचार्येण लृग्रहणं कृतम्। तज्ज्ञापयति ऋवर्णग्रहणे कृते लृवर्णस्यापि ग्रहणं भवतीति ऋवर्णलृवर्णयोरेकत्वम्। हकारस्य द्विरुपदेशोऽयादौ वशादौ च ग्रहणार्थं। हकारादिष्वकार उच्चारणार्थः।

**२ उतास्वः ॥ १।१।२ ॥** उकारेणेता सहोपादीयमानो वर्णः स्वस्य वर्गस्य सञ्ज्ञा भवत्यात्मना सह। कु चु टु तु पु।

**४ तेयान् ॥ १।१।३ ॥** तकारेणेता सहोपादीयमानो वर्णो यावन्मात्र उपात्तस्तावन्मात्र एवासौ वेदितव्यः। अत्, इत्, उत्,।

**५ भाव्योऽग् ॥ १।१।४ ॥** भाव्यो विधेयः (प्रत्ययविकारागमरूपः) अणकारको वर्णो यावन्मात्र उपात्तस्तावन्मात्र एवासौ वेदितव्यः। कस्य पुनः कः स्वः ?

**६ स्वस्थानास्यैकस्ये ॥ १।१।६ ॥** स्थानं कण्ठादि स्पृष्टतादिप्रयत्नपञ्चकमास्यम् तयोरभेदे वर्णो वर्णस्य स्वो नाम वेदितव्यः। कस्य पुनः किं स्थानम् ? अकुहविसर्जनीयजिह्वामूलीया कण्ठ्या। कुर्जिह्वामूले। हविसर्जनीयावुरस्यौ। जिह्वमूलीयो जिह्व्यः। सर्वमुखस्थानमवर्णमित्येके। इएऐचुयशास्तालव्याः। एऐ कण्ठताल्व्यावेकेषाम्। उओऔउपूपध्मानीयाव ओष्ठ्याः। ओऔ कण्ठोष्ठ्यावेकेषाम्। वो दन्तोष्ठ्यः। सृकस्थानमेकेषाम्। (प्रातानोगस्य सृक्विणी) ऋटुरषा मूर्धन्याः। रेफो दन्तमूल एकेषाम्। लृतुलसा दन्त्याः। नासिक्योऽनुस्वारः। कण्ठनासिक्य एवैषाम्। कस्य पुनः किमास्यम् ? स्पृष्टं करणं स्पर्शानाम् (करणं प्रयत्नः। कादयो मावसाना स्पर्शाः)। ईषत्स्पृष्टमन्तःस्थानाम् (अन्तःस्था यरलवाः)। विवृतं स्वराणाम्। एओ विवृततरौ, ऐऔ, च, ताभ्यामवर्णः। ईषद्विवृतमूष्मणाम् (शषसहानाम्)। संवृतमकारस्येति। तत्राय स्वरग्रहणविभागः—ह्रस्वसञ्ज्ञ उदात्तोऽनुदात्तः स्वरितश्चेति त्रिविधः।

उच्चैरुदात्तो नीचैः स्यादनुदात्तः स्वरस्तथा ।
व्यामिश्रः स्वरितो ज्ञेयः प्रत्येकं त्रिधुर्धरिह ॥

पुनरपि प्रत्येकमनुनासिकोऽननुनासिकश्चेति षट् एवं दीर्घप्लुतावपि द्वादश अवर्णभेदा परस्परस्य स्वे भवन्ति। एवमिवर्णादीनामष्टादश भेदा। एचां च ह्रस्वाभावात् द्वादश भेदा । यवलानामनुनासिकोऽननुनासिकश्चेति द्वौ भेदौ। वर्ग्या पञ्च पञ्च रेफोष्मणा स्वे न सन्ति।

कण्ठोष्ठमूर्धजिह्वादन्तोरस्तालुनासिकावर्णानाम् ।
स्थानान्यास्यं स्पृष्टेषत्स्पृष्टं विवृतसंवृतेषद्विवृतम् ॥
वर्गेष्वाद्या द्वितीयाश्च शषसा अप्यघोषकाः ।
द्वितीयतुर्यवर्णाः स्युर्महाप्राणा हसंयुताः ॥

इति संज्ञासिद्धि ॥

## अथ अच्संधिः ।

अथ सन्धिसिद्धिरुच्यते। पूर्वोत्तरवर्णानामव्यवधानेन परस्पर संधान संश्लेष सन्धि , विरामाभाव इत्यर्थ । ने+अनम्, लो+अनम्, रै+औ, नौ+औ, इति स्थिते ( विरामे नेत्यासंधिसमाप्तेर्वर्तते ।

७ एचोऽच्ययवायाव् ॥ १।१।७१ ॥ एच स्थाने अचि परे अय् , अव् , आय् , आव् इ येते क्रमेणादेशा भवन्ति। ( विरामे नेत्यधिकारात्सन्निकर्षे )। नयनम्, लवनम्, रायौ, नावौ । दधि+अशान, शमी+अत्र, मधु+अपनय, वधू+आननम् । पितृ+अर्थ , लृ+आकृतिः इति द्वि स्थिते। ( यत्रेनादिक ॥ १।१।७२ ॥ ) इत्यधिकृत्य ,

८ अस्वे ।१।१।७३ ॥ इकः स्थाने अस्वेऽचि परे यत्रादेशो भवति । स च

९ आसन्नः ।१।१।७ ॥ इहासन्नानासन्नप्रसंगे स्थानार्थगुणप्रमाणादिभिरासन्न एव विधिरुपात्तो वेदितव्यः इत्यासन्न एव भवति ( शरोऽन्तु द्वे ।१।१।११५ ॥ अचो ह्रोऽह्चः ।१।१।११७ ॥ इत्यधिकृत्य

१० अदीर्घात् ॥ १।१।९ ॥ अदीर्घादचः परस्य हकाररेफादचश्चान्यस्य वर्णस्य स्थाने द्वे रूपे भवतो वा । जरि जरः स्वे वा ।१।१।१३५॥ इत्यधिकृत्य

११ जपि जश् ।१।१।१३६ ॥ जरः स्थाने जपि परे जश् भवति । स च आसन्न इति पूर्वधकारस्य दकारः सन्निकर्षे । दद्ध्यशान, दध्यशान, शम्म्यत्र, शम्यत्र, मद्ध्वपनय, मध्वपनय, वद्ध्वाननम्, वध्वाननम् । पित्त्रर्थः, पित्रर्थः, लाकृतिः तिरि+अङ् भू+आदयः इति स्थिते इको यञ्भिर्व्यवधानमित्येके तेषामिकः इति पञ्चमी ततः " अस्वे " इत्यस्यायमर्थः इकः परो यञ् भवति अस्वेऽचि परे इति इगिचोर्मध्ये यञ् भवति । तिरियङ्, भूवादयः । दधि+अत्र, शमी+अत्र इति द्विः स्थिते

१२ ह्रस्वो वाऽपदे ॥ १।१।७४ ॥ इकः स्थाने अस्वेऽचि परे ह्रस्वो वा भवति नचेत्ताविगचावेकत्र पदे भवत. ।

१३ अचि ॥ १।१।१२१ ॥ अदीर्घात्परस्याह्चः स्थाने अचि परे द्वे रूपे न भवतः इत्यदीर्घादिति द्वित्वं न भवति । ह्रस्वविधानात् पुनर्यजादेशो न भवति । पक्षे यञ् । दधि अत्र दध्यत्र, शमि अत्र, शम्यत्र । पदे इति किम् ? नद्यौ, वध्वौ ॥ दण्ड+अग्रं, सा+आगता, मुनि+इन्द्रः, नदी+इयम्, मधु+उदकम्, वधू+उदरम् । पितृ+ऋषभः,

पितृ+ऌनकः, पितृ+ऌकारः मातृ+ऌकारः, इति स्थिते ( ऋत्यकः । १।१।१७ ॥ ऋऌोः सावः ॥ १।१।७६ ॥ ) इत्यधिकृत्य

१४ दीर्घः ॥ १।१।७७ ॥ अकः स्थानेऽचि परे परेणाचा सहितस्य तदन्तरो नित्यं दीर्घो भवति। ( अपवादविनिर्मुक्तोऽस्य विषयः, ऌवर्णस्यानुकरणादन्यत्र दीर्घाः न सन्तीति ऋवर्णस्य ऌवर्णे परे ॠकार एव दीर्घः न्याय्य इति मन्तव्योऽपरः ऋतिॠ ( ऋ ) इत्यधिकाराद् ऋवर्णस्य ऌवर्णे परे सन्धौ दीर्घो भवतीत्येतदप्यस्य सूत्रस्यार्थसद्भावात्। दण्डाग्रम्,

**१९ एजूर्ध्यैच्** ॥ १।१।८३ ॥ अवर्णस्य स्थाने एचि ऊचि च परे साचः तयोरासन्न ऐजादेशो भवति । तवैषा, खट्वैन्द्री, तवौदनः, तवौपगवः, धौतः ॥ तव+ओंकारः, उप+एहि, अव+अर्थ्यात् इति स्थिते

**२० ओमाङि परः** ॥ १।१।८६ ॥ अवर्णस्य स्थाने ओंशब्दे आङादेशेऽचि परे साचः परोऽजादेशो भवति । तवोङ्कारः, उपेहि, अवर्थ्यात् ॥ बिम्ब+ओष्ठी, स्थूल+ओतुः इति द्विः स्थिते

**२१ वौष्ठौतौ समासे** ॥ १।१।८८ ॥ अवर्णस्य स्थाने ओष्ठशब्दे ओतुशब्दे च परे साचः परोऽजादेशो भवति वा तौ चेन्निमित्तिनावेकत्र समासे भवतः । पक्षे ऐच् । बिम्बौष्ठी बिम्बोष्ठी, स्थूलोतुः स्थूलौतुः, समास इति किम् ? राजपुत्रौष्ठं पश्य, देवदत्तौतुविजृम्भितम् पश्य । सुख+ऋतः, दुःख+ऋतः इति द्विः स्थिते

**२२ आर्तृतीयाया ऋते** ॥ १।१।८९ ॥ तृतीयान्तसम्बन्धिनोऽवर्णस्य स्थाने ऋतशब्दे परे साचः आरादेशो भवति समासे । अचो होऽहृचः इति वा द्वित्वं । सुखार्तः, सुखार्त्तः, दुःखार्तः, दुःखार्त्तः । समास इति किम् ? सुखेनर्तः । प्र+ऋध्नोति इति स्थिते

**२३ ऋत्यारुपसर्गस्य** ॥ १।१।९१ ॥ उपसर्गस्य यदवर्णं तस्य स्थाने ऋकारादौ धातौ परे साचः आरादेशो भवति । प्रार्ध्नोति । ते+अत्र, पटो+अत्र इति स्थिते

**२४ पदान्तेऽस्येङः** ॥ १।१।९४ ॥ पदान्ते य एङ् तस्य अकारे परे साचः एङ् भवति । तेऽत्र, पटोऽत्र । पदान्त इति किम् ? नयनम्, लवनम् । तकार इति किम् ? तयाङ्गः, पटवास्त्र ।

इत्यच्सन्धिः ।

चादेरित्यनेनापदस्य विशेषणात् अजुमात्रस्य ग्रहणं नाजन्तस्येति । प्रादाव, इतीहेत्यादौ न भवति ।

२९ ओतः ॥ १।१।१०२ ॥ चादेरोकारान्तस्याचि परे यत्प्राप्नोति तत्कार्यं न भवति । इत्येङ्चौ न भवतः । अथो, अस्मै, नो इन्द्रियम् ।

इति निषिद्धकार्यसन्धिः ।

## अथ द्वित्वसन्धिः ।

क्रुङ्+आस्ते, सुगण्+इह, कर्पन्+आस्ते इति स्थिते । ( शरोऽनु द्वे इति वर्तमाने )

**३० ह्रस्वाङ्णमः पदान्ते** ॥ १।१।१२३ ॥ ह्रस्वात् परस्य पदान्ते वर्तमानस्य ङमः स्थाने अचि परे द्वे रूपे भवतः । ( असिद्धं बहिरङ्गमन्तरङ्गे ) इति ( अभिन्ने ) इति णो न भवति । क्रुङ्ङास्ते, सुगण्णिह, कर्पन्नास्ते ॥ कन्या+छत्रम्, इति द्विः स्थिते ।

**३१ दीर्घाच्छो वा** ॥ १।१।१२४ ॥ पदान्ते वर्तमानादीर्घात्परस्य छकारस्य द्वे रूपे भवतो वा ( जरि जरः स्वे ) इत्यधिकृत्य

**३२ चर्** ॥ १।१।११७ ॥ जरः स्थाने जरि परे चरादेशो भवति । कन्याच्छत्रम्, कन्याछत्रम् ॥ देव+छत्रम्, म्ले+छति, आङ्+छिनत्ति, आङ्+छिनत्ति माङ्+छिदत् इति स्थिते ङकारावितौ ईषदर्थादौ वर्तमानस्याकारस्याव्ययस्य च माशब्दस्य परिग्रहणार्थौ ।

**३३ अजाङ् माङः** ॥ १।१।१२६ ॥ अचः आङो, माङश्चाव्ययादुत्तरस्य छकारस्य द्वे रूपे भवतः । चरिति चैत्त्व । देवच्छत्रम्, म्लेच्छति, आच्छिनत्ति, माच्छिदत् । ङकारौ किम् ? आच्छायायाम्, आछायायाम् । वाक्ये स्मरणे वायमाकारो वर्तते । उपमाच्छत्रम्, उपमाछत्रम् । उभयत्रापि ( दीर्घाच्छो वा ) इति वा द्वित्वम् ।

इति द्वित्वसन्धिः ।

## अथ व्यञ्जनसन्धिः ।

अच्+मात्रम्, ककुप्+मण्डलम्, वाक्+मधुरा, षट्+नयाः, तत्+नयनम् इति द्विः स्थिते

**३४ झलो जश् ॥** १।१।७५ ॥ झलः पदान्ते वर्तमानस्य जश् भवति ।

**३५ हलोऽनुनासिकेऽनुनासिकः स्वः ॥** १।१।१०६ ॥ पदान्ते वर्तमानस्य हलः स्थाने अनुनासिके परे स्थानिनः स्वोऽनुनासिक आदेशो भवति वा । अञ्मात्रम्, अज्मात्रम्, ककुम्मंडलम्, ककुब्मंडलम् वाङ्मधुरा वाग्मधुरा, षण्नयाः षड्नयाः, तन्नयनम्, तद्नयनम् । वाङ्मयम्, मधुलिट्+मानम् इति स्थिते पूर्ववज्जस्त्वम् ।

**३६ प्रत्यये ॥** १।१।१०७ ॥ पदान्ते वर्तमानस्य हलः स्थाने अनुनासिकादौ प्रत्यये परे स्थानिनः स्वोऽनुनासिक आदेशो नित्यं भवति । वाङ्मयम्, गुडलिण्मानम् । भ्रस्जति, मस्जति, तद्चरति, तद्छादयति, तद्जयति, तद्झापयति, तद्ञकारेण इति स्थिते

**३७ श्चौ श्चू स्त्वोः ॥** १।१।१३७ ॥ सकारतवर्गयोः शकारे चवर्गे चोपश्लिष्टयोः शकारचवर्गौ क्रमेणादेशौ भवतः । समवचने यथासंख्यं शैलीयमाचार्यस्य । जपि जरिति जस्त्वं चर्त्वं च मज्जति, भ्रज्जति, तचरति, तच्छादयति, तजयति, तज्झापयति, तज्ञकारेण, तञ्ञकारेण ॥ हलोऽनुनासिकेऽनुनासिकः स्वः । इति विकल्पेन ञकारः १ तत्+टीकते, तत् ठकारेण, तद्+डीनम्, तत्+ढौकते, तत्+णकारेण इति स्थिते

**३८ ष्टौ ष्टूः ॥** १।१।१३८ ॥ सकारतवर्गयोः षकारे टवर्गे चोपश्लिष्टयोः षकारटवर्गौ क्रमेणादेशौ भवतः । चरिति चर्त्वम् । तट्टीकते, तट्ठकारेण तड्डीनम्, तड्ढौकते, तड्णकारेण, तण्णकारेण । पक्षे णत्वम् ।

**३९ न शात्** ॥ १।१।१३९ ॥ शकारात्परयोः तथोः श्चुत्वं न भवति । अश्नाति, क्लिश्नाति ।

**४० टोः पदान्तेऽनाम्नगरीनवतेः** ॥ १।१।१४० ॥ पदान्तात् टवर्गादुत्तरस्य ष्टुत्वं न भवति । नामनगरीनवतिशब्दान् वर्जयित्वा । मधुलिट् सीदति, अनाम्नगरीनवतेरिति किम् ? षण्णाम् । "प्रत्यये" इति णत्वम् । षण्णगरी, षड्णगरी । षण्णवतिः षड्णवतिः । हल इत्यादिना पक्षे णत्वम् ।

**४१ तोः षि** ॥ १।१।१४१ ॥ तवर्गस्य पदान्ते वर्तमानस्य षकारे परे ष्टुत्वं न भवति । अग्निचित् *षडिक । महान् षण्डः ॥ त्वम्+करोषि, त्वम्+चरसि, त्वम्+टीकसे, त्वम्+तरसि, त्वम्+पठसि, अभ्रम्+लिहः, त्वम्+यासि, त्वम्+वहसि, त्वम्+लोकसे, इति द्वि स्थिते पदान्तेऽस्येङः इत्यधिकृत्य

**४२ मम्मो हलि वा** ॥ १।१।१११ ॥ ममागमस्य पदान्ते वर्तमानस्य च मकारस्य हलि परे निमित्त स्थोऽनुनासिकोऽनुस्वारश्च पर्यायेण भवति । त्वङ्करोषि, त्वं करोषि, त्वञ्चरसि, त्वं चरसि, त्वण्टीकसे, त्वं टीकसे, त्वन्तरसि, त्वं तरसि, त्वम्पठसि त्वं पठसि, अभ्रँलिह अभ्रंलिह, त्वय्ँयासि, त्वं यासि, त्वव्ँवहसि त्वं वहसि, त्वल्ँलोकसे, त्वं लोकसे । अस्वसंज्ञके हलि परे अनुस्वार एव भवति । त्वं रमसे, त्वं शेषे इति । वाक्+शोभना, वाक्-श्लक्ष्णा, षट्+श्यामा, तत् श्वेतम्, तत् श्लोक इति द्वि. स्थिते जश्त्वम्

**४३ शश्छोऽमि** ॥ १।१।१४४ ॥ पदान्ते वर्तमानाज्झय उत्तरस्य शकारस्यामि परे छकारो वा भवति पुनश्चर्त्वेरचुत्वे । वाक्छोभना, वाक् शोभना, वाक् श्लक्ष्णा, वाक् छ्लक्ष्णा, षट् छ्यामा, षट् श्यामा, तच्छ्वेतम्,

* षड् अङ्गुलयो यस्य स षडङ्गुलि, अनुकम्पित षडङ्गुलि इति षडिक ।

तच्छ्लेतम्, तच्छ्लोक', तच्श्लोकः । श्चुत्वेन चकारः । क्रुङ्शेते सुगण् शेते इति त्रिः स्थिते

४४ ङ्णोः गक् डक् शरि ॥ १।१।१।१४५ ॥ पदान्ते वर्तमानयो ङकारणकारयोः शरि परे गक् डक् इत्येतावागमौ वा भवतः । तौ च

४५ किदन्तः ॥ १।१।१५४ ॥ किद्यो यस्य विधीयते स तस्यावसानावयवो भवति । गडयोरकारः उच्चारणार्थः ककारः अन्त्यविध्यर्थः । शश्छोऽमीति पक्षे छत्वं चर्त्वं च । क्रुङ्क्छेते, क्रुङ्क्शेते, क्रुङ्शेते । सुगणट् छेते, सुगणट्शेते, सुगण् शेते ॥ भवान् शूरः इति त्रिः स्थिते---

४६ नः शिजक् ॥ १।१।१४७ ॥ नकारस्य पदान्ते वर्तमानस्य शकारे परे जगागमो भवति वा । अकारककारौ पूर्ववत् । शश्छोऽमीति छत्वं चर्त्वं च ।

४७ म्नां जय्यपदान्ते ॥ १।१।१०९ ॥ अपदान्ते मकारनकारयो. जयि परे परस्वोऽनुनासिक आदेशो भवति । अन्यत्र श्चुत्वेन ञकारः । भवाञ्छूरः । भवाञ्च्शूरः । भवाञ्शूरः ॥ भवान्+छादयति, भवान्+ठकारीयति, भवान्+थुडति, भवान्+चरति, भवान्+टीकते, भवान्+तरति इति द्विः स्थिते कांस्कान् सीसक् । १।१।१४९ ॥ इति प्रस्तुत्य

४८ छव्यम्प्रशानः ॥ १।१।१५० ॥ प्रशान्वर्जितो यो नकारस्तस्य पदान्तस्याम्परे छवि परतः सीँ इत्यादेशः सक्चागमः पर्यायेण भवति । ईकारककारावितौ, ईकारः रीस्योरिति विशेषणार्थः । ककारोऽन्त्यविध्यर्थः । अकार उच्चारणार्थः ।

४९ रीस्योः ॥ १।१।१०८ ॥ पदान्ते वर्तमाने रेफे सकारे च ईकारानुबन्धे परे यः पूर्वस्तस्य स्थाने स्वोऽनुनासिको भवति ।

५० शल्यनुस्वारः ॥ १।१।११० ॥ मकारनकाराणामपदान्ते वर्तमानानां स्थाने शलि परे अनुस्वारो भवति । श्चुत्वेन सकारस्य शकारः ष्टुत्वेन च षकारः । भवाँश्छादयति, भवांश्छादयति, भवाँष्टकारीयति, भवांष्टकारीयति, भवाँस्थुडति, भवांस्थुडति, भवाँश्चरति, भवांश्चरति, भवाँष्टीकते, भवांष्टीकते, भवाँस्तरति, भवांस्तरति । अप्रशान् इति किम् ? प्रशान्चिनोति ॥ तत्+लुनाति, भवान्+लिखति इति स्थिते

५१ लिलः ॥ १।१।१४२ ॥ पदान्ते वर्तमानस्य तवर्गस्य लकारे परतो लकारादेशो भवति । अनुनासिकस्यानुनासिकः । तल्लुनाति । भवाँल्लिखति ॥ अच्+हलौ, त्रिष्टुप्+हुतम्, वाक्+हसति पट्+हलानि, तत्+हितम्, इति द्विः स्थिते पूर्ववज्जश्त्वम्

५२ जशो हो झष् वा ॥ १।१।१४३ ॥ पदान्ते वर्तमानाज्जशः परस्य हकारस्य स्थाने यथासंख्यं झषादेशो वा भवति । अज्झलौ, अज्हलौ, त्रिष्टुब्भुतम्, त्रिष्टुब् हुतम्, वाग्घसति, वाग्हसति, पड्ढलानि, पड्हलानि, तद्धितम्, तद् हितम् ।

इति व्यञ्जनसन्धिः ।

---

## अथ विसर्जनीयसन्धिः ।

मुनिः+अस्मि, पितः+दयसे इति स्थिते

५३ विसर्जनीयस्य ॥ १।१।१६१ ॥ विसर्जनीयस्यापि परे रेफादेशो भवति । मुनिरस्मि, पितर्दयसे । कः+तरति, कः+थुडति, तपः+चरति, यशः+छत्रम् कः+टीकते, कः+ठकारेण इति स्थिते

५४ सश्छव्यशरि ॥ १।१।१६३ ॥ विसर्जनीयस्य स्थाने अशर्परे छवि परतः सकारो भवति । श्चुत्वष्टुत्वे च । कस्तरति, कस्थुडति, तपश्चरति,

यशश्छत्रम्, कष्टीकते, कष्टकारेण ॥ तपः शोभते, कः+षण्ढे, कः+-सरति इति द्विः स्थिते

**५५ शरि वा ॥ १।१।१६४ ॥** विसर्जनीयस्य सकारो वा भवति शरि परे । श्चुत्वष्टुत्वे च ॥ तपश्शोभते, तपः शोभते, कष्षण्ढे, कः-षण्ढे, कस्सरति, कः सरति ॥ कः करोति, कः खनति, कः पठति, कः फलति इति द्विः स्थिते

**५६ कुपौ≍क≍पम् ॥ १।१।१६६ ॥** विसर्जनीयस्य कवर्गीये पवर्गीये चाशर्परे खयि परे यथासंख्यं≍क≍प इत्येतावादेशौ वा भवतः । कपावुच्चारणार्थौ, क≍करोति कः करोति । क≍खनति, कः खनति । क≍पठति, कः पठति, क≍फलति, कः फलति । सर्पिः≍करोति, सर्पिः पिबति, धनुः खण्डयति धनुः फलति इति त्रिः स्थिते

**५७ इसुसोऽपेक्षायाम् ॥ १।१।१६७ ॥** इस् उस् प्रत्ययान्तस्य सम्बन्धिनो विसर्जनीयस्य कवर्गीये पवर्गीये चाशर्परे खयि परे सिर्वा भवति स्थानिनिमित्तपदे चेत्परस्परापेक्षायां भवतः । किञ्नः सः पिः ॥१।२।६९ ॥ शर्नमः ॥१।२।६१॥ इति परिभाषासूत्रे उपतिष्ठेते

**५८ शास्वसिघसिसिकृतस्यासक्सातोऽबहुपदात् ॥ १।२।६५ ॥** कवर्गादिञ्नः किञ्नुपराच्च शर्नमः परस्य शासिवसिघसीनां सेः कृतस्य च सगागमसस्थानिकसात्प्रत्ययवर्जितस्य सकारस्य षिरादेशो भवति न चेत्स बहुप्रत्ययकपदाच्च परो भवति । इकार उच्चारणार्थः । अन्यत्र+ क≍पौ । सर्पिष्करोति, सर्पि+करोति, सर्पिः करोति । सर्पिष्पिबति, सर्पि ≍पिबति, सर्पिः पिबति, धनुष्खण्डयति धनु≍ खण्डयति, धनुःखण्डयति, धनुष्फलति, धनु≍फलति, धनुः फलति । अपेक्षायामिति किम् ? तिष्ठतु सर्पि≍पिब त्वमुदकम्, तिष्ठतु सर्पिः पिबत्वमुदकम् ।

इति विसर्जनीयसन्धिः ।

## अथ स्वादिसन्धिः ।

श्रमण+अस्मि, धार्मिक+दयते, धर्म+जयति इति स्थिते

**५९ एकद्विबहौ ॥ १।२।७५ ॥** एकत्वादिसंख्येऽर्थे वर्तमानात् शब्दाद्यथासंख्यमेकद्विबहुष्वर्थेषु सु औ जस् भवन्ति । ते च प्रत्ययः कृत्तोऽष्टया इति प्रत्ययसंज्ञकत्वात्–परः ॥ १।१।१४४ । इति प्रकृतेः परा एव भवन्ति ।

**६० सुङ् पदम् ॥ १।१।६२ ॥** सुङिति प्रथमैकवचनादारभ्य आमहिङो ङकारात् प्रत्याहारः सुङन्तं पदसंज्ञं भवति इति पदसंज्ञायाम्–

**६१ सजूरहस्सोऽतिप्यकस्स्रन्सुध्वन्सोरिः ॥ १।२।७२ ॥** सजुष् अहन् इत्येतयोरन्त्यस्यालः सकारस्य च पदान्ते वर्तमानस्य रिर्भवति फसुस्रन्सुध्वन्सु इत्येतान् वर्जयित्वा न चेत्तिप्परो भवति । इकारो रेर्थः ॥ १।१।१२६ ॥ इति विशेषणार्थः ।

**६२ अतोऽह्न्युः ॥ १।१।१५७ ॥** अकारात्परस्य रेः स्थाने अकारे हशि च परे उकार आदेशो भवति । इत्येङ् इत्योकारः । पदान्तोऽत्येङः इति एङ् । श्रमणोऽस्मि, धर्मो जयति । धार्मिको दयते ॥ देवधार्मिकशब्दाभ्यां । एकद्विबहौ ( ५९ ) इति जस्, जकार इत्

**६३ एदे ॥ १।२।१०६ ॥** अकारान्तस्यापदस्य एकारे अकारे च परे लुक् भवति । इति लुचि प्राप्तायाम् तदपवादः

**६४ भ्यत्याः ॥ १।२।१६२ ॥** भकारयकारादौ अकारादौ जसि शसि च सुपि परे अकारस्याकारो भवति । पुनर्दीर्घ इति दीर्घः । देवास् यान्ति, धार्मिकास् दयन्ते, वृक्षर् हसति, अघवत् हससि, भगवत् देहि, भवत् देहि इति स्थिते सकारस्य रिः उकारः उगित्कार्यार्थः । वृक्षर् शब्दात् सुः अघवदादिभ्यः

**६५ आमन्त्र्ये** ॥ १।३।६५ ॥ आमन्त्र्यसम्बोधनेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं स्यौजसो भवन्ति । इति सुः

**६६ उगिदचोऽनेधादेः** ॥ १।२।११४ ॥ उगित् यस्य, तस्य अनेधादेः अञ्चतेश्च तत्सम्बन्धिन्यन्यसम्बन्धिनि वा शौ अनपुंसकविषये च सुटि परे नुमागमो भवति । स च

**६७ मिदचोऽन्त्यात्** ॥ १।१।४५ ॥ मकारानुबन्धकोऽन्त्यादचः परो भवति । अकार उच्चारणार्थः । मकार आदेशविषयार्थः ।

**६८ हलङ्याब्दीर्घाल्लुक्** ॥ १।१।१२० ॥ हलः ङी आडिति दीर्घाभ्यां च परस्य स्यनप्सुटः सोर्लुग्भवति । सुङ् पदमिति पदसंज्ञायाम्

**६९ पदस्य** ॥ १।२।९२ ॥ संयोगान्तस्य पदस्य लुग्भवति स च अस्मात् सूत्रादुत्तरस्मिन् कार्ये कर्तव्ये असन् भवति ।

**७० षष्ठ्याः स्थानेन्तेऽलः** ॥ १।१।४७ ॥ षष्ठ्यन्तस्यार्थस्य विधीयमानो विधिः तस्य योऽन्त्योऽल् तस्य स्थाने भवति इति तकारस्य भवति ।

**७१ वोशनोशनन्नघोभगोभोःस्वमर्थेकामन्त्रणे** ॥ १।२।१२१ ॥ उशन उशनन् अघोर् भगोर् भोर् इत्येते शब्दा वा निपात्यन्ते एकामन्त्रणे स्यनप्सुट परत स्वमोश्च लुक् । असिद्धसम्बन्धस्य कार्यान्तरं प्रत्यभिमुखीकरणमामुखीकरणम् कार्यान्तरव्यापृतस्य स्वाभिमुखीकरणमन्त्र्यम् । इत्यनशब्दस्यौकारः नकारस्य च रि ।

**७२ रेर्यः** ॥ १।१।१५६ ॥ अवर्णाद्घोभोभगोइत्येतेभ्यश्च परस्य रेरपि परे यकारो भवति ।

**७३ व्योऽप्यघो भो भगोः** ॥ १।१।१५३ ॥ अवर्णादघोभोभगो इत्येतेभ्यश्च परस्य वकारस्य यकारस्य चापि लुग्भवति । देवा यान्ति,

भार्मिका दय-ते, वृक्ष हसति, अघो हससि, मो देहि, भगो देहि। पटो उ, अघवत् अत्र, भवत् अत्र, भगवत् अत्र इति द्विःस्थिते ओकार-स्यावादेशः अघवत्वादीनाम यकारादेशात् पूर्ववत्प्रक्रिया।

७४ अच्यस्पृष्टश्च ।१।१।१५४। अवर्णादघो मो भगो इत्येतेभ्यश्च परयोः पदान्तयोः वकारयकारयोरचि परे ग्लुगस्पृष्टश्रुतिश्च प्रशिथिलस्थानकरणपरिस्पन्दश्चासन्नः वकारो यकारश्चादेशो भवति। ग्लुचि गित इति प्रतिषेधात्, " इक्येङर् " पदान्तेऽल्येङः " इति चैङ्न भवति। पटउ पटवुँ। अघोअत्र, अघोयँत्र। मोअत्र, मोयँत्र। भगोअत्र, भगोयँत्र। निपातनाभावे " ह्रस्वान्ङमः पदान्ते " इति द्वित्वम्। अघवन्नत्र, भवन्नत्र, भगवन्नत्र॥ पटो इह, असौ इन्दुः, ते आहुः, तस्मै आसनम्, कस् आस्ते, देवास् आसते, इति त्रिः-स्थिते अवायादेश सजूरहस्स इत्यादिना रिः " रेर्यः " इति तस्य यः।

७५ वानुव्यात् ॥ १।१।१५५ ॥ अवर्णात् परस्य पदान्ते वर्तमानस्य वकारस्य यकारस्य च उञ्वर्जितेऽचि परे ग्लुगस्पृष्टश्रुतिश्चासन्न आदेशो वा भवति। ग्लुचि " गित " इति प्रतिषेधात् एङ्दीर्घौ न भवतः। पट इह, पटविहँ, पटविह। असा इन्दुः, असाविन्दुः, असाविन्दुः। त आहुः, तयाँहुः, तयाहुः। तस्मा आसनम्, तस्मायाँसनम्, तस्मायासनम्। कआस्ते, कयाँस्ते, कयास्ते। देवा आसते देवायाँसते, देवायासते। लिट् ढं, गुड् ढं, पुनर् रात्रौ, अग्निस् रथेन, पटुस् राजा इति स्थिते—

७६ ॥ अव्ययात्स्वौजस् । १ । ३ । ९७ ॥ अव्ययात् सु औ जस् इत्येते प्रत्यया भवन्ति।

७७ ॥ अव्ययस्य ॥ १। २। १५४ ॥ अव्ययस्य सम्बन्धिनः सुपः लुग्भवति। इति लुक्। सजूर्हस्स इत्यादिना रिः।

७८ ॥ रः पदान्ते विसर्जनीयः ॥ १। १। ६७ ॥ रेफस्य पदान्ते वर्तमानस्य विसर्जनीयो भवति। तस्य विसर्जनीयस्य इति पुनः रेफः। डांञ्भाजोऽतो लुगितौ ॥ १। १। १२७ ॥ इत्यधिकृत्य—

७९ ॥ ढ्रो ढ्रि ॥१।१। १३१ ॥ ढकारस्य रेफस्य च यथासंख्यं ढकारे रेफे च परे लुग्भवति।

८० ॥ ढ्रलुच्यणः ॥ १।१। १८० ॥ ढकारस्य रेफस्य च लुचि सत्यां पूर्वस्याणो दीर्घो भवति। लीढम्। गूढम्। पुनारात्रौ। अग्नीरथेन। पटूराजा ॥ मनस्+रथः, वेधस्+ राजा इति स्थिते ताभ्यां सु. तस्य हलो ङ्याद्दीर्घाल्लुक् इति लुक्, सकारस्य रिः। अस्य अतोऽह्व्युरित्युत्वं प्राप्नोति ढ्रोढ्रि इति लुक् न तत्र—

८१ ॥ स्पर्द्धे ॥ १।१।४६ ॥ द्वयोर्विध्योः अन्यत्र सावकाशयोस्तुल्यबलयोरेकत्रोपनिपातः स्पर्द्धस्तस्मिन् य. सूत्रपाठे परः स विधिर्भवति। इत्युत्वम्। इवयेङ् इत्येङ्। मनोरथः। वेधोराजा।

परं स्यात्पूर्वपरयोर्नित्यं स्यात् परनित्ययोः।
नित्यात्तथान्तरङ्गं स्यात्ततोऽप्यनवकाशकम् ॥

एतद्+करोति, तद्+गागच्छति, इति स्थिते ताभ्यां सुः (तोष्टानाम् ।१।२।२१५ ॥ इत्यधिकृत्य—

८२ ॥ त्सौ चात् ।१।२।२१६ ॥ त्यदादीनामष्टानां तत्सविधिनि सुपि त्सौ च परे अकारो भवति स च षष्ठ्याः स्थानेऽन्तेऽल इति दकारस्य भवति। " एदे " इति पूर्वाकारस्य लुक्।

८३ ॥ तोष्टानाम् । १।२।२१५ ॥ त्यदादीनामष्टानां तकारस्य तत्सम्बन्धिनि सौ सकारो भवति । सोः रिः । ,

८४ ॥ हल्यन्समासे लुक्तः साद् । १। १। १५८॥ तकारस्थानिकात् सकारात् परस्य रेः हलि परे लुग् भवति न चेत्स सकारो नञ्समासे भवति । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्याद् भवति । इदंकारव्यवधानेऽपि भवति । व्यतिरेकवृत्त्या अकारस्य व्यवधानत्वे सति रेः लुक् तस्मादनित्यव्यवधानत्वं कपत्ययस्य तस्मादिति यावत् । शाश्वसीत्यादिना कृतस्य सकारस्य पिः । ढ्लुच्यणः इति, दीर्घो ढ्रो ढ्रि इति लुचि भवतीति इह न भवति दीर्घस्य ढ्लुच्येव साहचर्यात् । एष करोति । स गच्छति । हलीति किम्? एषोऽस्मि, सोऽस्मि । अनञ्समासे इति किम्? अनेषो गच्छति, असो गच्छति ।

इति सन्धिसिद्धिः।

# अथ नामसिद्धिरुच्यते ।

द्विविधं नाम, अजन्तं हलन्तं चेति । तदष्टविधमपि भवति १ पुंलिङ्गम् २ स्त्रीलिङ्गम् ३ नपुंसकलिङ्गम् ४ स्त्रीपुंलिङ्गम् ५ पुंनपुंसकलिङ्गम् ( वृक्षादिशब्दाः ) ६ स्त्रीपुन्नपुंसकलिङ्गम् ७ स्त्री-नपुंसकलिङ्गम् ८ अलिङ्गं चेति ( अव्ययम् ) । पुनः पञ्चविधमपि एकवचनवत्, द्विवचनवत् बहुवचनवत् सवचनवत् अवचनं चेति । तत्राजन्तेषु पुंल्लिङ्गेषु प्रथममकारान्तात् पुंलिङ्गात् स्वभावादेकत्वादि-मदर्थवृत्तिकात् वृक्षशब्दात् प्रथमादिसप्तविभक्तयः परा योज्यन्ते । वृक्ष इति त्रिःस्थिते "एकद्विबहौ" इत्येकत्वे एकवचनं सुः, द्वित्वे

द्विवचनमौ, बहुत्वे बहुवचनं जस्। उजावितौ उक्तार्थौ। "सुप्तिङन्तं पदम्" इति पदसंज्ञायां सकारस्य रिः विसर्जनीयश्च। औकारे एज्ञ्चैजिति ऐच्। जसि भ्यत्या इत्याकार. पुनः दीर्घः। वृक्षः वृक्षौ वृक्षाः। तिष्ठति, तिष्ठतः, तिष्ठन्तीति क्रियाभिसम्बन्धश्च कार्यः। आमन्त्रणे "आमन्त्र्ये" इति स्वौजसो भवन्ति इति षष्ठ्यपवादः।

८५ ॥ ह्रस्वोऽन्नित्याटः ।१।१२।१२२। अकारान्तस्य नित्याटश्च एकामन्त्रणे स्यत्प्सुटि परे ह्रस्वो भवति सोरमश्च लुक्। औजसोः पूर्ववत्प्रक्रिया। आमन्त्रणाभिव्यक्तयर्थं केचित् हे भो अयो अरे इत्यादय प्राक् प्रयोज्यन्ते। हे वृक्ष, हे वृक्षौ, हे वृक्षाः। किं? तिष्ठसि, किं? तिष्ठथः, किं? तिष्ठत इत्यादिक्रियाभिसंबन्धश्च कार्यः। कर्मणि वृक्ष इति स्थिते (अप्रधानेऽमौट्शस्। १।३। १००। इति वर्तमाने)

८६ ॥ कर्मणि ॥ १।३।१०५ ॥ क्रियत इति कर्म तस्मिन्नप्रधानेऽर्थे वर्तमानाच्छब्दात् एकद्विबहुषु यथासंख्यं अमौट्शसो भवन्ति। परार्थमप्रधानम्। टशावितौ। टकारः सुडिति प्रत्याहारार्थः, शकारः शस्यक इति विशेषणार्थः। (तस्मादादेः। १।१।४८। इति परिभाषोपतिष्ठते)

८७ मोऽणोऽमः १।२।४६ ॥ अणः परस्याम आदेर्मकारो भवति। इति अकारस्य मकारः। 'पदस्य' इति मकारस्य लुक्। औटश्चैच्। शसि भ्यत्या इत्याकारे,

८८। नन्तः पुंसः। १।१।७९॥ अः पुल्लिङ्गसंबन्धिनि शस्यचि परे परेणाचा सहितस्य यथासंख्यं नकारान्तो दीर्घो भवति। इत्यानादेश.। सकारस्य पदस्येति लुक्। प्रात्तो णः ॥ १।२।५०॥

इति परिभाषोपतिष्ठते ।

८९ ॥ अभिन्ने । १।२।५६ ॥ षाभ्यां परस्य नकारस्य णो भवति नो चेत् स्थानिनिमित्ताद् भिन्ने अन्यस्मिन् पदे वर्तते । स च,

९० श्चुल्टुस्तौ नान्तरे ॥ १।२।५१ ॥ शकारे, चवर्गे, लकारे टवर्गे, सकारे, तवर्गे च स्थानिनिमित्तयोर्मध्ये सति णो न भवति प्रतिषेधसामर्थ्यात् अन्यैर्व्यवधानेऽपि भवतीति णत्वे प्राप्ते,

९१ ॥ अन्तक्षुभ्नादीनाम् । १।२।५४ ॥ पदान्तस्य क्षुभ्नादीनां च नकारस्य णो न भवति । वृक्षं, वृक्षौ, वृक्षान् पश्यतीति क्रियाभिसंबन्धः । कर्तृकरणयो वृक्ष इति त्रिःस्थिते ( टाभ्यांमिस्सिद्धौ १।३।१२७ ॥ ) इत्यधिकृत्य,

९२ । हेतुकर्तृकरणेत्थंभूतलक्षणे ॥ १।३।१२८ ॥ फलसाधनयोग्यः पदार्थो हेतुः । यः करोति स कर्ता । येन क्रियते तत्करणम् । इत्थं कथंचित्प्रकारमापन्न इत्थंभूत. स लक्ष्यते येन तदित्थंभूतलक्षणम् । एतस्मिन्नप्रधानार्थे वर्तमानादेकद्विबहुषु यथासंख्यं टाभ्यांमिसो भवन्ति । ट इत् । नातः ॥ १।२।१५६ ॥ इत्यधिकृत्य—

९३ ङसास्येस्स्येनाद्यम् ॥ १।२।१६५ ॥ अकारात्परेषां ङस्, आ, असि, ए इत्येतेषां सुपां स्य, इन, आत् य इत्येते आदेशा यथासंख्यं भवन्ति । इति टाया इनः । " इययेङ् " इत्येङ् । " अभिन्ने " इति णत्वम् । भ्यामि, " भ्यत्या " इत्याकारः । भिसि—

९४ ॥ ऐस्भिसोऽद्यशः ॥ १ । २ । १६४ ॥ अकारात्परस्य सुपो भिसः स्थाने ऐसादेशो भवति, दकारादेशो यो मकारस्तस्मात् इदमादेशाद्यशः परस्य तु न भवति । स च, शिद-

ङिदल् ॥ १।१।४९ ॥ इति सर्वस्य स्थाने भवति । एजूच्यैच् इत्यैच् रेः विसर्जनीयश्च । वृक्षेण, वृक्षाभ्यां, वृक्षैः । कर्तरि स्थीयते इत्यादिक्रियाभिसम्बन्धः, करणे हन्तीत्यादिक्रियाभिसम्बन्धः । संप्रदाने वृक्ष इति त्रिः स्थिते समोशोऽस्मृतौचाप्ये ॥१।३।१२२॥ दाणाधर्मे तङ् च देयै. ।१।३।१२३॥ इति प्रस्तुत्य—

९५ ॥ ङेभ्याम्भ्यस् ।१।२।१३४॥ देयैराप्येऽप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङे भ्याम् भ्यसो भवन्ति । ङकार इत् अन्यत्र च ङितो याट् इति विशेषणार्थः । ङेयै, भ्यत्याः इत्याकारः । भ्यामि च तथा । भ्यसि—

९६ ॥ बहोसिभ्स्येत् ॥ १।२।१६३ ॥ सकारादौ भकारादौ बहुविषये ओसि च सुपि परे अकारस्यैकारो भवति रेर्विसर्जनीयश्च । वृक्षाय, वृक्षाभ्याम्, वृक्षेभ्यः जलं ददाति इत्यादिक्रियाभिसम्बन्धः । अपादाने वृक्ष इति त्रिःस्थिते ङसिभ्यांभ्यस्तो-कालश्रुतिपयकृच्छ्रादसत्त्वे ॥ १।३।१२४॥ इत्यधिकृत्य—

९७ ॥ अपायेऽवधौ ॥ १।३।१५६ ॥ अपायो विभागो विश्लेषः तस्मिन् विषये निर्दिष्टे प्रतीयमाने वा योऽवधिरपादानं तस्मिन्नप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङसिभ्याम्भ्यसो भवन्ति । ङकार इत् "ङसेरातो" इति विशेषणार्थः । ङसेरात् । शेषं गतम् । दीर्घः । भ्यामि भ्यसि च पूर्ववत् । वृक्षात्, वृक्षाभ्यां, वृक्षेभ्यः । पततीत्यादिक्रियाभिसम्बन्धः । स्वस्वाम्यादिसम्बन्धे वृक्ष इति त्रिःस्थिते,

९८ ॥ ङसोसाम् ॥ १।३।१६२ ॥ अप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङसोसामो भवन्ति । अपवादविनिर्मुक्तोऽ-

स्य विषयः । ङसः स्यः, ओसि "बहोसिस्म्येत्" इत्येत्वम् यादेशो रेविसर्जनीयश्च । आमि नामामः १ । २ । ३२ ॥ इति प्रस्तुत्य—

९९ । नमृह्स्वाद्साटः ॥ १ । २ । ३३ ॥ नमन्तात् ह्रस्वान्तात् संभवदाटश्च शब्दात् परस्यामो नाम् भवति ।

१०० ॥ नाम्यतिसृचतुष्पः ॥ १ । २ । १४० ॥ नाम्यादेशे तिसृचतुरूषकारान्तवर्जितस्य पूर्वोऽण् दीर्घो भवति । अभिन्ने इति णत्वम् । वृक्षस्य, वृक्षयोः, वृक्षाणाम् । फलमित्यादिसम्बन्धः । अधिकरणे वृक्ष इति त्रिःस्थिते ङीनोङ्योस्सुप् । १ । ३ । १७१ ॥ इत्यधिकृत्य—

१०१ । आधारे । १ । ३ । १७६ ॥ क्रियाश्रयस्य कर्तुः कर्मणो वा आधारोऽधिकरणं तस्मिन्नप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङिओस्सुपो भवन्ति । पकार इत सुपिति प्रत्याहारग्रहणार्थः । ङ्यक्येडर् ऐत्येङ् । ओसि पूर्ववत् । सुपि "बहोसिस्म्येत्" इत्येत्वं च शाखसीत्यादिना कृतस्यावयवस्य सकारस्य षिः । "सिद्धत्यधातोः" इति पदत्वेऽपि सातः षित्वनिषेधादबहुपदादिति प्रतिषेधो न भवति । वृक्षे, वृक्षयोः, वृक्षेषु कपिस्तिष्ठति इत्यादि क्रियायोगः । उक्तरूपसमुच्चयः कर्तव्यः । वृक्षः वृक्षौ वृक्षाः । हे वृक्ष हे वृक्षौ हे वृक्षाः । वृक्षम् वृक्षौ वृक्षान् । वृक्षेण वृक्षाभ्यां वृक्षैः । वृक्षाय वृक्षाभ्यां वृक्षेभ्यः । वृक्षात् वृक्षाभ्यां वृक्षेभ्यः । वृक्षस्य वृक्षयोः वृक्षाणां । वृक्षे वृक्षयोः वृक्षेषु ॥ एवमन्येषामकारान्तानां पुल्लिङ्गानां शल्क, गण्ड, करण्ड, वरण्ड, षण्ड, मुख, खण्ड, मुण्डादीनां सप्तसु विभक्तिषु रूपसिद्धिः क्रियायोगश्च द्रष्टव्यः । सर्वादीनां प्रक्रियाविशेषोऽस्ति के पुनः

स्य विषयः। ङसः स्यः, ओसि "बह्वोसिस्येत्" इत्येत्वमयादेशो रेर्विसर्जनीयश्च । आमि नामामः १ । २ । ३२ ॥ इति प्रस्तुत्य--

९९ । नमह्रस्वाद्साटः ॥ १ । २ । ३३ ॥ नमन्तात् ह्स्वान्तात् संभवदाटश्च शब्दात् परस्यामो नाम् भवति ।

१०० ॥ नाम्यतिसृचतुष्पः ॥ १ । २ । १४० ॥ नाम्यादेशे तिसृचतुरषकारान्तवर्जितस्य पूर्वोऽग् दीर्घो भवति । अभिन्ने इति णत्वम् । वृक्षस्य, वृक्षयोः, वृक्षाणाम् । फलमित्यादिसम्बन्धः । अधिकरणे वृक्ष इति त्रिःस्थिते ङ्योस्त्सुप् । १ । ३ । १७१ ॥ इत्यधिकृत्य--

१०१ । आधारे । १ । ३ । १७६ ॥ क्रियाश्रयस्य कर्तुः कर्मणो वा आधारोऽधिकरणं तस्मिन्नप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङिओस्सुपो भवन्ति । पकार इत सुबिति प्रत्याहारग्रहणार्थः । ङस्येऽर् इत्येङ् । ओसि पूर्ववत् । सुपि "बह्वोसिस्येत्" इत्येत्वं च शास्वसीत्यादिना कृतस्यावयवस्य सकारस्य षिः । "सिद्धस्यधातोः" इति पदत्वेऽपि सातः षित्वनिषेधादबहुपदादिति प्रतिषेधो न भवति । वृक्षे, वृक्षयोः, वृक्षेषु कपिस्तिष्ठति इत्यादिक्रियायोगः । उक्तरूपसमुच्चयः कर्तव्यः । वृक्षः वृक्षौ वृक्षाः । हे वृक्ष हे वृक्षौ हे वृक्षाः । वृक्षम् वृक्षौ वृक्षान् । वृक्षेण वृक्षाभ्यां वृक्षैः । वृक्षाय वृक्षाभ्यां वृक्षेभ्यः । वृक्षात् वृक्षाभ्यां वृक्षेभ्यः । वृक्षस्य वृक्षयोः वृक्षाणां । वृक्षे वृक्षयोः वृक्षेषु ॥ एवमन्येषामकारान्तानां पुलिङ्गानां शल्क,-गण्ड, काण्ड, वरण्ड, षण्ढ, मुख, खण्ड, मुण्डादीनां सप्तसु विभक्तिषु रूपसिद्धिः क्रियायोगश्च दृष्टव्यः । सर्वादीनां प्रक्रियाविशेषोऽस्ति के पुनः

सर्वादयः— सर्व, विश्व, उभ, उभयट्, अन्य, अन्यतर, इतर, डतर, डतम, त्व, त्वद्, नेम, सम, सिम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, अदस्, इदम्, एतद्, एक, द्वि, युष्मद्, अस्मद्, भवत्, किम् इति । एतेषां सर्वादीनां युष्मदस्मद्वर्जितानां आश्रयवशात् लिङ्ग भवतीति त्रिलिङ्गत्वम् । यदा पुंलिङ्गस्तदा नीयते । सर्वादीनां जसि ङस्याम्ङेङिष्वेव विशेषोऽस्ति अन्यत्र वृक्षशब्दवत् । सर्व इति त्रिःस्थिते ततः स्वादय – सर्वः, सर्वौ । सर्व अस् इति स्थिते—

१०२ ॥ जसः शिः । १ । २ । १६७ ॥ अकारान्तानां सर्वादीनां सम्बन्धिनो जसः स्थाने शि इत्ययमादेशो भवति । शकार इत् स च,

१०३ ॥ शिदङ्किदल् ॥ १ । १ । ४९ ॥ शिच्चाङ्किदनेकाल्चादेशः षष्ठ्यन्तस्य सर्वस्य स्थाने भवति । इति सर्वादेश एङ् । सर्वे । हे सर्व हे सर्वौ हे सर्वे । सर्वम्, सर्वौ, सर्वान् । सर्वेण, सर्वाभ्यां, सर्वैः । ङयि—

१०४ ॥ सर्वादेर्ङेङस्योः स्मिन् स्मात् स्मै । १ । २ । १६६ । सर्वादेर्गणस्य सम्बन्धिनां ङि ङसि ङे इत्येतेषां सुपां यथासंख्यं स्मिन् स्मात् स्मै इत्येते आदेशा भवन्ति । इति स्मै । सर्वस्मै, सर्वाभ्याम्, सर्वेभ्यः । ङसेः स्मात् । सर्वस्मात्, सर्वाभ्याम्, सर्वेभ्यः । सर्वस्य, सर्वयोः । आमि—

१०५ ॥ सामामः १ । २ । १७६ ॥ अवर्णान्तानां सर्वादीनां सम्बन्धिन आमः स्थाने साम् भवति । पुनः " बह्वोसिस्म्येत् " इत्येत्वं शास्वसीत्यादिना षत्व च । सर्वेषाम् । ङे स्मिन् ।

सर्वस्मिन् सर्वयोः सर्वेषु । एवं विश्व उभ उभयट् अन्य अन्यतर इतर शब्दाः । उभशब्दस्य द्विवाचित्वात्ततो द्विवचनमेव । अन्यतर शब्दः डतरप्रत्ययान्तः । स च डतमप्रत्ययान्त ( अन्यतम ) निवृत्त्यर्थमुपादीयते । उभयटः टकारः स्त्रियां ङ्यर्थः । डतर डतम प्रत्ययौ तदन्ता यतरततरएकतरयतमततमएकतमप्रभृतयो गृह्यन्ते । ते च,

( अन्तरं बहिर्योगोपसंव्यानयोरपुरि ) बहिर्योगे बहिर्भावेन बाह्येन वा योगे उपसंव्याने उपसंवीयमाने च वर्तमानं अन्तरमित्येतत् सर्वादि भवति, बहिर्योगेऽपि न पुरि । पूर्वादीनां जसङसिङिषु विशेषोऽन्यत्र सर्वशब्दवत् ।

१०६ ।। नवपूर्वावादौ ॥ १ । २ । १७२ ॥ पूर्वादयो नव अकारादौ इकारादौ च सुपि परे सर्वादयो वा भवन्ति । पूर्वे, पूर्वाः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादयोऽपि नेतव्याः । त्यदादीनां सप्तानां किम्शब्दस्य च अतकारान्तत्वेऽपि प्रसौचात् इत्यत्वस्य किमः क इति कादेशस्य च विधानादकारान्तत्वम् । त्यद् इति स्थिते ततः स्वादयः ॥ प्रसौचात् ॥ इति दकारस्याकारः ॥ एदे ॥ इति पूर्वाकारस्य लुक् ॥ सौ तोष्ठानाम् इति तकारस्य सकारः । पुनः सर्वशब्दवत्—स्यः, त्यौ, त्ये । हे स्य, हे त्यौ, हे त्ये । त्यम्, त्यौ, त्यान् । त्येन, त्याभ्यां, त्यैः । त्यस्मै, त्याभ्यां, त्येभ्यः । त्यस्मात्, त्याभ्यां, त्येभ्यः । त्यस्य, त्ययोः, त्येषाम । त्यस्मिन्, त्ययोः, त्येषु । तदः सः, तौ, ते इत्यादि । यदः—यः, यौ, ये इत्यादि सर्वशब्दवत् । अदस्शब्दस्य भेदः । अदस इति स्थिते ततः स्वादयः । सौ—

१०७॥ औत्सुलुक्चादसोऽनोः।१।२।२१२॥ अनुकारान्तस्यादसः सौ परत औकारो भवति तस्य सोर्लुक्च भवति।। अत्वापवादः।

१०८ ॥ दस्सः।१।२॥२१४॥ अदसो दकारस्य सौ परे सकारो भवति।। ऐच् असौ। अन्यत्र सर्वत्र "मसोऽचात्" इत्यत्वे एदे इति लुक्।

१०९ ॥ द्रो मोऽस्यादसो मादुश्चाविन्यसन्।१।२।४४॥ अदस इत्येतस्यावर्णान्तस्य दकारस्य मकारो भवति तस्माच्च मकारात्परस्यालः स्थाने मु इत्यादेशो भवति सच मु' विनाभावान्यस्मिन् कार्ये कर्तव्ये असन् अलब्धात्मा पूर्वावस्थो भवति। इति दकारस्य मकारः। ततोन्तरङ्गत्वात् मु' तस्य ऐजादिकार्ये कर्तव्ये असत्त्वात् "एजूत्यैच्" इति ऐजि कृते मु'। उत्तरत्राप्येव द्रष्टव्यम्। स च आसन्न इति दीर्घ एव भवति। गकारो "गित" इति सन्धिप्रतिषेधार्थ। अमू। जसः शि एद् मत्व च।

११० ॥ मीबहुत्वे.॥१।२।४६॥ बहुषु वर्तमानस्य अदसो मकारात्परस्य एकारस्थाने मी इत्ययमादेशो भवति। मोरपवादः। गकारो गित इति सन्धिप्रतिषेधार्थः। अमी। आमन्त्रणेऽप्यविशेषः। अमि–"मोऽणोऽमः" इति मत्वे मुत्वम्। अमुम्। औटि अमू। शसि–"नन्तः पुंस" इति आनादेशे मुत्वम्। अमून्। टायाम्–अपिनीति वचनात् मुत्वे कृते—

१११ ॥ इसस्त्यद्वन्द्वपतीदुत्॥१।१।४०। इकारान्तमुकारान्त च शब्दरूपं घिसंज्ञं भवति सखिशब्द द्वन्द्वान्त-

यवं पतिगव्वं च वर्जयित्वा । इति घिसंज्ञायाम्—

११२ ॥ नास्त्रीटः । १ । २ । २७ ॥ घेः परस्य अस्त्रीविषयस्य टस्तृतीयैकवचनस्य ना इत्यादेशो भवति । अमुना । भ्यामि भ्यत्या इत्यात्वं मत्वं गुत्वं च । अमूभ्याम् । भिसः अद्मश इति प्रतिषेधात् ऐस् न भवति "बन्होसिहभ्येत्" इति गत्वे गीत्वम् । अमीभिः । ङेः स्मैभावे अपितीति वचनात् असत्त्वाभावात् पत्वं च । अमुष्मै । अन्यत्राप्येवं द्रष्टव्यम् । अमूभ्याम् अमीभ्यः । अमुष्मात्, अमूभ्याम्, अमीभ्यः । अमुष्य । ओसि गत्वे अयादेशे च कृते गुत्वम् । अमुयोः, अमीषाम् । अमुष्मिन्, अमुयोः, अमीषु इति । इदम्शब्दस्य च भेदः । इदम इति त्रिःस्थिते स्वादयः ।

११३ ॥ सौ ॥ १।२।१०९ ॥ इदमस्त्यदादिसम्बन्धिनि सौ परे मकारो भवति । अत्वापवादः ।

११४ ॥ पुंसीदोऽय् ॥१।२।२१०॥ पुंसि वर्तमानस्य इदमस्त्यदादिसम्बन्धिसौ परे इद्रूपस्य अय् भवति इयोऽपवादः । हल्ङ्याडित्यादिना सोर्लुक् । अयम् । अन्यत्रात्वम्—

११५ ॥ दो मः ॥ १।२।२०९ ॥ इदमस्त्यदादिसम्बन्धिनि सुपि परे दकारस्य मकारो भवति । इमौ । जसः शिः । इमे । आमन्त्रणेऽप्यविशेषः । इमम् इमौ इमान् । टायाम्—

११६ ॥ टौस्यनः ॥ १ । २ । २०७ ॥ इदमः ककाररहितस्य त्यदादिसम्बन्धिनि टायामोसि च सुपि परे अन इत्यादेशो भवति । ट इनः । अनेन । भकारसकारादौ सुपि,

११७॥ अकः ॥ १ । २ । २०६ ॥ इदमः ककाररहितस्य

सकारभकारयकारादिके त्यदादिसम्बन्धिनि सुपि परे अशादेशो भवति । शकारः सर्वादेशार्थः । भ्यस्या इत्याकारः । आभ्याम् । भिसः अद्यश इति प्रतिषेधात् ऐस् न भवति । एत्वम् एभिः । अस्मै, आभ्याम् , एभ्यः । अस्मात् , आभ्याम् , एभ्यः । अस्य । ओसि–" टौस्यन " इत्यनादेशः । अनयोः, एषाम् । अस्मिन् , अनयोः, एषु । अन्वादेशे—

११८ ॥ इदमः । १ । २ । २०४ ॥ इदम् इत्येतस्य त्यदादिसम्बन्धिनि द्वितीयाटौसि परे अन्वादेशविषये एनत् भवति । कथितानुकथनमन्वादेशः । " प्रसौचात् " इत्यत्वम् । " एदे " इति लुक् । एनम् , एनौ, एनान् । एनेन । एनयोः । एनयोः । एतद्शब्दस्य तु एषः , एतौ, एते इत्यादि नेयम् । अन्वादेशे— त्यदांद्वितीयाटौस्येनदेतदः ॥ १ । २ । २०३ ॥ इत्येनदादेशः । एनम् , एनौ, एनान् । एनेन । एनयोः । एनयोः । एकशब्दस्य एकः एकौ एके इत्यादि सर्वशब्दवत् । यदा एकशब्द एकत्वसंख्यायां वर्तते तदा एकवचनमेव सर्वत्र भवति । एकः, एकम् , एकेन इत्यादि । द्विशब्दस्य द्वित्ववाचित्वाद् द्विवचनमेव, अत्वं च । द्वौ, हे द्वौ, द्वौ, द्वाभ्याम्, द्वाभ्याम् द्वाभ्याम्, द्वयोः, द्वयोः । किमूशब्दस्य–

११९॥ किमः कः ।१।२।२१७॥ किम त्यदादिसम्बन्धिनि सुपि परे क इत्ययमादेशो भवति । इति कादेशः । कः, कौ, के इत्यादि नेयम् । त्यद्युष्मद्भवदस्मद्शब्दाः अत्वाभावादुत्तरत्र निरूप्यन्ते । असंज्ञायां सर्वादीनि शब्दरूपाणि संज्ञायां सर्वादीनि न भवन्ति । यथा सर्वनामा कश्चित् तस्मै सर्वाय

देहि इति भवति । नेमादीनां तयप्रत्ययान्तस्य च जसि भेदोऽन्यत्र वृक्षशब्दवत् । नेमशब्दस्य तु सर्वादित्वात् सर्वशब्दवत् ।

१२०॥ **नेमार्द्धप्रथमचरमाल्पकतिपयतयस्य वा** ॥१।२।१६८ नेमादीनां तयप्रत्ययान्तस्य च सम्बन्धिनो जसः शिर्वा भवति । एङ् च । नेमे नेमाः । अर्द्धे, अर्द्धाः । प्रथमे, प्रथमाः । चरमे, चरमाः । अल्पे, अल्पाः । कतिपये, कतिपयाः । द्वितये, द्वितयाः । तीयप्रत्ययान्तस्य ङेङसिङिषु भेदोऽन्यत्र वृक्षशब्दवत् ।

१२१ ॥ **तीयं ङिति** । १ । २ । १७३ ॥ तीयप्रत्ययान्तं शब्दरूपं ङिति परे सर्वादि वा भवति । इति सर्वादित्वात् स्मयादिः । द्वितीयस्मै, द्वितीयाय । द्वितीयस्मात्, द्वितीयात् । द्वितीयस्मिन्, द्वितीये । एवं तृतीयशब्दः । आकारान्तस्त्रिलिङ्गः सोमपा शब्दः तत्र पुल्लिङ्गो नीयते । धेट्, पा, पाने इति पा इत्ययं धातुः पानार्थे पठ्यते । पा इति स्थिते तस्य—

१२२ ॥ **क्रियार्थो धातुः** ॥ १ । २ । २२ ॥ क्रिया प्रवृत्तिः पूर्वापरीभूता साध्यमानरूपा अर्थोऽभिधेयो यस्य स शब्दो धातुसंज्ञो भवति । इति धातुसंज्ञायाम् । सोम इत्युपपदम् ततः द्वितीयैकवचनं अम् । सोमं पिबतीति विग्रहे वदः क्यप् च सुप इति वर्तते तत्र यथासंभवं दृशिग्रहणात् ॥ द्विर्धातुः स्लुल्लिङ्केप्रत्यये प्राक्त्वन्यचः ॥ ४।१।४३ ॥ इत्यतो धातुरिति च वर्तते, स च प्रत्ययसन्निधाने पञ्चम्यन्तं परिणमते ।

१२३ ॥ **मन्वन्क्वनिब्विच्च दृश्यते** ॥४।३।१७९॥ सुबन्तात्परान्धातोः मन् वन् क्वनिप् विच् क्विप् च प्रत्ययो दृश्यते । इति क्विप् विच् वा स च—

१२४ ॥ ध्यायतिङ् कृत् ।१।१।४३। घ्यणादि प्रत्ययरूपं तिङ्वर्जितं कृत्संज्ञं भवति । इति कृत्संज्ञत्वात्—

१२५॥ कृल्लोऽतुन्त्राम् ॥ ४।३।४५ ॥ तुम् क्त्वा आम् इत्येतद्वर्जिताः कृतो लकाराश्च प्रत्यया कर्तरि भवन्ति । इति कर्तरि भवति। स सर्वोऽप्रयोगी । ककार· अक्ङस्लुग्घेतौ ।४।२।१७॥ इति ग्ङरानिषेधार्थ. । इकार उच्चारणार्थ. । वकारः भजोविणाऽसमत्वार्थ.। पकार: ह्रस्वस्य पिति कृति तगिति विशेषणार्थः। तत. पाशब्दात् सु सोम अम् पा सु इति प्रकृतिसुपां अकृतकार्ये अलौकिकपदद्वये स्थिते सुप्सुपा समासो बहुलम् । २।१।१। इति वर्तमाने—

१२६ ॥ स्वकृताऽस्युक्तम् । २ । १ । २२ । अस्युक्तं सुबन्तं सुबन्तेन स्वकृदन्तेन नित्यं समस्यते तत्पुरुषसंज्ञकश्च समासो भवति । ( संख्याल्पा समासे ।२ । १ । १२२ । इति प्रस्तुत्य )

१२७ ॥ प्रत्ययस्य च सुपः श्लुक् । २ । २ । १ ॥ समासस्य प्रत्ययस्य च निमित्तस्य सुप. श्लुग् भवति । अन्तरङ्गानपि विधीन् बहिरङ्ग. श्लुग् बाधते इति प्रतिपक्षकार्यान्तरस्य सुप. श्लुक् ।

१२८ ॥ सूक्तं पूर्वम् । ३ । १। १०८ ॥ समासस्य विधाने सुना प्रथमान्तेन निर्दिष्टं पद पूर्वं प्रयोक्तव्यम् । इति सोमशब्दस्य पूर्वनिपात । सोमपा इति स्थिते स्वादय· । सुत्यविशेषः । सोमपा·, सोमपौ, सोमपाः । सोमपाम्, सोमपौ । शसादावजादौ—

१२९ ॥ आतोऽनाङः श्लुक् ॥ १ । २ । १५१ ॥ अपदस्य आकारस्य गीत्येतस्मिन् सुटछिण्याङ्विर्जिते चान्यस्मिन् सुपि परे श्लुग्भवति आङं वर्जयित्वा। सोमपः। सोमपा। हलादावविशेष । सोमपाभ्यां, सोमपाभि. । सोमपे, सोमपाभ्याम्, सोमपाभ्यः। सोमप, सोमपाभ्याम्, सोमपाभ्यः। सोमप·, सोमपो·, सोमपाम्। सोमपि, सोमपो·, सोमपासु। स्त्रियामप्येवं रूपम्। एवं क्षीरपाम्बुपादयः। इकारान्त. पुल्लिङ्गो रविशब्द.। रवि इति स्थिते स्यादय.। सोः रिर्विसर्जनीयश्च रविः। औकारे—

१३०॥ इदुतो गिर्ग्वौतोऽस्त्रेः । १।२।२७। इकारादुकाराच्च परस्य ओकारस्य सुप. स्थाने यथासंख्यं गिः गुश्चादेशौ भवतः स्त्रीशब्देकारं वर्जयित्वा। गकारो गित इति सन्धिप्रतिषेधार्थः। ततो दीर्घ । रवी। जसि—

१३१॥ जस्येद् ॥ १।२।२३ ॥ इकारस्य उकारस्य च जसि परे एङ् भवति । अयादेशः, रेर्विसर्जनीयश्च । रवय. । एकामन्त्रेण—

१३२ ॥ ह्रस्वैतो लुचि चारेङ् ॥१।१२५ ॥ ह्रस्वान्तस्य एदन्तस्य चैकामन्त्रणे लुचि इयनप्सुटि च परे अरेङ् चासन्नः आदेशो भवत. सोश्च लुक्। हे रवे। औजसोरविशेष। हे रवी, हे रवय। अमि "मोऽणोऽम" इति मत्वम्। रविम्। औटि रवी। शसि नन्त पुंस इति ङेनादेश। रवीन्। टायाम् "नास्त्रीट" इति नादेश "अभिन्ने" इति णत्वम्। रविणा। हलादावविशेषः। रविभ्याम्, रविभि । ङेङसूङसिङिपु—

१३३ ॥ ङयेइ् ॥ १।२।२८ ॥ घिसंज्ञकस्य ङकारादौ सुपि परे एङ् भवति । अयादेशः । रवये, रविभ्याम्, रविभ्यः ।

१३४ ॥ एङो लुक् ॥ १।२।१०५ ॥ अपदस्य एङ्परस्य ङसिङसोरकारस्य लुग्भवति । रेर्विसर्जनीयः । रवेः रविभ्याम् रविभ्यः । रवेः । ओसि "अस्वे" इति यण् । रव्योः । आमः "नमृह्रस्वाद्सादः" इति नाम्यादेशः, नाम्यतिसृचतुष्पः इति दीर्घः णत्वं च । रवीणाम् ।

१३५ ॥ घेर्डौरनाटि १ । २ ।२६ ॥ घिसंज्ञकात्परो यो ङिस्तस्यानाटः डौ इति डिदौकारो भवति । डकारोऽप्रयोगी । अन्त्याजादिलुगर्थः ।

१३६ ॥ डित्यन्त्याजादेः ॥ १।२।१०७॥ अचां सन्निविष्टानां योऽन्त्योऽच् तदादेः शब्दरूपस्य डिति परे लुग्भवति । रवौ, रव्योः । शास्यसीत्यादिना षिः । रविषु । एवं ध्वनि-मुनिकलिपलिकेलिकपिफणिवह्निशृङ्गिअग्निशुचिप्रभृतयः । सखि-शब्दस्याभयलिंगस्य विशेषः । सखि इति स्थिते स्यादयः । सम्बुद्धिर्मा इत्यधिकृत्य—

१३७ ॥ ऋदुशनस्पुरुदंशोऽनेहसः सेः ॥ १ । २ । ११९ ॥ ऋकारान्तात् इकारान्तसखिशब्दाच्च उशनस्, पुरुदंशस्, अनेहस् इत्येतेभ्यश्च परस्य स्यनन्तुटः सेर्डादेशो भवति । डकारोऽन्त्याजादिलुगर्थः । सखा । औटि—

१३८ ॥ सखित ऐच् ॥ १ । २ । १३० ॥ इकारान्तस्य सखिशब्दस्य नामसम्बन्धिनि अन्यसम्बन्धिनि वा स्यनन्तुटि परे ऐकारो भवति नत्वेकामन्त्रणे । आयादेशः । सखायौ, सखायः । एकारान्ते—

१३९ ॥ न ङाल्लुक् ॥ १।२।१२९॥ ङा च न्लुक्चैकामन्त्रणे न भवतः। इति प्रतिषेधान्न ङादेशः। ह्रस्वैत इत्यादिना एङ् सोश्च लुक्। हे सखे, हे सखायौ, हे सखायः। सखायम्, सखायौ। शसि नन्तः पुंस इति ईनादेशः। सखीन्। घिसंज्ञाभावात् टायां नादेशो न भवति। यत्रादेशः। सख्या। हलादावविशेषः। सखिभ्यां, सखिभिः। घिसंज्ञाभावात् एङ् न भवति। सख्ये, सखिभ्याम्, सखिभ्यः। ङसिङसोर्यत्रादेशे कृते—

१४०॥ ख्यत्य उः॥ १।२।१०४॥ अपदस्य ख्यत्य इत्यनङ्कार्यां परस्य ङसिङसोरकारस्य उकारो भवति। रेर्विसर्जनीयश्च। सख्युः, सखिभ्याम्, सखिभ्यः। सख्युः, सख्योः, सखीनाम्।

१४१ ॥ ङिरौत्। १। २। २४॥ इकारादुकाराच्च परस्य ङि इत्येतस्य औ इत्ययमादेशो भवति। सख्यौ, सख्योः, सखिषु। पतिशब्दस्य सुटि रविशब्दवत् अन्यत्र सखिवत्। पतिः, पती, पतयः। हे पते, हे पती, हे पतयः। पतिम्, पती, पतीन्। पत्या, पतिभ्याम्, पतिभिः। पत्ये, पतिभ्याम्, पतिभ्यः। पत्युः, पतिभ्याम्, पतिभ्यः। पत्युः, पत्योः, पतीनाम्। पत्यौ, पत्योः, पतिषु। त्रिशब्द आश्रयलिङ्गः। आद्याभ्यः संख्या बहुविषया इत्यतो बहुवचनमेव। त्रयः, हे त्रयः, त्रीन्, त्रिभिः, त्रिभ्यः, त्रिभ्यः। आमि—

१४२ ॥ त्रेस्त्रयः ॥ १।२।३५॥ त्रिशब्दस्यामः संबन्धिनः त्रय आदेशो भवति। नमुह्रस्वाद्साट इति नामादेशः नाम्यातिसृचतुरम इति दीर्घः। णत्वञ्च। त्रयाणाम्, त्रिषु। कति-

शब्दस्यालिङ्गस्य विशेषः । किम् इति स्थिते ततः सुः का संख्या मानमेषामिति विग्रहे—

१४३ ॥ किमश्च संख्यायां डतिश्च । ३।२।७१ ॥ संख्याया यन्मानं तद्वृत्ते. तदिति प्रथमान्तात् किम्शब्दात् यद्तद्भ्याञ्च षष्ठ्यर्थे संख्येये मेये डतिप्रत्ययो भवति यतुश्च । डकारोऽन्त्याजादिलुगर्थः । प्रत्ययस्य च सुपः श्लुक् इति सोः श्लुक् स्वभावादेव बहुत्वाद्बहुवचनमेव भवति ।

१४४ ॥ डतिष्णां संख्यानां जश्शसः ॥ १।२।१५२ ॥ डतेः षकारनकारान्तायाश्च संख्यायाः संबन्धिनो जस्शस् इत्येतस्य सुपः श्लुग् भवति । कति तिष्ठन्ति । कति पश्य । कतिभिः, कतिभ्यः, कतिभ्यः, कतीनाम्, कतिषु । त्रिषु लिङ्गेषु समानं रूपम् । एवं यत्तदोर्यतितिशब्दौ । ईकारान्त आश्रयलिङ्गो ग्रामणीशब्दः । णीञ् प्रापणे । णीञ् इति स्थिते ञकारोऽप्रयोगी "ञीदिदपवदानुपसर्गेऽ इति तदर्थः । तथैव धातुसंज्ञायाम्—

१४५ ॥ आदेःष्णोऽष्वष्कष्टयाष्ठीवःस्नम् ॥ ४।२।२६१ ॥ पाठे इति वर्तते, ष्वष्कष्टयाष्ठीव्वर्जितस्य धातोः षकारस्य णकारस्य च धातुपाठे आदिभूतस्य यथासंख्यं सकारो नकारश्चादेशौ भवतः । ग्रामशब्दाद्ग्रामं नयति इति विग्रहे । "मन्वनकनिव्विच दृश्यते" इति क्विप् सच "घ्यायतिङ्कृत्" इति कृत्संज्ञकत्वात् " कृतोऽतुमत्वाम् ।" इति कर्तरि भवति । स सर्वोऽप्रयोगीत् । प्रयोजनं पूर्ववत् । " स्वकृताऽस्युक्तम् " इति रागाग "प्रत्ययस्य च सुपः श्लुक्" इति सुपः श्लुक् । सूत्रं

पूर्वम् इति ग्रामशब्दस्य पूर्वनिपातः ।

१४६ ॥ ग्रामाग्राण्णीः ॥ २।२।१६६ ॥ ग्रामाग्राभ्यां परस्य नी इत्येतस्य णत्वं निपात्यते ग्रामणी इति स्थिते ततः स्यादयः। सौ पूर्ववत्। ग्रामणीः। अजादौ—

१४७ ॥ प्रत्ययेऽसुधीणः ॥ १ । २ । ४० ॥ तिना कारके ण च समस्तस्य कृतसमासस्य अनेकाचश्च धातोः सुधी इण् इत्येतद्वर्जितस्य इवर्णस्याजादौ प्रत्यये परे यत्रादेशो भवति न चेत्स इवर्णस्तस्य धातोरवयवात् संयोगात् परो भवति । ग्रामण्यौ, ग्रामण्यः । आमन्त्रणेऽप्यविशेषः । हे ग्रामणीः, हे ग्रामण्यौ, हे ग्रामण्यः । अमि "मोऽणोऽमः" इति भवन्तं सकारं बाधित्वा परत्वात् यत्र् । ग्रामण्यम् ग्रामण्यौ ग्रामण्यः । ग्रामण्या । हलादावविशेषः ग्रामणीभ्याम् ग्रामणीभ्यः । ग्रामण्य', ग्रामणीभ्याम्, ग्रामणीभ्यः । ग्रामण्य', ग्रामण्यो', ग्रामण्याम् । ङौ–

१४८ ॥ न्यंशादाम् । १ । २ । २५ ॥ नी इत्येतस्मात् अंशादवयवात् याटः आटश्च परस्य ङेराम् भवति । ग्रामण्याम्, ग्रामण्यो', ग्रामणीषु । एवमन्येऽप्यग्रणीसेनानीप्रभृतयः । स्त्रीलिङ्गेऽप्येवं रूपम् । उन्नीशब्दस्य भेदः । णीञ् प्रापणे । णीञ् इति स्थिते । ञकारोऽप्रयोगीत्, नत्वम्,

१४९ ॥ तस्यागतार्थाधिपर्यर्चास्वत्यतिक्रमात्युपसर्गः प्राक् च । १ । १ । २५ ॥ तस्य धातोस्संबन्धी तदर्थद्योती प्रादिरुपसर्गसंज्ञको भवति प्राक्च ततो धातोर्भवति यौ गतार्थौ अधिपरी इति अर्चायां स्वती इति यश्चातिक्रमविषयोऽतिरिति तानेतान् वर्जयित्वा । के पुनः प्रादयः– प्र, परा, अप,

सम्, अनु, अव, निर्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप्, इति प्रादयो विंशतिः। इति उत्पूर्वं उन्नयति इति विगृह्य पूर्ववत् क्विबादि कर्तव्यम्।

१५० ॥ डाच्च्व्यूर्याद्यनुकरणं च ति। १। १। २६॥ डाजन्तं, च्व्यन्तं, ऊरीत्येवमादिकमनुकरणं उपसर्गसंज्ञञ्च धातोस्संबन्धि तिसंज्ञं भवति। तस्वन्डामधणतस्याङ्क्त्वान्तुन्तिसुङ्स्स्वाभस्वरादीन्यव्ययम्। १।१। ३९॥ इति अव्ययसंज्ञकत्वात् उदित्यतः " अव्ययात् स्वौजस् " इति सुप् " एकद्विबहौ " इति सुः। उद्स् नीस् इति स्थिते—

१५१ ॥ तिदुस्स्वत्याङ्क्न्यस्तत्पुरुषः ॥ २। १। २० तिसंज्ञको दुस्, सु, अति, आङ्, कु, इत्येतानि चाव्ययानि सुबन्तानि सुपा नित्यं समस्यन्ते सच समासोऽन्यो बहुव्रीह्यादिलक्षणरहितः तत्पुरुषसंज्ञो भवति। प्रत्ययस्य च सुपःश्लुक्। " हलोऽनुनासिकेऽनुनासिकः स्वः " इति नकारः। उन्नी इति स्थिते स्वादयः। उन्नीः उन्न्यौ उन्न्यः इत्यादि ग्रामणीशब्दवत्। स्त्रीलिङ्गेऽपि समानं रूपम्। नीशब्दस्य भेदः। णीनः नत्वे क्विबादि नी इति स्थिते हलादावविशेषः। नीः। अजादौ—

१५२ ॥ भ्रूहल्श्नोश्चेयुवौ। १।२।४१ ॥ भ्रूशब्दस्य हल उत्तरस्य श्नुप्रत्ययस्य धातोश्चेवर्णोवर्णयोः अजादौ प्रत्यये परे यथाक्रमम् इय् उव् इत्येतावादेशौ भवतः। नियौ, नियः। नियम्, नियौ, नियः। निया, नीभ्याम्, नीभिः। निये नीभ्याम् नीभ्यः। नियः, नीभ्याम्, नीभ्यः। नियः, नियोः, नियाम्। नियाम्, नियोः, नीषु। स्त्रियामप्येवं रूपम्। सुधीशब्दस्य भेदः।

ध्यै चिन्तायाम्, डुधाञ् धारणे च । डुशब्दञकारावप्रयोगीतौ । डुशब्दः ड्वितोऽथुच् ॥ ४ । ४ । ५७ । इति विशेषणार्थः ञकारस्तदर्थः प्राक् सुप्रयोगः सुष्ठु ध्यायति दधाति वा इति विगृह्य क्विप्, तिङ्स्वतीत्यादिना समासः सुपः श्लुक्। प्रत्ययेऽसुधीणः इत्येतस्मिन् सूत्रे सुधीति निपातादेव ध्यायतेः साचो यत्र इक् दीर्घश्च । दधातेस्त्वीकारः । सुधी इति स्थिते स्यादयः सुधीः । इयादेशः सुधियौ, सुधियः इत्यादिनीशब्दवत् । एवं सुश्र्यादयः । उकारान्तः पुल्लिङ्ग कारुशब्दस्तस्यापि रविवत् प्रक्रिया, इयांस्तु विशेषः औकारयोर्गुः । उकारस्यौकारः अव् चेति । कारुः, कारू, कारवः । हे कारो, हे कारू, हे कारवः । कारुम्, कारू, कारून् । कारुणा, कारुभ्याम्, कारुभिः । कारवे, कारुभ्याम्, कारुभ्य । कारोः, कारुभ्याम्, कारुभ्यः । कारोः, कार्वोः, कारूणाम् । कारौ, कार्वोः, कारुषु । एवं धातुभानुक्रतुपटुप्रभृतयः । क्रोष्टुशब्दस्य भेदः । क्रोष्टु इति स्थिते स्यादयः ।

१५३ ॥ क्रोष्टोः क्रोष्टृ । १ । २ । १३१ ॥ क्रोष्टुशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा श्यनप्सुटि परे क्रोष्टृ इति तृप्रत्ययान्त आदेशो भवति न चैकामन्त्रणे । ऋत्सखीत्यादिना डादेशोऽन्त्याजादिलुक् । क्रोष्टा । औटि—

१५४ ॥ ऋयौटघुतोऽपदस्यार् । १ । २ । १०२ ॥ अपदस्य ऋकारस्यौटि परे अर् भवति । इत्यर् ।

१५५ ॥ त्रप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रदीर्घः ॥ १ । २ । १३३ ॥ तृप्रत्ययान्तस्याबादीनाञ्च तत्संबन्धिन्यन्यसं-

न्धिनि वा श्यनप्सुटि परे तदासन्नोऽकारो दीर्घो भवति न चैकामन्त्रणे। क्रोष्टारौ क्रोष्टारः। हे क्रोष्टा हे क्रोष्टारौ, हे क्रोष्टारः। क्रोष्टारम्, क्रोष्टारौ। शसि परे नन्तः पुंस इति ऊनादेशः क्रोष्टून्। टादावजादौ—

१५६॥ वान्यापि। १। २। १३२॥ क्रोष्टुशब्दस्य तत्सम्बन्धिनि अन्यसंबन्धिनि वा तृतीयैकवचनादावजादौ सुपि परे क्रोष्टृ इत्यादेशो वा भवति। यत्रादेशस्तत्र अस्वे इति यत्, आदेशाभावे कारुशब्दवत्। क्रोष्ट्रा क्रोष्टुना, क्रोष्टुभ्याम्, क्रोष्टुभिः। क्रोष्ट्रे क्रोष्टवे, क्रोष्टुभ्याम्, क्रोष्टुभ्यः। ङसिङसोः—

१५७॥ ङातो डुः।१।२।१०३॥ अपदात् ऋकारात्परस्य ङसिङसोरकारस्य डु इति डिदुकारो भवति। अन्त्याजादिलुक्। क्रोष्टुः क्रोष्टोः, क्रोष्ट्रोः क्रोष्ट्वोः। आमि नित्यत्वात् नामादेशेन क्रोष्टृभावो बाध्यते। क्रोष्टूनाम्। क्रोष्टरि क्रोष्टौ, क्रोष्ट्रोः क्रोष्ट्वोः, क्रोष्टुषु। ऊकारान्त आश्रयलिङ्गः खलपूशब्दः। पूञ् पवने। ञकारस्तदर्थः। धातुसंज्ञायां खलशब्दादम खलं पुनातीति विगृह्य क्रियादि कार्यम्, "स्वकृतास्युक्तम्" इति समासः। सुपः श्लुक्। स्वादयः खलपू। अजादौ सुपि—

१५८॥ धातोस्तिकारकमसमस्तानेकाचोऽत्तसंयोगाद्य्य्वोः १।२।३८॥ तिना कारकेण च यो धातुः समस्तः कृतसमासः यश्चानेकाच् तस्य यौ इवर्णोवर्णौ तयोरजादौ सुपि परे यव् भवति न चेत्तौ इवर्णोवर्णौ तस्य धातोरवयवात् संयोगात्परौ भवतः। खलप्वौ, खलप्वः। हे खलपूः, हे ख-

लप्वौ, हे खलप्वः । खलप्वम्, खलप्वौ, खलप्वः । खलप्वा । हलादावविशेषः । खलपूभ्यां, खलपूभिः । इत्यादि नेयम् । एवं यवलू उल्लूशब्दौ यवपूर्वस्य उत्पूर्वस्य च लूञ् छेदने इत्यस्य सिद्धौ । लूशब्दस्य तु उवादेशः लूः, लुवौ, लुवः इत्यादि । प्रतिपूर्वात् भू सत्तायामित्यतः क्विबादिः, स्वादयः । प्रतिभूः । धातोस्तिकारकेत्यादिना यव् न भवति ॥ **दृन्पुनःकरवर्षाभिभुवः । १ । २ । ३९ ॥** दृन्नादिभिरेव कृतसमासस्य भू इत्येतस्य यव् भवति नान्यैः । इति नियमात् उवादेशः । प्रतिभुवौ प्रतिभुवः । इत्यादि । स्त्रियामप्येतेषामेयं रूपम् । एवं स्वयंभूमित्रभूप्रभृतयः । ऋकारान्तः पुल्लिङ्गः पितृशब्दः पितृ इति स्थिते स्वादयः । सौ **ऋत्सखीत्यादिना डादेशः** । पिता अजादौ " ङ्यौट्यृतोऽपदस्यार् " इति अरादेशः अतृप्रत्ययान्तत्वात् त्रप्स्वस्त्रित्यादिना दीर्घो न भवति । पितरौ, पितरः । एकामन्त्रणे " न डान्लुक् " इति प्रतिषेधान्न डादेशः । ह्रस्वेत इत्यादिना अर् । हे पितः, हे पितरौ, हे पितरः । पितरम्, पितरौ । शसि " नन्तःपुंस " इति ऋनादेश. पितॄन् । अजादौ यश्चादेश. पित्रा, पितृभ्याम् पितृभि. । पित्रे, पितृभ्याम्, पितृभ्यः । ङसिङसोः " डातो ङुः " इति ङुः । पितुः, पितृभ्याम्, पितृभ्यः । पितुः, पित्रोः । आमो नमुह्रस्वाट्साट इति नाम् " नाम्यतिसृचतुष्षः " इति दीर्घः ' अभिन्ने ' इति णत्वम् । कथमत्र णत्वं पकाररेफाभावादिति चेन्न ऋवर्णमध्ये रेफस्य प्रतिज्ञानात् भवति । एतच्च णत्वप्रतिषेधे तृप्नोतिग्रहणाद्विज्ञायते पितृ-

णाम् । पितरि, पित्रोः, पितृषु । एवं भ्रातृजामातृप्रभृतयः । नृशब्दस्यापि विशेषोऽन्यत्र पितृशब्दवत्—

१५९ ॥ नुर्वा ॥ १ । २ । १४१ ॥ नृ इत्येतस्य नामि परे पूर्वोऽग्दीर्घो भवति वा । नृणाम्, नृणाम् । तृप्रत्ययान्तस्य मातृशब्दस्य भेदः । माङ् माने । ङकारस्तङर्थः । मा इति स्थिते धातुसंज्ञायां मिमीते इति विग्रहे—

१६० ॥ ण्वुतृज्लिहादिभ्यश्च । ४ । ३ । ८५ ॥ धातोर्लिहादिभ्यश्च ण्वु तृ अच् इत्येते प्रत्यया भवन्ति । इति तृप्रत्ययः स च कर्तोऽसुन्त्वाम् इति कर्तरि भवति । स्वादयः क्रोष्टृशब्दवत्प्रक्रिया । माता, मातारौ, मातारः हे मातः, हे मातारौ, हे मातारः । मातारं, मातारौ, मातॄन् । मात्रा, मातृभ्याम्, मातृभिः । मात्रे, मातृभ्याम्, मातृभ्यः । मातुः, मातृभ्याम्, मातृभ्यः । मातुः, मात्रोः, मातॄणाम् । मातरि मात्रोः मातृषु । कर्तृशब्दस्य तु भेदः । डुकृञ् करणे डुशब्दञकारावितौ । प्रयोजनं पूर्ववत्, धातुसंज्ञायां करोतीति विगृह्य पूर्ववत् तृप्रत्ययः जुसक्थेडर् । ४ । २ । १६ । इत्यधिकृत्य—

१६१ ॥ अक्ङिल्लुग्वेतौ ।४।२।१७॥ धातोर्विहिते प्रत्यये परे पूर्वस्यैकः एङरो भवन्ति न क्ङिति लुग्वेतौ च । कर्तृ इति स्थिते स्वादय । कर्ता, कर्तारौ, कर्तारः इत्यादि । मातृशब्दवत् एवं भर्तृनेतृप्रभृतयः तृप्रत्ययान्ताः । ऋकारान्त आश्रयलिङ्गः प्रियगृशब्दः उभाभ्यां सुः प्रियः गृरस्य इति विग्रहे, सुप्सुपा समासो बहुलं । २ । १ । १ ॥ बहुव्रीहिः ॥ २ । १ । २ । इति च वर्तमाने—

१६२ ॥ **एकार्थे च** । २ । १ । ५ । एकः समानोऽर्थो द्रव्यमधिकरणं यस्य वाक्यस्य अस्ति तदेकाधिकरणं अव्ययं च सुबन्तं सुबन्तेन सह द्वितीयाद्यर्थे बहुलं समस्यते स च समासो बहुव्रीहिः । सुपः श्लुक् ।

१६३ ॥ **विशेषणसर्वादिसंख्यं बहुव्रीहौ** । २ । १ । ११० ॥ विशेषणं सर्वादि संख्यावाचि च शब्दरूपं बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् । इति प्रियशब्दस्य पूर्वनिपातः । स्वादयः । ऋत्सखीत्यादिना तकाराद्व्यादेशो न भवति । प्रियगृः । ङ्यौटच्तोऽपदस्यार् इत्यरादेशोऽपि तकारादेव न भवति । अस्वे इति यण् । प्रियग्रौ, प्रियग्र । हे प्रियगृ, हे प्रियग्रौ, हे प्रियग्रः इत्यादि ऌलृकारान्तावप्रसिद्धौ । एकारान्त आश्रयलिङ्गोऽतिहेशब्दः अतिशब्दात्सु हे इत्यनुकरणशब्दोऽनुकार्ये हेशब्दे वर्तते इत्यतिक्रमणक्रियाया कर्म भवतीति हेशब्दादम् अतिक्रान्तो हेशब्दमिति विग्रहे—

१६४ ॥ **गतादिषु प्रादयः** । २ । १ । २१ । प्र इत्यादि सुबन्तं गतादावर्थे वर्तमानं सुपा नित्यं समस्यते स च समासो बहुव्रीह्यादेरन्यस्तत्पुरुषो भवति । सुपः श्लुक् । अतिहे इति स्थिते अतिहेः अतिहयौ अतिहयः । अतिहयम्, अतिहयौ, अतिहय. । अतिहया, अतिहेभ्याम्, अतिहेभिः । अतिहये अतिहेभ्याम् अतिहेभ्यः । एङो लुक् इति लुक् । अतिहेः अतिहेभ्याम् अतिहेभ्यः । अतिहेः, अतिहयोः, अतिहयाम् । अतिहयि, अतिहयोः, अतिहेषु । एवं सेपरमसेशब्दौ । ओकारान्तः पुल्लिङ्गो गोशब्दः ततः स्वादयः ।

१६५ ॥ ओत औ ॥ १ । २ । ११७ ॥ स्यनप्सुटि परे ओकारस्य औकारो भवति । गौः गावौ गावः । हे गौः, हे गावौ, हे गावः । अमि शसि च—

१६६ ॥ डाम्शसः ॥ १ । २ । ११८ ॥ ओकारात्परस्य स्यनप्सुटि अमः शसश्चादेर्डादेशो भवति अन्त्याजादिलुक् । गाम्, गावौ, गाः । गवा, गोभ्याम्, गोभिः । गवे, गोभ्याम्, गोभ्यः । गोः, गोभ्याम्, गोभ्यः । गोः, गवोः, गवाम् । गवि, गवोः, गोषु । एवं द्योशब्दः । ऐकारान्तः पुल्लिङ्गो रैशब्दः ततः स्वादयः ।

१६७ ॥ रायः स्भि । १ । २ । २२० । रै इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ भकारादौ च सुपि परे आकारो भवति । अन्यत्रायादेशः । राः, रायौ, रायः । हे राः हे रायौ हे रायः । रायम् रायौ रायः । राया राभ्याम् राभिः । राये राभ्याम् राभ्यः । रायः राभ्याम् राभ्यः । रायः रायोः रायाम् । रायि रायोः रासु । औकारान्त पुल्लिङ्गो ग्लौशब्दः तस्य हलादावविशेषः । ग्लौः ग्लावौ ग्लावः हे ग्लौः । हे ग्लावौ हे ग्लावः । ग्लावम् ग्लावौ ग्लावः । इत्यादि नेयम् ॥

॥ इत्यजन्ताः पुल्लिङ्गाः ॥

## अथ अजन्ताः स्त्रीलिङ्गा उच्यन्ते ।

तत्र अकारान्तोऽप्रसिद्धः । आकारान्तः स्त्रीलिङ्गो जायाशब्दः । जाया इति स्थिते— त्रिचतुरः स्त्रियां तिसृचतसृ ऋच्याद्— इत्यधिकृत्य—

१६८॥ अजाद्यताम् ॥ १ । ३ । १३ ॥ अज इत्ये-वमादीनां अकारान्तानां च शब्दरूपाणां स्त्रियां वाच्यायां तत आप् प्रत्ययो भवति । इकारोऽन्त्याजादिलुगर्थः । स्वा-दयः । सौ हल्ङ्याब्दीर्घाल्लुक् इति लुक् । जाया । औकारे—

१६९॥ आङश्चौतो गीः ॥ १ । २ । १९ ॥ नपःआङन्त-स्य च सम्बन्धिन औकारस्य सुपः स्थाने गीं इत्ययमादेशो भवति । गकारो गित इति सन्धिप्रतिषेधार्थः । इक्येङ् इति एङ् । जाये । जसि दीर्घ इति दीर्घः । जायाः । एकामन्त्रणे—

१७० ॥ एदाङः ॥ १ । २ । १२४ ॥ आङः एकाम-न्त्रणे एकारो भवति सोश्च लुक् । हे जाये, हे जाये, हे जायाः । मोऽणोऽम इति मत्वम् । जायाम् जाये ।

१७१ ॥ शइयक् ॥ १ । १ । ७८ ॥ अकः शस्यचि परे परेणाचा सहितस्य यथासंख्यं दीर्घो भवति । जायाः । टा-यामोसि च—

१७२ ॥ टौस्येत् । १ । २ । २१ ॥ आङन्तस्य सम्ब-न्धिनोः टा ओस् इत्येतयोः परत एकारो भवति अयादेशश्च । जायया । हलादावविशेषः । जायाभ्याम् जायाभिः । ङिद्वचने,

१७३ ॥ ङितो याट् । १ । २ । २० ॥ आङन्तस्य सम्बन्धिनो ङकारानुबन्धस्य सुपो याडागमो भवति स च—

१७४ ॥ टिदादिः । १ । १ । ५३ ॥ टितो यस्य विधीयेत स तस्याद्यवयवो भवति । इत्यादौ भवति । टकार आदिविध्यर्थः "एजूच्यैच्" इत्यैच् । जायायै जायाभ्याम् जायाभ्यः । जायायाः, जायाभ्याम्, जायाभ्यः । जाया-

याः, जाययोः । **नमूहसाद्साट** इति नाम् नाम्येत्यादिना दीर्घः । जायानाम् । ङेर्याटि **न्यंशादाम्** इत्याम् । जायायाम्, जाययोः, जायासु । एवं शालाशुक्लामालाखट्वादीनां रूपनयः । जराशब्दस्याचि विशेषोऽन्यत्र जायाशब्दवत् । जरा ।

**१७५ ॥ जराया ङसिन्द्रस्याचि । १ । २ । ३७ ॥** जराशब्दस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा अजादौ सुपि परे इन्द्रस्याचार्यस्य मतेन ङसादेशो भवति । अन्येषां न भवति । ङित्वादन्त्यस्यैव भवति । जरसौ जरे, जरसः जराः । हे जरे, हे जरसौ हे जरे, हे जरसः हे जराः । जरसम्, जरां, जरसौ जरे, जरसः जराः । जरसा जरया, जराभ्याम्, जराभिः । जरसे जरायै, जराभ्याम्, जराभ्यः । जरसः जरायाः, जराभ्याम, जराभ्यः । जरसः जरायाः, जरसोः जरयोः, जरसाम् जराणाम् । जरसि जरायाम्, जरसोः जरयोः, जरासु । सर्वादीनामप्याटि कृते आमङिद्वचनादन्यत्र जायाशब्दवद्रूपनयः । सर्वा, सर्वे, सर्वाः । हे सर्वे, हे सर्वे, हे सर्वाः । सर्वाम, सर्वे, सर्वाः । सर्वया, सर्वाभ्याम्, सर्वाभिः । ङितो याडिति याडागमे कृते—

**१७६ ॥ ङस्याद्यस्य । १ । २ । १७५ ॥** अवर्णान्तानां सर्वादीनां तत्सम्बन्धिनि याडादौ सुपि परे ङसित्यादेशो भवति । ङित्वादन्त्यस्यादेशः । सर्वस्यै, सर्वाभ्याम्, सर्वाभ्यः । सर्वस्याः सर्वाभ्याम् सर्वाभ्यः । सर्वस्याः, सर्वयोः । **सामाम्** इति साम् । सर्वासाम् । न्यंशादामित्याम् । सर्वस्याम् सर्वयोः सर्वासु । एवं द्विशब्दादीनामुभयशब्दवर्जितानामन्तरशब्दपर्यन्तानां

रूपनयः। पूर्वादीनां ङिदादौ सुपि पक्षे स्म् अन्यत्र जायाशब्द-वत्। पूर्वस्याः पूर्वायाः। त्यदादीनां स्यादिषु कृतेषु त्वसौ चात् इत्यत्वे, "एद्दे" इति लुपि याटि च कृतायां सर्वशब्दवत् प्रक्रिया। स्या त्ये त्याः। इत्यादि। सा, ते, ताः इत्यादि। या ये याः इत्यादि। अदसः सौ पुंवदौत्वादि। असौ। अन्यत्र त्यदाद्यत्वे लुपि आटि च कृतायां सर्वाशब्दवत्। सर्वस्मिन् कार्ये कृते पश्चात् मत्त्वमुत्वे। अमू अमूः। हे असौ, हे अमू, हे अमूः। अमूम्, अमू, अमूः। अमुया, अमूभ्याम्, अमूभिः। अमुष्यै, अमूभ्याम्, अमूभ्यः। अमुष्याः अमुयोः अमूषाम्। अमुष्याम् अमुयोः अमूषु। इदमः स्यादयः। साविति दकारस्य मकारः—

१७७॥ इय्। १। २। २११॥ इदमस्त्यदादिमस्य-निधनि सौ परे इद्रूपस्य इय् भवति। इयम्। अन्यत्रात्यम् लुक्च "दो मः" इति मत्वे आङ्। इमे, इमाः। हे इयम्, हे इमे, हे इमाः। इमाम्, इमे, इमाः। "टौस्यनः" इति अनः सत आट् टौस्येत् इति एत्वम् अयादेशः। अनया। हलादाव-शादेशे कृते आङ्। आभ्याम्, आभिः। ङिद्वचने त्यदाद्यत्वे लुप्याडि "ङितो याट्" इति याट् च पश्चादशादेशश्च ततो स्मादेशः। अस्यै, आभ्याम्, आभ्यः। अस्याः, आभ्याम्, आभ्यः। अस्याः अनयोः आसाम्। अस्याम्, अनयोः, आसु। एतद् एषा, एते, एताः इत्यादि। एकस्य एका, एके, एकाः इत्यादि। द्विशब्दस्य द्वे, हे द्वे, द्वे, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः। किमः कादेशे कृते आट्। का, के, काः इत्यादि ज्ञेयम्।

अर्द्धादीनां जायाशब्दवन्नीतिः । द्वितीयतृतीयशब्दयोश्च तीयं ङित्तीति विकल्पेन सर्वादित्वविधानात् तत्रैव भेदः द्वितीयस्यै द्वितीयायै, द्वितीयस्याः द्वितीयायाः २, द्वितीयस्याम् द्वितीयायाम्, अन्यत्र जायाशब्दवत् । एवं तृतीयाशब्दः । इकारान्तः स्त्रीलिङ्गो रुचिशब्दः तत स्यादयः । सुटि रविशब्दवत् । रुचिः रुची रुचयः । हे रुचे, हे रुची, हे रुचयः । रुचिम् रुची । शस्यगिति दीर्घः । रुचीः । टाया नाभावो न भवति अस्त्री इति प्रतिषेधात् । यम् । रुच्या, रुचिभ्याम्, रुचिभिः । ङिद्वचने इदुतो गिय्योतोऽस्त्रे. इत्यधिकृत्य—

१७८ ॥ स्त्रिया वाट् । १ । २ । २९ ॥ स्त्रीलिङ्गमर्थमभिदधत इदुदन्तात् शब्दात्परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङितः सुप आडागमो वा भवति । टकार आदिविध्यर्थ ऐज् यत्रादेशश्च । यदा त्वाड् न भवति तदा रविशब्दवत् । रुच्यै रुचये रुचिभ्यां रुचिभ्यः । रुच्याः रुचेः रुचिभ्याम् रुचिभ्यः । रुच्याः रुचेः रुच्योः रुचीनाम् । रुच्याम् रुचौ, रुच्योः, रुचिषु । एवं शुचिकृतियुवतिहानिमतिप्रभृतयः । विंशत्यादय. संख्यायामेवोपादत्ते संख्येयेषु च स्वलिङ्गत्वमुपादायैव वर्तन्ते तस्मादेकवचनान्ताः स्युः । विंशतिः हे विंशते, विंशतिम्, विंशत्या, विंशत्यै विंशतये, विंशत्याः विंशतेः, विंशत्याः विंशतेः । विंशत्यां, विंशतौ । द्वित्त्वबहुत्वाभिधाने द्विवचनबहुवचनेऽपि भवतः । द्वे विंशती, बह्वो विंशतयः । एवं षष्टिसप्तत्यशीतिनवतिशब्दा अपि । विंश-
त्यस्य भेदः ——

१७९ ॥ **त्रिचतुरः स्त्रियां तिसृचतसृ** । १ । २ ।२२१।
त्रिचतुरोः स्त्रीलिङ्गेऽर्थे वर्तमानयोः तत्सम्बन्धिन्यन्य-
संबन्धिनि वा सुपि तिसृ चतसृ इत्येतावादेशौ भवतः ।

१८० ॥ **रोऽनपोऽच्युः** ॥ १ । २ । २२२ ॥ तिसृ च-
तसृ इत्येतयोः ऋकारस्यानपुंसकस्य तत्सम्बन्धिन्यन्यसम्बन्धि-
नि वा अजादौ सुपि परे रेफो भवति । तिस्रः, हे तिस्रः, तिस्रः,
तिसृभिः तिसृभ्यः तिसृभ्यः । नाम्यतिसृचतसृषः इति प्रति-
षेधान्न दीर्घो भवति । तिसृणाम्, तिसृषु । ईकारान्तः स्त्रीलि-
ङ्गो लक्ष्मीशब्दः । लक्षि दर्शनाङ्कनयोः । ततः लक्षेर्मुट् चेति
ईप्रत्ययो मुट् चागमः । ततः स्यादयः । नायमीकारो ङिदिति सो-
र्लुग् न भवति । रित्वविसर्जनीयौ । लक्ष्मीः, लक्ष्म्यौ, लक्ष्म्यः ।
एकामन्त्रणे ह्रस्वोऽस्त्रित्यादि इति ह्रस्वः सोश्च लुक् । हे लक्ष्मि,
हे लक्ष्म्यौ, हे लक्ष्म्यः । मोऽणोऽमः इति मत्वम् पदस्येति
लुक् च । लक्ष्मीम्, लक्ष्म्यौ । शस्यगिति दीर्घः । लक्ष्मीः ।
लक्ष्म्या लक्ष्मीभ्याम् लक्ष्मीभिः । ङिद्वचने—

१८१ ॥ **ङ्योऽपुंसः** ॥ १ । २ । ३० ॥ अपुंसि स्त्रि-
यामर्थे वर्तमानादीकारान्तादूकारान्ताच्च परस्य तत्सम्बन्धि-
नोऽन्यसम्बन्धिनो वा ङितस्सुपो नित्यमाड् भवति । टकार
आदिविध्यर्थः । यत्वेच । लक्ष्म्यै, लक्ष्मीभ्याम्, लक्ष्मीभ्यः ।
लक्ष्म्याः लक्ष्मीभ्याम् लक्ष्मीभ्यः । लक्ष्म्याः, लक्ष्म्योः । नम्-
ह्रस्वादसात् इति नाम् णत्वञ्च । लक्ष्मीणाम् । न्यंशादामिति
आम् । लक्ष्म्याम्, लक्ष्म्योः, लक्ष्मीषु । एवं तरी तन्त्री
तन्द्रीदरीप्रभृतयः । उभयदष्टकारो ङ्यर्थः उभय इति स्थिते

दयः । भवतु इति स्थिते उकार इत् उगित्कार्यार्थः । मृदुगिदि-
त्यादिना ङी, स्वादयः । भवती, भवत्यौ, भवत्यः इत्युभयी-
शब्दवत् । शत्रन्तानां ङीप्रत्यये रूपभेदः । या प्रापणे, या
इति स्थिते पूर्ववद्धातुसंज्ञायाम्—

१८५ ॥ सति । ४ । ३ । २१७ ॥ वर्तमानेऽर्थे वर्त-
मानाद्धातोर्लट् प्रत्ययो भवति । टकार एटित इति विशे-
षणार्थः अकार उच्चारणार्थः । श्लेले यगिति वर्तमाने—

१८६ ॥ कर्तरि शप् ॥ ४ । ३ । २० ॥ धातोः कर्तरि
वर्तमाने श्लेले परतः मध्ये शप् प्रत्ययो भवति । शकार एचो-
ऽश्या इति विशेषणार्थः । पकारः शल्यव्लाविति विशेषणार्थः ।

१८७ ॥ ह्वदादेः श्लुब्श्लुक् ॥ ४ । ४ । २१ ॥ ह्वादि-
भ्यः अदादिभ्यश्च परस्य कर्तरि श्लेले परे विकरणस्य शपो-
ऽन्यस्य वा यथासंख्यं श्लुब् श्लुक् च भवति ।

१८८ ॥ सल्लड्वत्स्यंल्लटो वाऽनितौ ॥ १ । ४ । ७८॥
सति वर्तमानेऽर्थे यो लट् वत्स्यंति भविष्यति च यो लट्
तयो स्थाने अतङ् तङ्वत् शत्रानशौ आदेशौ वा भवतः । न
चेदितिशब्दः प्रयोगे प्रयुज्यते । शकारः श्ल्यव्लाविति वि-
शेषणार्थः । ऋकार उगित्कार्यार्थः । या अत् इति स्थिते उगि-
त्त्वात् ङी । सुविति वर्तमाने—

१८९ ॥ ङीग्योर्वादऽश्नः ॥ १ । २ । १६ ॥ श्नाव-
र्जितादवर्णात्परो यश्शता तदन्तस्य शब्दस्य ङी गी इत्येतयोः
परयोः नम् वा भवति । मकारो देशविध्यर्थः अकार उच्चार-
णार्थः । दीर्घ इति दीर्घः । म्नां जय्यपदान्ते इति परस्वः । स्वा-

दयः। यान्ती, यान्त्यौ, यान्त्य। हे यान्ति इत्यादि। नमभावे याती यात्यौ यात्य. हे याति इत्यादि। भू सत्तायां सतीति लट् तस्य शत्रादेश, कर्तरि शबिति, शप् "अकिङ्ल्लुग्हेतौ" इत्योकार अवाद्यादेश. भव अत् इति स्थिते उगित्वात् ङी।

१९० ॥ शप्श्यात् ॥ १ । २ । १७ ॥ शप. श्याच्च परस्य शतु ङीप्यो परत. नित्यं नम् भवति। अनुबन्धौ पूर्ववत्। एदे इति लुक्। स्वादयः। भवन्ती, भवन्त्यौ, भवन्त्यः। हे भवन्ति इत्यादि। दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु। उकारः "योदित" इति विशेषणार्थः। धातुसंज्ञायां लट् शत्रादेशः। कर्तरीत्यधिकृत्य—

१९१ ॥ दिवादेः श्यः ॥ ४ । ३ । २२ ॥ दिवादिभ्यः कर्तरि श्लेले परतो मध्ये श्यप्रत्ययो भवति। शकारः श्ल्यश्लाविति विशेषणार्थः।

१९२ ॥ धातोर्वोर्ग्दीर्घोऽयहल्नि चाच्छुर्कुरोः ॥१ २।६८। छुर्कुर् इत्येतद्वर्जितस्य धातो. इग्दीर्घो भवति पदान्ते यप्रत्ययवर्जितहल्परयो नपरयोश्च वकाररेफयोः परतः। दीव्यअत् इति स्थिते उगित्त्वात् ङी, शप्श्यादिति नम्। स्वादय। दीव्यन्ती, दीव्यन्त्यौ, दीव्यन्त्यः। हे दीव्यन्ति इत्यादि नेयम्। स्त्रीशब्दस्य भेदः। स्त्रीपुंत्रक्षेत्रनक्षत्रादय इति स्यतेः सूतेः स्त्यायते स्तृणातेः तनोतेर्वा त्रट् प्रत्ययो भवति धातोश्च सकारादेशो निपात्यते। टित्वात् टिड्ढाणञिसित्यादिना ङी। लुगतः इत्यकारस्य लुक्। स्त्री इति स्थिते स्वादय। सोः हल्ङ्याडित्यादिना लुक्। स्त्री।

१९३ ॥ स्त्रियाः ॥ १ । २ । ४२ ॥ स्त्रीशब्दस्य य इवर्णस्तस्याजादौ प्रत्यये परे इयादेशो भवति । स्त्रियौ, स्त्रियः । एकामन्त्रणे ह्रस्वोऽन्नित्यादृ इति ह्रस्व. सेश्च लुक् । हे स्त्रि, हे स्त्रियौ, हे स्त्रिय. ।

१९४ ॥ वाम्शसि । १ । २ । ४३ ॥ स्त्रीत्येतस्येवर्णस्यामि शसि च परे इयादेशो वा भवति । स्त्रियम् स्त्रीम्, स्त्रियौ, स्त्रिय. स्त्रीः । स्त्रिया स्त्रीभ्याम् स्त्रीभिः । ङिद्वचने स्त्र्योऽपुंसः इत्यादि कृतायामियादेश. । स्त्रियै स्त्रीभ्याम् स्त्रीभ्यः । स्त्रियाः स्त्रीभ्याम् स्त्रीभ्य. । स्त्रिया , स्त्रियोः। आमो नित्यत्वान्नामादेशो णत्वञ्च स्त्रीणाम । स्त्रियाम् स्त्रियोः स्त्रीषु । श्रीशब्दस्य भेदः । श्रिञ् सेवायां ञकारस्तदर्थः । क्विब्वचिप्रच्छिपरिव्रज्यायतस्तुकटप्रुश्रीणां दीर्घो ङो प्रसारणञ्च । प्रसारणमिति साचो यञो भवन इगादेशस्य पूर्वाचार्याणां संज्ञा । श्री इति स्थिते स्यादयः । अङ्यन्तत्वात् सोर्लुग् नास्ति । श्रीः । अजादौ "भ्रूहलश्नोश्चेयुवौ" इति इय् श्रियौ, श्रियः । एकामन्त्रणे विकल्पिताङ्त्वात् ह्रस्वो नास्ति हे श्रि., हे श्रियौ, हे श्रियः । श्रियम्, श्रियौ, श्रियः । श्रिया श्रीभ्याम् श्रीभिः । ङिद्वचने ।

१९५ ॥ वेयुवोऽस्त्रियाः । १ । २ । ३१ ॥ इयुवादेशभाविनौ याविकारोकारौ तदन्तात् शब्दात् स्त्रीवृत्तेः परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो ङितः सुप आडागमो भवति वा स्त्रीशब्दं वर्जयित्वा । तत इयादेशः । श्रियै श्रिये, श्रीभ्याम्, श्रीभ्य. । श्रिया. श्रियः, श्रीभ्याम्, श्रीभ्य. । श्रियाः श्रियः, श्रियोः । आमि—

१९६ ॥नामामः । १ । २ । ३२ ॥ इयुविकारोकारान्तात् पुमर्थात् स्त्रीवृत्ते परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा आमो नामादेशो भवति वा स्त्रीशब्दं वर्जयित्वा । श्रीणाम्, श्रियाम् । श्रियाम्, श्रियि, श्रियोः श्रीषु । एवं ह्रीप्रभृतय । उकारान्त स्त्रीलिंगस्तनुशब्द सच शरीरवाची । अल्पार्थस्तु त्रिलिङ्ग तस्य रुचिशब्दवत् प्रक्रिया । तनु तनू तनव । हेतनो हेतनू हे तनव । तनुम्, तनू, तनू । तन्वा, तनुभ्या, तनुभि । तन्वै तनवे, तनुभ्याम्, तनुभ्य । तन्वा. तनो, तनुभ्याम्, तनुभ्य । तन्वाः तनो, तन्वो, तनूनाम् । तन्वाम् तनौ, तन्वो, तनुषु । एवं रज्जुधेनुस्नायुप्रभृतय । ऊकारान्तः स्त्रीलिङ्गो जम्बूशब्दः । तस्य लक्ष्मीशब्दवत् प्रक्रिया । जम्बू जम्ब्वौ जम्ब्व । हे जम्बु हे जम्ब्वौ हे जम्ब्वः । जम्बूम् जम्ब्वौ जम्बूः । जम्ब्वा, जम्बूभ्याम्, जम्बूभिः । जम्ब्वै, जम्बूभ्याम्, जम्बूभ्य । जम्ब्वाः जम्बूभ्याम् जम्बूभ्यः । जम्ब्वा जम्ब्वो जम्बूनाम । जम्ब्वाम् जम्ब्वो जम्बूषु । एवं चमूवधूयवागूप्रभृतयः । भ्रूशब्दस्य भेद । भ्रमू चलने ऊकारस्त्वदित इति विशेषणार्थ । भ्रमेश्च डूरिति डूप्रत्ययः । डित्यन्त्यस्वरादेर्लुक् । भ्रू इति स्थिते तत स्यादयः । श्रीशब्दवत्प्रक्रिया । भ्रूः भ्रुवौ भ्रुवः इत्यादि । दृन्भूशब्दस्य भेद. । दृन्नं भवतीति विगृह्य क्विप्, स्यन्नामसुपमिति समासः । दृन इति स्थिते पदस्येति नकारस्य लुप् । स्यादयः । दृन्भूः । अत्रादौ सु—

१९७॥ दृन्पुनःवर्षाभिर्भुवः ॥ १ । २ । ३९ ॥ दृन

पुन.करवर्षा इत्येतैरेव सह समस्तस्य भू इत्येतस्य क्विबन्तस्यो-वर्णस्याचि सुपि परे यञ् भवति । दन्भ्वौ दन्भ्वः । हे दृन्भूः इत्यादि लक्ष्मीशब्दवत्प्रक्रिया । एवं पुनर्भू करभू वर्षाभू शब्दाः । ऋकारान्तः स्त्रीलिङ्गो मातृशब्दः सोऽपि पितृशब्दवन्ने-य. । माता, मातरौ, मातरः । हे मातः, हे मातरौ, हे मातरः। मातरम्, मातरौ । शस्यागीति दीर्घः । मातॄः। मात्रा मातृभ्या-मित्यादि । एवं स्वसृदुहितृप्रभृतयः । ॠकारान्तः प्रियगॄशब्दः सोऽपि पुल्लिङ्गवन्नेयः । लृकारलॄकारान्तावप्रसिद्धौ । एका-रान्तः अतिहे शब्दः सोऽपि पुल्लिङ्गवन्नेयः । ओकारान्तः गोशब्दः पूर्ववत्। ऐकारान्त. सुरैशब्दः तस्यापि प्रियगॄशब्दवत् बहुव्रीहिः रैशब्दवन्नीतिश्च । औकारान्तो नौशब्द. तस्यापि ग्लौशब्दवन्नीतिः । इत्यजन्ता. स्त्रीलिङ्गाः ।

## अथाजन्तनपुंसकलिङ्गा उच्यन्ते ॥

अकारान्तो नपुंसकलिङ्गो धनशब्दः ततः स्यादयः सोः इलुचि प्राप्तायाम्—

१९८ ॥ अतोऽम् । १ । २ । ४ । अकारान्तस्य नपुंस-कस्य सम्बन्धिनोः स्वमोरमित्ययमादेशो भवति । " मोऽणो-ऽमः " इति मत्वम् पदस्येति मकारस्य लुक् । धनम् । औका-रयोः " **आटश्चौतो गी** " इति गी " इक्येडर् " इत्येङ्। धने ।

१९९ ॥ जश्शसः शि । १ । २ । १८ ॥ नपः सम्ब-न्धिनो जस्शस् इत्येतयोः सुपोः शि इत्ययमादेशो भवति । शकारः सर्वदेशार्थः । नम् सुपीति प्रस्तुत्य—

२०० ॥ शावचः ॥ १ । २ । ११ ॥ अजन्तस्य नपः शौ परे नम् भवति । अनुबन्धलोपः ।

२०१ ॥ न्यक् ॥ १ । २ । १३४ ॥ श्यनप्सुटि परे यो नकारस्तस्मिन् पूर्वोऽग् दीर्घो भवति न चैकामन्त्रणे । धनानि । एकामन्त्रणे सोरमि कृते ह्रस्वोऽम्नित्याट इति ह्रस्वः श्यनप्सुटीत्यादि स्वमोश्च लुक् मुग्रहणसामर्थ्यात् अमश्च लुक् । स च सर्वस्य भवति । हे धन, हे धने, हे धनानि । पुनरपि धनम्, धने, धनानि । टादिषु वृक्षवत् । एवं शुक्लवस्त्रवदननयनादयः । सर्वादयोऽप्येवं नेतव्या. प्रथमाद्वितीययोः । टादिषु पुल्लिङ्गवत् । अन्यादीनां तु पञ्चानां भेदोऽस्ति । अन्य इति स्थिते—

२०२ ॥ पञ्चतोऽनेकतरस्यान्यादेर्दक् स्वमोः । १ । २ । २ ॥ नपुंसकाभिधायिनामन्यादीनां पञ्चानां तत्सम्बन्धिनोः सु अम् इत्येतयोः परतो दगागमो भवत्येकतरशब्दं वर्जयित्वा । ककारोऽन्त्यविध्यर्थः, अकार उच्चारणार्थः ।

२०३ ॥ श्लुक् । १ । २ । ५ ॥ नप. सम्बन्धिनोः स्वमोः श्लुक् भवति ।

२०४ ॥ चर्जशः । १ । १ । ६९ ॥ विरामे वर्तमानस्य जस. स्थाने तदासन्न. चरादेशो वा भवति । अदीर्घादिति द्वित्वञ्च । अन्यद् अन्यत् अन्यद्द् अन्यत्त्, अन्ये, अन्यानि । हे अन्यत् हे अन्यत्त्, हे अन्यद् हे अन्यद्द् । हे अन्ये, हे अन्यानि । शेषं पुल्लिङ्गवत् । एवमन्यतरइतरकतरकतमादयः । अनेकतरस्येति किम् ? एकतरमित्यादि । त्यदादीनां तु स्वमोर्विशेषोऽस्ति . त्यद् इति स्थिते स्वादय । नित्यत्वात् त्यदा-

शत्वादनागेव स्वमोः स्वमाश्चे लुक् इति लुक्, श्लुचि संज्ञानायाम्—

२०५ ॥ स्थानीवानलाश्रये ॥ १ । १ । ५० ॥ यस्य स्थाने यो विधीयते स स्थानी इतर आदेश, स्थानीव भवत्यादेशः स्थानि कार्यं प्रति पद्यते इत्यर्थः । न चेत् तत् कार्यं स्थान्यलाश्रयं भवति । स्थानिवद्भावेन पुनरपि अत्वं प्राप्तम् ।

२०६ ॥ श्लुचीगेनत् ॥ १ । १ । ५२ ॥ परस्य प्रत्ययस्य श्लुचि सत्यां श्लुभूतपरनिमित्तकं पूर्वकार्यमिक् एनत् इति एतदेव भवति । इति नियमात् न भवति । मत्वं च न भवति । द्वित्वम् । त्यद् त्यत् त्यद् त्यत्, त्ये, त्यानि इत्यादि । तदः तद् तद् तत् तत्, ते, तानि इत्यादि । यद यत्, यत् यद् यद्, ये, यानि इत्यादि । अदस अदः । अन्यत्र त्यादिसर्वकार्याणि कृत्वा पश्चान्मत्वमुत्वे । अमू, अमूनि इत्यादि । इदमः— इदम् इदम् इमे इमानि । इत्यादि । एतदः—एतत् एतत् एतद् एतद, एते, एतानि । इत्यादि । द्विशब्दस्य द्वे, द्वे इत्यादि । किम—किम् किम्, के, कानि इत्यादि । आकारान्तः सोमपाशब्दः—

२०७ ॥ नपोऽचो ह्रस्वः । १ । २ । १ । नपुंसकाभिधायिनोऽजन्तस्य शब्दरूपस्य ह्रस्वादेशो भवति । इति ह्रस्वादेशे कृते धनशब्दवत् नेयम् । सोमपम्, सोमपे, सोमपानि इत्यादि । केचित् चतुर्थ्येकवचने सोमपाय इत्यत्र आतोऽनाङ्‍ ऱ्लुगिति श्लुनि सोमपे इति भवितव्यमित्याहुः । अपरे सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवतीत्याहुः ।

अवर्णसन्निपाते ह्ययं यादेशो जात । एवं क्षीरपाम्बुपादयः । इकारान्तो वारिशब्दः । स्वादयः । **स्वमोः श्लुगिति** श्लुक् । वारि । औकारयोः **आङश्चौतो गी** इति गी ।

२०८ ॥ **नम् सुपि** ॥ १।२।१० ॥ इगन्तस्य नपोऽजादौ सुपि परे नमागमो भवति । अनुबन्धलोपः । णत्वम् । वारिणी । जसि **जश्शसः शिरिति** शि. नम् । **न्यगिति** दीर्घः । वारीणि । एकामन्त्रणे सोः श्लुगिति श्लुक् ।

२०९ ॥ **इको लुक्** । १ । २ । ७ ॥ इगन्तस्य नपः सम्बन्धिनोः स्वमोः श्लुग् लुग्वद्वा भवति । यत्र लुग्वद्भावस्तत्र **ह्रस्वैतो लुचि चोरङ्** इति एङ् । यत्र लुग्वद्भावो न भवति तत्र **श्लुचीगेनत्** इति नियमान्न भवति । हे वारे हे वारि, हे वारिणी, हे वारीणि । पुनरपि वारि वारिणी वारीणि । वारिणा वारिभ्याम् वारिभिः । वारिणे, वारिभ्याम्, वारिभ्यः । वारिणः वारिभ्याम् वारिभ्यः । वारिणः वारिणोः आमि नमि **नम्ह्रस्वाड्साटः** इति नामभावे च—

२१० ॥ **सिद्वल्यधातोः** ॥ १ । १ । ६४ ॥ सिति वलादौ च प्रत्यये परे पूर्वं पदसंज्ञं भवति । इति पदसंज्ञायाम् ।

२११ ॥ **नः** । १ । २ । ९५ ॥ नकारस्य पदस्य लुग् भवति । इति नकारस्य लुक् पुनः दीर्घः । वारीणाम् । वारिणि वारिणोः वारिषु । एवं दध्यस्थिसक्थ्यक्षिशब्दानां प्रथमाद्वितीययोः रूपं नेयम् । टादावजादौ—

२१२ ॥ **दध्यस्थिसक्थ्यक्ष्णोऽनङ्** ॥ १ । २ । ९ ॥ दधिअस्थिसक्थिअक्षिइत्येतेषाम् अनङादेशो भवत्यजादावपि

टादौ सुपि परे । इकारोऽन्त्यादेशार्थः । नकारेऽकार उच्चारणार्थः ।

२१३ ॥ श्नोऽनोऽहल्वमात् । १ । २ । १४९ ॥ अपदसंज्ञकावयवस्याञित्येतस्य यसुट्छिण्यादिसुपि प्रत्यये च परे श्नादेशो भवति, न चेत्सोऽन्शब्दो हलोऽनन्तरात् वकारात् मकाराच्च परः स्यात् । शकारः सर्वादेशार्थः । दध्ना, दधिभ्याम्, दधिभिः । दध्ने, दधिभ्याम्, दधिभ्यः । दध्नः, दधिभ्याम्, दधिभ्यः । दध्नः, दध्नोः, दध्नाम् । ङौ—

२१४ ॥ ङिग्योर्वा । १ । २ । १५० ॥ अपदसंज्ञकावयवस्य अन् इत्येतस्य ङौ ग्यां च परतः श्नो वा भवति न चेत् सोऽन्शब्दो हल्वमात् परो भवति । दध्नि दधनि, दध्नोः, दधिषु । एवमस्थिसक्थ्यक्ष्णामपि रूपनयः अक्ष्णो णत्वं च । त्रिशब्दस्य नमादि । त्रीणि त्रीणि । अन्यत्र पुंवत् । शुचिशब्दस्य प्रथमाद्वितीययोर्वारिशब्दवत् । टादावजादौ—

२१५ ॥ पुमाँश्चान्यतोऽच्यापि १ । २ । ८ ॥ यदिगन्तं शब्दरूपमन्यतो विशेष्यवशान्नपुंसकार्थं तदर्थोऽजादावपि टादौ सुपि परे पुंवद् वा भवति । इति नमुद्धस्वौ न भवत इत्यर्थः । पुंवद्भावे रविशब्दवत् अन्यत्र वारिशब्दवत् । शुचिना शुचिभ्यां शुचिभिः । शुचिने शुचये, शुचिभ्याम्, शुचिभ्यः । शुचिनः शुचेः, शुचिभ्याम्, शुचिभ्यः । शुचिन. शुचेः, शुचिनोः शुच्योः, शुचीनाम् । शुचिनि शुचौ, शुचिनोः शुच्योः, शुचिषु । एवं सात्रिपत्यादयः । ईकारान्तो ग्रामणीशब्दः । तस्य नपोऽन्तो ह्रस्व इति ह्रस्वः । स्यादयः । ग्रामणि, ग्रामणिनी,

ग्रामणीनि । हे ग्रामणे हे ग्रामणि, हे ग्रामणिनी, हे ग्रामणीनि । इत्यादि शुचिशब्दवत् । एवं नीउन्नीप्रभृतयः । उकारान्तो नपुंसकलिङ्गस्त्रपुशब्दः । त्रपु त्रपुणी त्रपूणि । हे त्रपो हे त्रपु, हे त्रपुणी, हे त्रपूणि । इत्यादि वारिशब्दवत् । मृदुपटुलघुशब्दानां तु शुचिशब्दवत् प्रक्रिया । ऊकारान्तः खलपूशब्दः, तस्यापि ह्रस्वत्वम् । खलपु, खलपुनी, खलपूनि । हे खलपो हे खलपु, हे खलपुनी; हे खलपूनि । इति ग्रामणीशब्दवत् । एवं लूउल्लूप्रभृतयः । ऋकारान्तः कर्तृशब्दः । कर्तृ, कर्तृणी, कर्तॄणि । हे कर्तः, हे कर्तृ इत्यादि । एवं यातृप्रभृतयः । ॠकारान्तः प्रियगॄशब्दः तस्यापि ह्रस्वत्वम् । प्रियगृ, प्रियगृणी, प्रियगॄणि । हे प्रियगृ इत्यादि । ऌकारॡकारान्तावप्रसिद्धौ । एकारौकारैकारौकारान्तानां अतिहे उपगो अतिरै अतिनौ शब्दानां ह्रस्वत्वे कृते अतिहि, अतिहिनी अतिहीनि इत्यादि । उपगु, उपगुनी, उपगूनि इत्यादि । अतिरि, अतिरिणी, अतिरीणि इत्यादि । एकदेशविकृतस्यानन्यत्वात् रायः स्भि इत्यात्वं भवति । अतिनु, अतिनुनी, अतिनूनि । इत्यादि । कृतह्रस्वस्य पुंवद्भावे पुल्लिङ्गवद् अन्यत्र शुचिपटुशब्दवज्ज्ञेयम् ।

॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

## अथ हलन्ताः पुल्लिङ्गा उच्यन्ते ।

हकारान्त आश्रयलिङ्गो गोदुह्शब्दः । दुहीं प्रपूरणे ईकारस्तदर्थः । गोमन्दादम गां दोग्धीति विगृह्य मन्त्वमित्यादिना क्विप् स सर्वोऽपयोगात् । “ स्तकृतास्युक्तम् “ इति समासः,

सुपः श्लुक् । गोदुह् इति स्थिते स्वाग्य सोर्लुक् । ह इति ढत्वे प्राप्ते तदपवादः—

२१६ ॥ दादेर्धादेर्घः ॥ १ । २ । ८४ ॥ दकारादेर्धादेर्धातोर्या धकारादिरवयवस्तदवयवस्य हकारस्य पदान्ते झलि च प्रत्यये परे घकारो भवति ।

२१७ ॥ वशो भष् झषः स्ध्वोश्चैकाचः प्रत्यये॥ १।२। ७६ ॥ पदान्ते यो झष् सकारादौ ध्वशब्दादौ च प्रत्यये परतः तदन्तस्यैकाचोऽवयवस्य वश स्थाने भषादेशो भवति। जलो जश् इति जश्, चर्जश इति पक्षे चर्त्वम । अदीर्घात् इति द्वित्वम् । गोधुक्क् गोधुक् गोधुग्ग् गोधुग्, गोदुहौ, गोदुह । हे गोधुक्क्, हे गोधुक्, हे गोधुग्ग्, हे गोधुग्, हे गोदुहौ, हे गोदुह । गोदुहम, गोदुहौ, गोदुह । गोदुहा ।

२१८ ॥ न संयोगे ॥ १ । १ । ११९ ॥ संयोगे परे अहच स्थाने द्वे रूपे न भवतः । गोधुग्भ्याम गोधुग्भि । गोदुहे गोधुग्भ्याम् गोधुग्भ्य. । गोदुहः गोधुग्भ्याम गोधुग्भ्य । गोदुहः गोदुहोः गोदुहाम् । गोदुहि गोदुहोः गोधुक्षु । शाल्वसीत्यादिना पि । एवं रत्नदुह्कामदुहादयः । स्त्रियामप्येवं रूपम् । श्वलिह्शब्दस्य भेद । लिहौ आस्वादने ईकारस्तदर्थः । श्वनशब्दादम् श्वानं लेढीति निगृह्य क्विप्, समासः । सुपः श्लुक् । "न" इति नकारस्य लुक् । श्वलिह् इति स्थिते स्वादयः ।

२१९ ॥ हः । १ । २ । ८३ ॥ हकारस्य पदान्ते झलि

च प्रत्यये परे ढकारो भवति । जश्त्वचर्त्वे श्वलिट् श्वलिड्, श्वलिड, श्वलिड्, श्वलिहौ, श्वलिहः इत्यादि। एवं मधुलिह्– प्रलिहादय । मित्रद्रुह्शब्दस्य भेद । द्रुह जिघांसायाम् । मित्र- शब्दात्म मित्रं द्रुह्यतीति विगृह्य क्विप।समास । सुपः श्लुक् स्वादयः—

२२० ॥ द्रुह्मुह्ष्णुह्ष्णिहो वा ॥ १ । २। ८६॥ द्रुह जिघांसायाम् मुह वैचित्त्ये ष्णुह उद्गिरणे ष्णिह प्रीतौ इत्येतेषा हकारस्य पदान्ते जलि च परे घकारो वा भवति । पक्षे ह इति ढत्वम । धगो भष् इत्यादिना भष्- भावश्च । मित्रध्रुघ्, मित्रध्रुक्, मित्रध्रुग्, मित्रध्रुग्ग्, मित्रध्रुट्, मित्रध्रुड्, मित्रध्रुड्, मित्रध्रुड्ड् । एवं पदान्ते जलि च रूपद्वयम् । अजादौ तु मंहितेव । एवं उन्मुह् उत्स्नुह् उत्ष्णिह् शब्दा । अनडुह्शब्दस्य भेदः । स्वादय ।

२२१ । चाः ॥ १ । २ । १२८ ॥ अनडुह्चतुर्ह्इत्येतयो: उकारस्य स्यनम्सुटि वा इत्यादेशो भवति ।

२२२ । अनडुहो नम् । १ । २। ११३॥ अनडुह्इत्येतस्य सौ परे नमागमो भवति । गोर्लुप । पदस्य इति हकारस्य लुप । अनड्वान, अनड्वाहौ, अनड्वाहः । सम्बोधने—

२२३ ॥ वोऽनडुच्चतुरोः । १ । २ । १२७ ॥ अनडुह्- चतुर्इत्येतयो: उकारस्य सम्बोधने स्यनम्सुटि व इत्यादेशो भवति । नमागम "पदस्य" इति लुप् । हे अनड्वन्, हे अनड्- वाहौ, हे अनड्वाहः । स्यादौ—

२२४ ॥ अनडुत्पद्रुष्णिग्दिगटद्रम्यद्धृक्परिमाद । १ ।

७ । ७० ॥ अनडुह्, दिव्, उष्णिह्, दिश्, दृश्, स्पृश्, दधृष्, परिव्राज् इत्येतानि शब्दरूपाणि पदान्ते कृतदत्वोत्वगत्वानि निपात्यन्ते । अनडुद्भ्यां , अनडुद्भि । इत्यादि नेयम् । यकारान्तोऽप्रसिद्धः । वकारान्त आश्रयलिङ्ग सुदिव्शब्द । शोभना द्यौरस्येति विगृह्य बहुव्रीहिः । सुदिव् इति स्यादयः—

२२५ ॥ द्यौः । १ । २ । ११२ ॥ दिव् इति अव्युत्पन्नस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सकारादौ स्यनप्सुटि परे औकारो निपात्यते । तत. अस्वे इति यत्र सो रिः विसर्जनीयश्च । सुद्यौः । अजादौ संहितैव । सुदिवौ, सुदिवः । हे सुद्यौः, हे सुदिवौ हे सुदिव । सुदिवम्, सुदिवौ, सुदिवः । सुदिवा । हलादौ सिद्धस्यधातोरिति पदसञ्ज्ञायां अनडुदित्यादिना व इत्यस्य उद्भाव । तकारो विकारनिवृत्त्यर्थ. । अस्वे इति यत् । सुद्युभ्याम्. सुद्युभिः । इत्यादि नेयम् । रेफान्तश्चतुर्शब्द जासि घाः इत्युकारस्य वा इत्यादेशः । चत्वार हे चत्वार चतुरः । रेफस्य रः पदान्ते विसर्जनीयः इति विसर्जनीय तस्य विसर्जनीयस्य इति रेफ । चतुर्भि , चतुर्भ्य', चतुर्भ्यं ।

२२६ ॥ रष्णां संख्यानाम् ॥ १ । २ । ३४ ॥ रेफपकारणकारान्तानां संख्यावाचिनां सम्बन्धिन आमो नाम् भवति । चतुर्णाम् ।

२२७ ॥ रः सुप्सि ॥ १ । २ । ७४ ॥ रेफस्य सुप. सकारे परे रिर्भवति । विसर्जनीयापवाद । चतुर्षु । लकारशकारान्तावप्रसिद्धौ । मकारान्त प्रशाम् शब्दः । शमू दमू उपशमने । ऊकारस्तूदित इति विशेषणार्थः । धातसंज्ञायां

प्राक्प्रयोग , क्विप् ।

२२८ ॥ क्विझलि क्ङित्यनुनासिके ॥ ४ । १ । १३६ ॥ क्वौ क्ङिति च झलादौ प्रत्यये परतो योऽनुनासिकस्तस्मिन् परे योऽज् धातोस्तस्य दीर्घो भवति । २ । १ । २० । तिङ्सुप्त्यादिना समासः । ततः स्यादय —

२२९ ॥ म्वो श्चमो निः । १ । २ । ६९ ॥ मकारान्तस्य धातोः अन्तस्य पदान्ते मकारवकारयोश्च परयोर्नकारो भवति । प्रशान्, प्रशामौ, प्रशाम । प्रदाम्शब्दस्य प्रदान्, प्रदामौ, प्रदामः । हे प्रदान्, हे प्रदामौ, हे प्रदाम । प्रदामम्, प्रदामौ, प्रदाम । प्रदामा, प्रदान्भ्याम्, प्रदान्भि इत्यादि । तनु काङ्क्षायामित्यस्य प्रतानित्यादि । नकारस्यासत्वात् न इति लुग् न भवति । ङकारणकारान्तावप्रसिद्धौ । नकारान्तो राजन् शब्द ततः स्यादयः " न्यप्र " इति दीर्घे हल्ङ्याब्भ्य इत्यादिना सेर्लुप् । नः इति नकारस्य लुक् । राजा, राजानौ, राजान । एकामन्त्रणे, " न ङान्लुक " इति प्रतिषेधात् न लुग् भवति । हे राजन्, हे राजानौ, हे राजान । राजानं, राजानौ । शसादावजादौ " श्नोऽनोहल्यमात् " इति श्नादेशो भवति । श्चुत्वेन नकारस्य ञकार । राज्ञ , राज्ञा । हलादौ न इति नलुक्—

२३० ॥ नलुक् सुबाश्रये । १ । ७ । ४७ । न इति यो नकारलोपः स सुबाश्रये सुपि परे यत्पूर्वस्य कार्यं यन्त्र सुपाश्रितं कार्यं कर्तव्ये असत् भवति । इति नलोपस्यासत्त्वात् आत्वादि न भवति । राजभ्या, राजभि । राज्ञे, राजभ्यां, राजभ्य । राज्ञ , राजभ्या, राजभ्य । राज्ञः, राज्ञोः, राज्ञाम

ङौ ङिग्योर्वेति विकल्पेन इनादेशः । राज्ञि राजनि, राज्ञोः, राजसु । एवं मूर्द्धाक्षतक्षप्रपाव्य. । दिवन्शब्दस्य सुटि अविशेषः । शसादावजादौ इनादेशे कृते धातोर्वीगित्यादिना दीर्घः दीव्न', दीव्ना इत्यादि । पूषन्शब्दस्य भेदः । स्वादयः ।

२३१ । इन्हन्पूषार्यम्णः शौ । १ । २ । १२६ ॥ इन्-हन्पूषन्अर्यमन् इत्येतेषां शावेव परे यो नकारः तस्मिन् पूर्वोऽग् दीर्घो भवति इति नियमाद्दीर्घत्वे सावप्यप्राप्ते—

२३२ । सावतोश्च । १ । २ । १२७ । अत्वित्युकारानुबन्धस्य इन्हन्पूषार्यम्णां न सौ यो नकारस्तस्मिन् पूर्वोऽग्दीर्घो भवति न चैकामन्त्रणे । अन्यत्समानम् । पूषा, पूषणौ, पूषणः । हे पूषन्, हे पूषणौ, हे पूषणः । पूषणं, पूषणौ, पूष्ण. । पूष्णा । आदेशे कृते णत्वं शेषं पूर्ववत् । पूषभ्यामित्यादि । एवमर्यमन्शब्दः ब्रह्महन्शब्दस्य भेद । हन् हिंसागत्यो । ब्रह्मन् शब्दादम् ब्रह्माणं हतवानिति विग्रहे—

२३३ । ब्रह्मभ्रूणवृत्रात् क्विप् ४ । ३ । १९० । ब्रह्मादिभ्यः कर्मभ्य. परात् हन्तेर्धातोः भूतेऽर्थे क्विबेव भवति नान्यः । स सर्वोऽप्रयोगीत् क्विजाति विङत्यनुनासिक इति मातो दीर्घः इन्हन्पूषार्यम्णः शाविति नियमान्न भवति । स्वकृतास्युक्तमिति समासः सुप. इलुक् ततः स्यादयः सावतोश्चेति दीर्घ. न इति नलुक् । ब्रह्महा ।

२३४ ॥ सकेकाचोः ॥ १ । २ । ५८ ॥ पूर्वपदस्थात् मात्परस्य कवर्गवत्येकाचि चोत्तरपदे तदन्तस्य नम. सुववयवस्य च नकारस्य नित्यं णो भवति । ब्रह्महणौ, ब्रह्महणः । हे

ब्रह्महन्, हे ब्रह्महणौ, हे ब्रह्महणः। ब्रह्महणं, ब्रह्महणौ। शसादावचि श्नादेशे कृते—

२३५॥ नि घ्नः। १। २। ८५॥ हन्तेर्हकारस्य नकारे परे घकारो भवति।

२३६॥ घि घ्नः॥ १। २। ५२॥ हन्तेर्घकारे स्थानिनिमित्तयोरन्तरे सति णो न भवति। ब्रह्मघ्नः, ब्रह्मघ्ना, ब्रह्महभ्याम् इत्यादि। एवं भ्रूणहन् वृत्रहन् शब्दौ। सुपर्वन्सुवर्मन् शब्दयोस्त्वहल्वमादिति प्रतिषेधात् शसादौ श्नादेशो न भवति। अन्यत् समानम्। सुपर्वणा, सुवर्मणा इत्यादि नेयम्। एवं सुयज्वन् सुचर्मन् प्रभृतयः। श्वन् शब्दस्य सुट्यविशेषः श्वा श्वानौ श्वानः। हे श्वन् हे श्वानौ हे श्वानः। श्वानम् श्वानौ। शसादावजादौ—

२३७॥ श्वयुवमघोनां वस्येसुप्युश्। १। २। १४८। श्वन् युवन् मघवन् इत्येतेभ्यः अपदसंज्ञकावयवेभ्यः ग्यसुट् छिण्यादौ ईप्रत्यये सुपि च परे तदवयवस्य वशब्दस्य उशादेशो भवति। शकारः सर्वादेशार्थः। शुनः, शुना, श्वभ्याम्, श्वभिः इत्यादि। तथैव युवन्मघवन्शब्दयोरपि उशि कृते दीर्घौ भवतः यूनः, यूना, युवभ्याम्, युवभिरित्यादि। मघोनः मघोना मघवभ्यामित्यादि नेयम्। करिन् इत्यस्य सुटि न्यगिति भवन् दीर्घः इन्हन्पूषार्यम्णः शाविति निवर्तते सौ सावतोश्चेति दीर्घः नलुक्। करी, करिणौ, करिणः। हे करिन् हे करिणौ हे करिणः। करिणम्, करिणौ, करिणः इत्यादि। तथैव हस्तिन् शिखिन् गोमिन्प्रभृतयः। पथिनशब्दस्य भेदः—

२३८ ॥ इयनप्सुट्यन् ॥ १ । २ । १०९ । पथ्यादीनां नकारान्तानां शौ अनपुंसकविषये च सुटि अन्त्याजादेरन्नित्ययमादेशो भवति ।

२३९ ॥ थो नद् । १ । २ । ११० । पथ्यादीनां नकारान्तानां इयनप्सुटि परे थकारस्य नडागमो भवति । टकार आदिविध्यर्थः । अकार उच्चारणार्थः ।

२४० ॥ आस्स्यनः ॥ १ । २ । १११ ॥ पथ्यादीनां सकारादौ इयनप्सुटि परे अनः स्थाने आकारो भवति । सो विसर्जनीयश्च । पन्थाः । न्यगिति दीर्घः । पन्थानौ, पन्थानः । हे पन्थाः, हे पन्थानौ, हे पन्थानः । पन्थानम्, पन्थानौ । शसादावजादौ—

२४१ ॥ नः पथिमथ्यृभुक्षः ॥ १ । २ । १०८ ॥ पथिन् मथिन् ऋभुक्षिन् इत्येतेषां नकारान्तानामपदसंज्ञकानामन्त्याजादेर्लुग्भवति । पथः, पथा, पथिभ्याम्, पथिभिरित्यादि । एवं मथिन् ऋभुक्षिन् शब्दौ । अन्नन्तानामलिङ्गानां संख्याशब्दानां भेदोऽस्ति तेषां बहुसंख्येयवाचित्वात् बहुवचनमेव भवति । जश्शसोः " डतिष्णां संख्यानां जश्शसः " इति इलुक् इलुचीगिनट् इति नियमात् जसि न्यगिति दीर्घो न भवति । न इति लुक् । पञ्च हे पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः । आमः ष्णां संख्यानामिति नाम् " नाम्यतिसृचतुष्ष " इति दीर्घः नामि नकारेण व्यवधानेऽपि प्रतिषेधसामर्थ्यात् भवति नलुक् । पञ्चानां, पञ्चसु । एवं सप्तन्, नवन्, दशन्, द्वादशन् शब्दाः । अष्टन् इत्यतो जस्[illegible]—

२४१ ॥ चाऽष्टन आः । १ । २ । २१९॥ अष्टन् इत्येतस्य तदन्तस्य निर्न्यत्यसंबन्धिनि वा सुपि परे आकारो वा भवति । इति नकारस्याकारः । तत्र–

२४३ ॥ अष्ट औश् । १ । २ । १५३ ॥ अष्टा इति कृताकारस्याष्टन्नित्येतस्य सम्बन्धिनोर्जश्शसोः औशादेशो भवति शकार सर्वादेशार्थः. एऊच्यैजित्यैच् । शसि आतोऽनाङः इलुगिति इलुक् । आमो नित्यत्वान्नामि पुनराकारः । अष्टौ, हे अष्टौ, अष्टौ अष्टाभिः अष्टाभ्यः अष्टाभ्यः अष्टानाम् अष्टासु आत्वाभावे पंचन्शब्दवत् अष्ट, हे अष्ट, अष्ट अष्टभिः अष्टभ्य. अष्टभ्यः अष्टानाम अष्टसु । जकारान्तो भिषज्शब्दः स्यादय. हलङ्याडिति सेर्लुक्—

२४४ ॥ चोः कुः ॥ १ । २ ८८ ॥ चवर्गस्य पदान्ते जलि च परे कवर्गो भवति । चर्त्वं च । भिषक् भिषग्, भिषजौ भिषज. । हे भिषक् हे भिषग् हे भिषजौ हे भिषजः । भिषजा, भिषग्भ्यामित्यादि । एवं जन्मभाजादयः । युजृशब्दस्य भेद । युजृन् । योगे । ऋकारः ऋदितोतडिति विशेषणार्थः नकारस्तदर्थ. तत. पूर्ववत् क्विप् स्यादयः—

२४५ ॥ युजोऽसमासे । १ । २ । ११५ ॥ युजृन् इत्यस्यासमासे स्यनप्सुटि नम भवति । सोर्हलङ्याडिति लुक् पदस्येति जकारस्य लुक् ।

२४६ ॥ युज्याश्रिकुञ्चः । १ । २ । ८९ ॥ युज् अञ्चि कुञ्चि इत्येतेषां पदान्ते जलि च प्रत्यये परे कवर्गो भवति । इति नकारस्य ङकार । युङ् । "ङ्मां जन्यपदान्ते" इति परस्य

युञ्जौ, युञ्ज, हे युङ्, हे युञ्जौ, हे युञ्जः । युञ्जम्, युञ्जौ, युजः युजा युग्भ्याम् युग्भिः इत्यादि । अश्वं युनक्तीति विगृह्य क्विप् समासे, असमासे इति वचनात् नमागमो न भवति । अश्वयुक् अश्वयुग्, अश्वयुजौ, अश्वयुजः इत्यादि । भ्रस्जी पाके ईकारस्तदर्थः । धानाशब्दात् शस् धाना भृज्जतीति विगृह्य किपि—

२४७ ॥ वशिव्यचिव्यधिज्याग्रहिव्रश्चिप्रच्छिभ्रज्जां क्ङिति । ४ । १ । ११६ ॥ वश्यादीनां धातूनां किति ङिति च प्रत्यये परे साचोऽर्यपरस्य यन इगादेशो भवति । पुनरसमासः सस्योपदेशसामर्थ्यात् लोप । श्चुत्वजश्त्वे न भवतः । स्वादयः । पदत्वे—

२४८ ॥ संयोगस्यादिस्कोर्लुक् ॥ १ । २ । ९१ ॥ पदान्ते यस्संयोगो यश्च जलि च प्रत्यये तस्यादेः सकारस्य ककारस्य च लुग्भवति । जकारस्य,

२४९ ॥ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशः पः ॥ १ । २ । ९० ॥ व्रश्चादीनां चवर्गस्य छकारस्य शकारस्य च पदान्ते जलि च पकारो भवति । इति पकार तस्य जश्त्वेन डकार चर्त्वञ्च, धानाभृड् धानाभृट् धानाभृज्जौ धानाभृज्जः । धानाभृज्जम्, धानाभृज्जौ, धानाभृज्ज । धानाभृज्जा, धानाभृड्भ्याम्, धानाभृड्भि इत्यादि । रज्जुं सृजतीति विगृह्य क्विपि समास. तत. स्वादय । पत्वजश्त्वे रज्जुसृड् रज्जुसृट्, रज्जुसृजौ, रज्जुसृजः इत्यादि । एवं कंसपरिमृज् शब्दः । यजी देवपूजासंगतिकरणदानेषु । ईकारस्तदर्थः । [illegible]

यजतीति विगृह्य क्विपि–

२५० ॥ इज्यादिस्वप्वचः किति ॥ ४ । १ । ११५ ॥ इज्यादीनां स्वपवच् इत्येतयोश्च किति प्रत्यये च परे परेणाचा सहितस्य अरेफयकारपरस्य यवः स्थाने इगादेशो भवति । इक्येङरिति एङ् स्वादयः देवेट् देवेड्, देवेजौ, देवेजः इत्यादि । राजृ दीप्तौ । ऋकारः " ङेऽशास्वग्नास्यृदितः " इति पर्युदासार्थः अकारस्तदर्थः समः प्राक्प्रयोगः क्विबादि–

२५१ ॥ सम्राट् । १ । १ । ११३ ॥ समित्येतस्य राजतौ क्विबन्ते परेऽनुस्वाराभावो निपात्यते । स्वादयः हल्ङ्या-डित्यादिना लुक् व्रश्चेत्यादिना षकारे जश्त्वे चर्त्वे च कृते सम्राट् सम्राड्, सम्राजौ, सम्राजः इत्यादि । एवं विभ्राज्शब्दः । परिव्राजित्येतस्य अनडुद्ध्रुदित्यादिना डत्वम् परिव्राट् परिव्राड्, इत्यादि । बगडन्ता अप्रसिद्धा । दकारान्तः तत्त्वविद्शब्दः । तस्य भेदः । विद ज्ञाने तत्त्वं वेत्तीति विगृह्य क्विबादि । तत्त्ववित् तत्त्व-विद् तत्त्वविदौ तत्त्वविदः इत्यादि । एवं सर्वविद्–वेदविदादयः । द्विपाच्छब्दस्य भेदः । द्वौ पादावस्येति विगृह्य सुरेशशब्दवत् बहुव्रीहिः । द्विपाद इति स्थिते––

२५२ ॥ सुसंख्याच्चाहस्त्यादेः पादस्य लुक् । २ । १। २०७ । सु इत्यतः संख्यावाचिनो हस्त्यादिवर्जिताच्चोपमा-नवाचिनः शब्दात्परो यः पादशब्दस्तदन्तस्य बहुव्रीहेर्लुक् समासान्तो भवति । स्वादयः । द्विपात् द्विपाद्, द्विपादौ, द्विपादः । हे द्विपात् हे द्विपाद्, हे द्विपादौ, हे द्विपादः । द्विपादम्, द्विपादौ । शसादावजादौ टादौ–

२५३ । पादोऽपदस्यग्यसुद्धिण्यादौ पद् । १ । २ । १४४ अपदसञ्ज्ञकस्य य पाद इत्यवयव तस्य गी इत्येतस्मिन् सुद्धि-ण्यादिवर्जिते चान्यस्मिन् प्रत्यये पदित्यादेशो भवति । द्विपदः, द्विपदा, द्विपाद्भ्या, द्विपाद्भिः इत्यादि । एव सुपादादय । झकारान्तोऽप्रसिद्धः । भकारान्तः गर्दभ्शब्द भप्भाव जश्त्वं चर्त्वञ्च । गर्धप् गर्धब् गर्दभौ गर्दभ इत्यादि । घढान्तावप्रसिद्धौ । धकारान्तस्तत्वबुध्शब्द । बुधि मनि ज्ञाने इकारस्तदर्थ । तत्व बुध्यते इति विगृह्य क्विबादि बशो भषित्यादिना बकारस्य भकार जश्त्वचर्त्वे । तत्वभुत्, तत्वभुद् तत्वबुधौ तत्वबुध तत्वबुधम्, तत्वबुधौ, तत्वबुध । तत्वबुधा तत्वभुद्भ्याम् तत्वभुद्भिः इत्यादि । एव अर्थबुध्–सुबुधादय । खफछठान्ता अप्रसिद्धाः । थकारान्तोऽग्निमथ्शब्द. । मथे विलोडने । एकारः लक्षणशसिदिनजाग्रादिनृमहश्चेति विशेषणार्थ अग्निं मथ्नातीति विगृह्य क्विबादि तत स्वादय जश्त्वचर्त्वे । अग्निमत् अग्निमद् अग्निमथौ, अग्निमथ इत्यादि । एव गोमथादय. । चकारान्त सुवाच् शब्द । शोभना वागस्येति विगृह्य बहुव्रीहि तत स्वादय चो कुरिति कुत्वम् । सुवाक् सुवाग् सुवाचौ सुवाचः इत्यादि । कुञ्च्शब्दस्य भेद । क्रुञ्च कौटिल्याल्पीभावयो । अकार उच्चारणार्थ । तत क्विबादि । युञ्चक्रुञ्चेति निपातनात् उकारपूर्वो रेफनलोपाभावश्च । स्वादयः पदस्येति लुक् युज्यञ्चिक्रुञ्च इति नकारस्य ङकार । क्रुङ् । "म्नां जययपदान्त" इति ञकार । क्रुञ्चौ क्रुञ्च. । आमन्त्रणेऽप्यविशेष । क्रुञ्च, क्रुञ्चौ, क्रुञ्च क्रुञ्चा क्रुङ्भ्याम्, क्रुङ्भि, क्रुञ्चे, क्रुङ्भ्याम्, क्रु-

ङ्भ्य । क्रुञ्च, क्रुङ्भ्याम्, क्रुङ्भ्यः । क्रुञ्चः क्रुञ्चो: क्रुञ्चाम् । क्रुञ्चि क्रुञ्चो । ङ्णोः गकुडक् शरीति पक्षे गगागम.।चरीति चर्त्वम्। क्रुङ्क्षु, क्रुङ्षु । मूलवृश्चशब्दस्य भेदः ओव्रश्चू छेदने ओकारः "क्त्वोर्द्दश्यादित्सूयत्यादेर्देस्य चामन्त्र्" इति विशेषणार्थः। ऊकारः "रैधायौदिद्धूज" इति विशेषणार्थः। मूलं वृश्चतीति विगृह्य किवादि यदिव्यचीत्यादिना साचो यत्र इक् ततः स्वादयः संयोगस्यादिस्कोर्लुगिति सकारस्य लुक् व्रश्चभ्रस्जेत्यादिना चकारस्य षकार. जश्त्वचर्त्वे। मूलवृट्, मूलवृड्। श्चुत्वेन सकारस्य शकारः। मूलवृश्चौ मूलवृश्चः। आमन्त्रणेऽप्यविशेषः। मूलवृश्चम्, मूलवृश्चौ, मूलवृश्चः। मूलवृश्चा, मूलवृड्भ्याम्, मूलवृड्भिः मूलवृश्चे, मूलवृड्भ्याम्, मूलवृड्भ्यः। मूलवृश्चः मूलवृश्चोः मूलवृश्चाम्। मूलवृश्चि मूलवृश्चोः। सुपि पदान्ते—

२५४। ङ्नंस्तट् सोऽश्चः । १ । १ । १४६ । पदान्ते वर्तमानात् ङकारात् नकाराच्च परस्य सकारस्य तडागमो भवति श्चःसंयोगस्य सकारस्य न भवति। अनुबन्धलोप.। मूलवृट्त्सुः मूलवृट्सु। प्राञ्च्शब्दस्य भेद.। अञ्चू गतिपूजनयोः। ऊकार, पूर्ववत्। प्रपूर्व प्राञ्चतीति विगृह्य क्विप्—

२५५। हलो नौनर्चाञ्च्युदितोः ।४।१।२२१। हलन्तस्य धातोरुपान्तस्य नकारस्य क्ङिति प्रत्यये लुग् भवति पूजायां वर्तमानमञ्चतिमुदितश्च वर्जयित्वा। समासादि दीर्घश्च ततः स्वादय.। "उगिदचोऽनैघादेरिति नम्। सोर्हल्ङ्यादित्यादि स्लुक् पदस्येति लुक्, युज्यञ्चिक्रुञ्च इति नकारस्य ङकार

प्राङ् । अन्यत्र **स्रां जय्यपदान्त** इति नकारः । प्राञ्चौ, प्राञ्चः आमन्त्रणेऽप्यविशेषः प्राञ्चम्, प्राञ्चौ । शसादावजादौ प्रअच्-अस् इति स्थिते—

२५६ । **श्वोऽचः** । १ । २ । १४६ ॥ अपदसंज्ञकस्याव-यवो योऽञ्चतिर्लुप्तनकारस्तस्य यसुट्छिण्यादौ परे श्च इत्यादेशो भवति । शकारस्सर्वादेशार्थः अकार उच्चारणार्थः ।

२५७ । **श्वे** । १ । २ । १३९ ॥ श्वोऽच इति यश्चका-रानुबन्धकश्चादेशः तस्मिन् पूर्वोऽग् दीर्घो भवति । प्राचः, प्राचा । हलादौ कुत्वजश्त्वे । प्राग्भ्याम्, प्राग्भिः । प्राचे, प्राग्भ्याम्, प्राग्भ्यः । प्राचः प्राग्भ्याम् प्राग्भ्यः । प्राचः प्राचोः प्राचाम् । प्राचि प्राचोः । शास्वसीत्यादिना षत्वम् प्राक्षु । प्रतिपूर्वत्वे प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । आमन्त्रणेऽप्य-विशेषः । प्रत्यञ्चम् प्रत्यञ्चौ प्रतीचः प्रतीचा प्रत्यग्भ्याम् प्रत्यग्भिः इत्यादि । उत्पूर्वत्वे उदङ् उदञ्चौ उदञ्चः । आमन्त्रणेऽप्यविशेषः । उदञ्चम्, उदञ्चौ । शसादावजादौ—

२५८ ॥ **उद ई** । १ । २ । १४७ ॥ उदित्येतस्मात्पर-स्यापदसंज्ञकस्यावयवस्य लुप्तनकारस्याञ्चतेर्यसुट्छिण्यादौ प्रत्यये ई इत्यादेशो भवति । स च तस्मादादेरित्यकारस्य भवति । उदीचः उदीचा उदग्भ्याम् उदग्भिरित्यादि । विष्वक्पू-र्वत्वे विष्वगञ्चतीति विगृह्य क्विबादि विष्वक्अच् इति स्थिते—

२५९ ॥ **विष्वग्देवसर्वादेर्डद्रिगञ्चिक्वौ** । २ । २ । ६५॥ विष्वग्देव इत्येतयोः सर्वादेश्चाञ्चतौ क्विप्रत्ययान्ते उत्तरपदे डद्रिगागमो भवति । ककारो देशविध्यर्थः । डकारोऽन्त्याजादि-

लुगर्थः। शेषं पूर्ववत्। विष्वद्र्यङ्, विष्वद्र्यञ्चौ, विष्वद्र्यञ्चः इत्यादि। एवं देवद्र्यङ्, सर्वद्र्यङ्, तद्र्यङ्,यद्र्यङ्, एतद्र्यङ्, इदद्र्यङ्, एकद्र्यङ् इत्यादयः। अदसि पुनः अदद्रि अङ् इति स्थिते—

२६० ॥ वाऽद्रेः। १। २। ४५ ॥ अद्र्यन्तस्यादसो दकारस्य वा यथासंभवं मकारो भवति मकाराच्च परस्यालः स्थाने गुर्नित्यं भवति । पक्षे द्वयोरपि दकारयोर्मकाराभ्याञ्च परयोरकाररेफयोर्गु इत्यादेशः । तत्र अमुमुइ अच् इति स्थिते " अस्वे " इति इकारे परे उकारस्य यत्वादेश. प्राप्तः असत्त्वान्न भवति। अत्र गित इति प्रतिषेधः कस्मान्न भवतीति चेन्न पदान्त इत्यधिकारात् पदान्त एव विधानात् यद्यत्रा-पदान्तेऽप्यसत्त्वं बाधित्वा गित्करणसामर्थ्यात् सत्त्वात् " गित " इति प्रतिषेधः स्यात् एवमन्यत्रापि स्यात् इत्य-मुया, अमुयोरिति न सिध्येत्। अमूआ इति स्थिते अमूआ अमूओरिति स्यात्। परस्येकारस्य यत्। अमुमुयङ् अमुमु-यञ्चौ अमुमुयञ्च । अमुमुयञ्चम् अमुमुयञ्चौ अमुमुईचः। अमुमु-ईचा, अमुमुयग्भ्याम्, अमुमुयग्भि. । अमुमुईचे, अमुमुय-ग्भ्याम्, अमुमुयग्भ्यः। अमुमुईच, अमुमुयग्भ्याम्, अमुमु-यग्भ्य.। अमुमुईच, अमुमुईचो, अमुमुईचाम्। अमुमुईचि, अ-मुमुईचो:, अमुमुयक्षु। पक्षे पूर्वदकारस्य मकारस्ततः परस्य च गु.। अमुद्र्यङ, अमुद्र्यञ्चौ, अमुद्र्यञ्च.। आमन्त्रणेऽप्यवि-शेषः। अमुद्र्यञ्चम, अमुद्र्यञ्चौ, अमुद्रीच.। अमुद्रीचा इत्या-दि। पक्षे परस्य दकारस्य मकारः ततः परस्य च गुः अद-

मुयङ् अदमुयञ्चौ अदमुयञ्च इत्यादि। पक्षे न कस्यचिन्मत्वं गुत्व वा। अदद्र्यङ् अदद्र्यञ्चौ अदद्र्यञ्चः इत्यादि। सम्सह-पूर्वत्वे समञ्चति सहाञ्चतीति विगृह्य क्विबादि। सम्अचु, सह-अच् इति स्थिते—

२६१॥ **सम्सहस्य समिसध्रि** ॥ ७।२।६६। सम् सह इत्येतयोरञ्चतौ क्विप्रत्ययान्ते उत्तरपदपरे यथासंख्य समि, सध्रि इत्येतावादेशौ भवत। शेप पूर्ववत्। सम्यङ् सध्र्यङ्, इत्यादि। तिरसपूर्वत्वे तिरोऽञ्चतीति विगृह्य क्विबादि। तिरस् अच् इति स्थिते—

२६२॥ **तिरसस्तिर्ये**। ७।२।६७॥ तिरस् इत्येतस्याञ्चतौ क्वो अकारादौ उत्तरपदे परे तिरसस्तिरि इत्ययमादेशो भवति। शेप पूर्ववत्। तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः। आमन्त्रणेऽप्यविशेपः। तिर्यञ्चम्, तिर्यञ्चौ।

२६३। **श्चोऽचेः**। १।२।१४६। श्चू स्त्वो। तिरश्चः तिरश्चा तिर्यग्भ्याम् तिर्यग्भिरित्यादि। पूजाया वर्तमानस्य अञ्चतेर्नलुगभावात् नमागमो न भवति। पूर्ववन्नीतिः प्राङ् प्राञ्चौ प्राञ्च। आमन्त्रणेऽप्यविशेप। प्राञ्चम् प्राञ्चौ प्राञ्च प्राञ्चा प्राङ्भ्याम् प्राङ्भि। प्राञ्चे प्राङ्भ्याम् प्राङ्भ्य। प्राञ्चः प्राङ्भ्याम् प्राङ्भ्यः। प्राञ्च प्राञ्चोः प्राञ्चाम्। प्राञ्चि प्राञ्चो। चकारस्य लोपे कुत्वे च कृते ङणोःगकुङकुशरीति

१—पदान्तस्याच इत्यादेशो भवति ग्यसुदृछिण्याद्गौ परे। शतायिनी। श सर्वादेशार्थ अदुच्चारणार्थं। इति वृहत्प्रक्रियाया सूत्रार्थं उक्त।

पक्षे गगागमः चर्त्वपत्वे प्राङ्क्षु, प्राङ्षु। टकारान्तोऽप्रसिद्धः। तकारान्तो मरुच्छब्दः ततः स्वादयः। मरुत् मरुद्, मरुतौ, मरुतः इत्यादि। एवं त्वत्शब्दः। भवत्शब्दस्य भेदः। भवतु इति स्थिते उकार उगित्कार्यार्थः ततः स्वादयः, नमादिश्च सावतोश्चेति दीर्घः सोर्हल्ङ्यादिना लुक् पदस्येति तकारस्य लोपः। भवान् भवन्तौ भवन्तः। एकामन्त्रणे वोशनोशनन् इत्यादि। एवमघवत्भगवत्शब्दावुकारानुबन्धौ। गोमत्शब्दस्य गोमान् गोमन्तौ गोमन्तः इत्यादि। शत्रन्तस्य भवच्छब्दस्य भेदः। भवत् इति स्थिते ऋकार उगित्कार्यार्थः ततः स्वादयो नमादिश्च। भवन्, भवन्तौ, भवन्तः। हे भवन् हे भवन्तौ हे भवन्तः। भवन्तम् भवन्तौ भवतः भवता इत्यादि। एवं जरत्पचत्प्रभृतय.। महच्छब्दस्य विशेषः। महत् इति स्थिते ऋकार उगित्कार्यार्थः तत. स्वादयो नमादिश्च—

२६४ ॥ स्महतः १।२।१३५॥ सकारान्तस्य महच्छब्दस्य च श्यनप्सुटि निमित्ते यो नकारः तस्मिन् पूर्वोऽग् दीर्घो भवति, न चैकामन्त्रणे। सोश्च लुक्। महान् महान्तौ महान्तः। हे महन् हे महान्तौ हे महान्तः। महान्तम् महान्तौ महतः इत्यादि। शत्रन्तानां द्विरुक्तधातूनां भेदोऽस्ति। डुदाञ् दाने। डुञ्कारानुबन्धौ पूर्ववत्। धातुसंज्ञायां सतीति लट् तस्य शत्रादेशः। कर्तरि शविति शप् तस्य ह्वदादेः श्लुग्लुक् इति श्लुप्।

२६५ ॥ द्विर्धातुः श्लुप्लिङ्ङे प्रत्यये प्राक्त्वच्यचः ॥ ४।१।४३॥ श्लुपि लिटि ङे च प्रत्यये परे धातुर्द्विर्भ-

वति । अजादौ तु तन्निमित्तादच्कार्यात्प्रागेव भवति । दादाअत् इति स्थिते ऋकार उगित्कार्यार्थः । पूर्वस्यास्तेऽचि युज्योरिति प्रस्तुत्य—

२६६ ॥ आण्जश् रज्झपः ॥ ४ । १ । ७७ । द्विर्भावे पूर्वस्य य ऋवर्णे योऽच् यश्च झप् तेषा यथासंभवं अ अण् जशश्च भवन्ति । इत्याकारस्याकार ।

२६७ ॥ श्नाज्ञेरातः ॥ ४ । ० । ४७ ॥ श्नाप्रत्ययस्याज्ञेर्द्विरुक्तेर्दरिद्रातेश्च धातोराकारस्यापीति यि चालि लादेशे परे लुग्भवति । ददत् इति स्थिते ततः स्वादयः उगिदचोऽनधावेरिति प्राप्तो नमागमः—

२६८ ॥ न नम् ॥ १ । ० । १५ । अज्ञेर्द्विरुक्तात् जक्षादेश्च परो य शता तदन्तस्य शब्दरूपस्य यो नम् प्राप्नोति स सर्वोपि न भवति । इति प्रतिषेधान्न भवति । ददत्, ददतौ ददतः इत्यादि। एवं दधत्प्रभृतय. । जक्ष भक्षहसनयोः अकार उच्चारणार्थ । लट शत्रादेश । शप् तस्य ह्वदादेः श्लुरुलुगिति श्लुक्। ततः स्वादय न नमिति नम्प्रतिषेध । जक्षत्, जक्षतौ, जक्षत इत्यादि । एवं जागृ निद्राक्षये, दरिद्रा दुर्गतौ, चकासृ दीप्तौ, शासु अनुशिष्टौ इत्येतेषा धातूना लटः शत्रादेशे शपः श्लुचि च कृतायाम् जाग्रत्, दरिद्रत्, चकासत्, शासत् इति रूपनयः । ककारपकारान्तावप्रसिद्धौ । शकारान्तो विश् शब्दः तत स्वादयः । पदान्ते व्रश्चभ्रस्जादिना षकार जश्त्वचर्त्वे । विट् विड् विशौ विश इत्यादि। तादृशशब्दस्य भेद । दृशृ प्रेक्षणे । ऋकार ऋदितोऽतङिति विशेषणार्थः । स इव दृश्यत इति विग्रहे—

२६९ ॥ त्यदाद्यन्यसमानाद् गौणाद् दृशेराप्ये क्विकट्क्साः ॥ ४ । ३ । १८० ॥ त्यदादेरन्यशब्दात्समानशब्दाच्च गौणादुपमेयवृत्ते सुबन्तात् परात् दृशेर्धातोराप्ये कर्मणि क्विकट्क्सा इत्येते प्रत्यया भवन्ति। इति क्विप्रत्ययः स सर्वोऽप्रयोगी। ककार अक्ङिडति निषेधार्थ इकार उच्चारणार्थः वकारः विजादीना समत्वार्थ । अन्यथा सोऽपि स्यात्। अस्युक्तमिति समासः। ननु दृश् इति स्थिते—

२७० । आ घद्दृग्दृशदृक्षे । २ । २ । १०७ । घतुप्रत्यये दृगादिषु चोत्तरपदेषु पूर्वस्याकारो भवति पुनर्दीर्घः अनडुद्धुदित्यादिना गत्वम् चर्त्वञ्च। तादृक् तादृग् तादृशौ तादृशः। आमन्त्रणेऽप्यविशेष । तादृशम्, तादृशौ, तादृशः इत्यादि। एवममूदृश् भवादृश् अन्यादृश् प्रभृतयः। पकारान्तो रत्नमुपशब्दस्ततः स्यादयः जश्त्वचर्त्वे । रत्नमुट् रत्नमुड्, रत्नमुपौ, रत्नमुपः इत्यादि। एवं द्विपादय । षषो जशादिषु "डतिष्णां संख्यानाम् जश्शसः" इति श्लुक जश्त्वचर्त्वे। षट् षड्। हे षट् हे षड्। षट् षड्। षड्भि षड्भ्य षड्भ्यः । ष्णां संख्यानामिति नाम्भाव । षदत्वे जश्त्वम् "प्रत्यये" इति डकारस्य णकारः नकारस्य ष्टुत्वम्। षण्णाम् षट्सु । सकारान्त सुवचस् शब्दः शोभन वचोऽस्येति विगृह्य सुरेशब्दवद् बहुव्रीहिः तत. स्यादयः सौ—

२७१ । अमोऽनेधादेः । १ । २ । १३८ ॥ अनेधादेः असन्तस्य सौ परे यस्तदासन्नोऽग् दीर्घो भवति न चैकामन्त्रणे । सुवचाः सुवचसौ सुवचसः । हे सुवच , हे सुवचसौ,

हे सुवचस. । सुवचसम्, सुवचसौ, सुवचसः । सुवचसा, भकारादौ पदत्वे रित्वोत्वे भवतः । सुवचोभ्याम् सुवचोभिः इत्यादि । एवं सुवयस् सुपयस् मुदितमनस् प्रभृतयः । उशनस्शब्दस्य भेदः । ततः स्वादय. ऋत्वसीत्यदिना सोर्डादेश. अन्त्याजादिलुक् । उशना उशनसौ उशनसः । एकामन्त्रणे वोशनोशनन्नित्यादिना पक्षे उशन, उशनन् इत्यादेशौ भवतः सोश्च लुक् अन्यदा सकारान्त एव । एवं त्रैरूप्यम् । हे उशन हे उशनन् हे उशन, हे उशनसौ, हे उशनसः । उशनसम्, उशनसौ, उशनस· । उशनसा । भकारादौ रित्वोत्वे एङ् च । उशनोभ्याम् उशनोभिरित्यादि । पुंस्शब्दस्य भेदः । पुम्सु इति स्थिते उकार उगित्कार्यार्थः ततः स्वादयः । सुटि—

२७२ ॥ पुंसो ङ्सुः ॥ १ । २ । ११६ ॥ पुम्सु इत्येतस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा श्यनप्सुटि परे ङसित्यादेशो भवति । ङकारोन्तादेशार्थः उगिद्चोऽनेधादेविति नम् स्महत्त इति दीर्घः हलुङ्याडित्यादिना लुक् पदस्येति सकारस्य लुक् । पुमान् । शल्यनुस्वारः पुमांसौ पुमांसः । हे पुमन्, हे पुमांसौ, हे पुमांसः । पुमांसम् पुमांसौ पुंसः । पुंसा । हलादौ पदस्येति लुचि मम्मोहलितावितिमकारस्यानुस्वारोऽनुनासिको वा । पुंभ्याम् पुंभिः । पुंसे पुंभ्याम् पुंभ्यः । पुंसः, पुंभ्याम्, पुंभ्यः पुंसः पुंसोः पुंसाम् । पुंसि पुंसोः । क्विन्नःमप्पिःशर्नम इति षिनं भवति नम्ग्रहणस्यानुस्वारनियमार्थत्वात् । पुंसु । श्रेयस्शब्दस्य भेदः । स चोकारानुबन्धः ततः स्वादयः नगादि स्महत्त

विदुषः विदुषोः विदुषाम् । विदुषि विदुषो. विद्वत्सु । भात्यनन्तवीर्य. । अत्रः ˘क ˘पान्ता अप्रसिद्धा. ।

इति हलन्ताः पुलिङ्गाः ।

## अथ हलन्ताः स्त्रीलिङ्गाः ।

हकारान्तस्त्रीलिङ्गः उपानहशब्द. । णहो बन्धने ईकारस्त-इर्थः णो न· उपपूर्वः ततः क्विबादि—

२७६ ॥ **नहिवृतिवृषिव्यधिसहितानिरुचिक्वौ तिकारकस्य ।** २ । २ । ९० ॥ नह्यादिषु धातुषु क्विबन्तेषूत्तरपदेषु अजन्तस्य पूर्वपदस्य तिसंज्ञकस्य कारकस्य च दीर्घो भवति । ततः स्वादयः—

२७७ ॥ **नहो धः** । १ । २ । ८७ ॥ नहो हकारस्य पदान्ते जलि च परे धकारो भवति । जश्त्वचर्त्वे । उपानद् उपानत् उपानहौ उपानहः इत्यादि नेयम् । उष्णिहः अनुडुह्-घुदित्यादिना गत्वम् । उष्णिक् उष्णिग् उष्णिहौ उष्णिहः इत्यादि । यकारान्तोऽप्रसिद्ध । वकारान्तो दिव्शब्दः सोऽपि सुदिव्शब्दवत् द्यौ. दिवौ दिवः इत्यादि । रेफान्तो गिर्शब्दः गॄ निगरणे—

२७८ ॥ **सम्पदादिभ्यः क्तिन् क्विप्** । ४ । ४ । ७२ ॥ सम्पदादिभ्यः कर्तरि स्त्रियां क्तिन्क्विपौ भवत. । इति क्विप्—

२७९ ॥ **अन्त्योपान्त्यर्तामिर्** ॥ । । ॥ धातोरन्त्यस्य उपान्त्यस्य च ऋकारस्य इरादेशो भवति । ततः स्वादयः पदत्वे धातोर्वीगित्यादिना दीर्घो विसर्जनीयश्च । गीः गिरौ

गिर । आमन्त्रणेऽप्यविशेषः हे गीः, हे गिरौ, हे गिर । गिरम् गिरौ गिर । गिरा । विसर्जनीयस्येति रेफः हलादौ गीर्भ्याम्, गीर्भिः इत्यादि । सुपि विसर्जनीयस्यापवादः रस्सुप्सीति रेफ । गीर्षु । धातुग्रहणे तत्प्रत्ययविज्ञानमिति म्रोऽर्चीति लत्वं न भवति । धुर्वै हिंसायाम् ऐकारोनङीयङ्व्यैङ्विद्वेटोऽपतः इति विशेषणार्थः । ततः क्विप् ।

२८० ॥ राल्लुक् ॥ ४ । १ । १४३ । रेफात्परयोर्धातोः छकारवकारयोः अनुनासिके क्वौ जलि च परे लोपो भवति ततः स्यादयः । धूः धुरौ धुर इत्यादि । एवं पुरादयः । चतुर्शब्दस्य भेद । ततो जसादि । त्रिचतुरःस्त्रियां तिसृचतसृ इति चतस्रादेश । रोनपोऽच्युरिति रेफ । चतस्रः हे चतस्रः, चतस्रः, चतसृभिः, चतसृभ्यः चतसृभ्यः । नामि अतिसृचतुष्प इति प्रतिषेधात् दीर्घो न भवति । चतसृणाम् चतसृषु । लकारञकारान्तावप्रसिद्धौ । मकारान्तः प्रियप्रदाम् शब्दः सोऽपि प्रदाम्शब्दवत् । ङकारणकारान्तावप्रसिद्धौ । नकारान्तः सीमन् शब्दः सोऽपि राजन्शब्दवत् । एवं धामन्नहुराजन्प्रभृतयः । जकारान्तः सृज्शब्दः सोऽपि भिषक्शब्दवत् । चगडान्ता अप्रसिद्धाः दकारान्तो दृषद्शब्दः तस्याप्यविशेषः । एवं शरद्सपद्विपदादय । झकारान्तोऽप्रसिद्धः । भकारान्त ककुभ्शब्दः तस्याप्यविशेष । ककुप्, ककुभौ, ककुभ इत्यादि । घढान्तावप्रसिद्धौ । धकारान्त० समिध् शब्दः । समित् समिद् समिधौ समिधः इत्यादि खफछठान्ता अप्रसिद्धा । थकारान्तोऽग्निमथ्शब्द सोऽपि पूर्ववत् । अग्निमद् अग्निमत् अग्निमथौ अग्निमथः इत्यादि ।

चकारान्तः त्वच्शब्दः तस्य कुत्वं जश्त्वचर्त्वे । त्वक् त्वग् त्वचौ त्वचः इत्यादि । एवं वाक्प्रभृतयः । टकारान्तोऽप्रसिद्धः । तकारान्तो विद्युत् शब्दः तस्याप्यविशेषः । एवं त्रिंशत् चत्वारिंशत् पञ्चाशदित्यादयः। ककारान्तोऽप्रसिद्धः । पकारान्तोऽप्शब्दः ततो बहुवचनमेव भवति । जसि अप्तृन्नित्यादिना दीर्घः । आपः हे आपः अपः । भकारादौ—

२८१ । भेऽपोऽद् । १ । २ । २१८ । अपः भकारादौ सुपि परे अद्भवति । अद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु । शकारान्तो दृश्शब्दः । दृश् प्रेक्षणे ऋकार इत् ततः क्विबादि स्वादयश्च । अनडुद्ध्रुदित्यादिना गत्वम । दृक् दृग् दृशौ दृशः इत्यादि । एवं विश्घृतस्पृशशब्दौ । षकारान्तः त्विष्शब्दः सोऽपि रत्नमुष्शब्दवत् । एवं विप्रुषादयः । दधृषोऽनडुद्ध्रुदित्यादिना गत्वम् । दधृक् दधृग्, दधृषौ, दधृषः इत्यादि । सकारान्तः सुमनस् शब्दः सोऽपि सुवचसशब्दवत् । एवमन्यिमशब्द । सुपि सरि वेति पक्षे सकार । शास्वसीत्यादिना षिः ततः ष्टुत्वम् । आर्चिष्षु, अर्चिःषु । अनुस्वाराद्यन्ता अप्रसिद्धाः ।

इति हलन्ताः स्त्रीलिङ्गाः ।

## अथ हलन्ता नपुंसकलिङ्गा उच्यन्ते ।

हकारान्तो गोदुहशब्दः ततः स्वादय स्वमोः इलुगिति इलुक् । गोधुक् गोधुग् । आङश्चातो गौरिति गौ । गोदुही जश्शसः शिरिति शिः ।

२८२ । जलाम् । १ । २ । १२ ॥ अचः परा या जल्-

जाति. तदन्तस्य नप. सौ परे नित्यं नम् भवति । शल्यनुस्वार इत्यनुस्वार. । गोदूंहि । शेषं पूर्ववत् । एवं श्वलिहादय । यकारवकारान्तावप्रसिद्धौ । रेफान्तश्चतुरश्शब्द । जश्शसः शिरिति शि:, वा इति वादेशः। चत्वारि हे चत्वारि चत्वारि। शेषं पुंवत्। वार्शब्दस्य वाः वारी वारि इत्यादि । सुपि रः सुप्सीति रेफः शर इति द्वित्वप्रतिषेध पिश्च। वार्षु । लकारवकारान्तावप्रसिद्धौ । मकारान्त. प्रियप्रदाम्शब्दः । प्रियप्रदान्, प्रियप्रदामी प्रियप्रदामि इत्यादि । ङकारणकारान्तावप्रसिद्धौ । नकारान्तः चर्मन्शब्द । तत स्वादय. न इति नलुक् । चर्म, चर्मणी, चर्माणि । आमन्त्रणे—

२८३। अलुग्वा । १ । २ । ३ । यो न ङानलुगिति लुचोऽभाव प्रतिषेध उक्त स नपुंसकस्य वा भवति । प्रतिषेधाभावे न इति नलुक् । हे चर्मन् हे चर्म हे चर्मणी हे चर्माणि। अहल्वमादिति निषेधात् आदेशो न भवति । चर्मणा चर्मभ्याम् चर्मभि. इत्यादि। एवं कर्मन्वर्मन्प्रभृतय । ब्रह्महन् शब्दस्य ग्यों ङिग्योर्वेति वा आदेश. निन इति घत्वं च। ब्रह्मह, ब्रह्महणी ब्रह्मघ्नी, ब्रह्महाणि। पुनरपि ब्रह्मह, ब्रह्महणी ब्रह्मघ्नी ब्रह्महाणि। शेषं पूर्ववत । अहन्शब्दस्य भेद। ततः स्वादय. स्वमो रलुक् । मजूरत्स्म इत्यादिना नकारस्य रिः विसर्जनीयश्च अहः, अह्नी अहनी, अहानि । आमन्त्रणेऽप्यविशेषः। अहः, अह्नी अहनी, अहानि। अह्ना भकारादौ रित्वे तस्यातोद्धष्युरित्युत्वमेद् च। अहोभ्याम्, अहोभिरित्यादि। जकारान्त: धानाभृज्ज्शब्दः तत स्वादय संयोगस्यादिस्कोर्लुगिति लुक्। प्रथ-

भ्रस्जेत्यादिना षत्वं जश्त्वचर्त्वे। धानाभृट् धानाभृड् धानाभृज्जी। जश्शसो अन्तरङ्गत्वात् सकारस्य श्चुत्वजश्त्वयोः कृतयो शौ नमि ञां जय्यपदान्त इति ञकार ।

२८४ । जरि जरः स्वे वा । ८।१ १३३ । हल.परस्य झरो जरि स्वे परे लुग्वा भवति । धानाभृट् धानाभृड्, धानाभृज्जी, धानाभृञ्जि। आमन्त्रणेऽप्यविशेष । धानाभृट् धानाभृड्, धानाभृज्जी, धानाभृञ्जि इत्यादि। शेषं पूर्ववत् । बगडान्ता अप्रसिद्धा । दकारान्तो द्विपाच्छब्द । द्विपात् द्विपाद् ग्यां पादो पत्स्येत्यादिना पद्भाव द्विपदी, द्विपांदि इत्यादि। एवं त्रिपादादय ।झकारान्तोऽप्रसिद्ध ।मकारान्तो गर्दभ्शब्दः गर्धप्, गर्धब् गर्दभी, गर्दम्भि । इत्यादि घढान्तावप्रसिद्धौ। धकारान्तस्तत्वबुध्शब्द । तत स्वादय भष्भाव जश्त्वचर्त्वे। तत्वभुत्, तत्वभुद्, तत्वबुधी, तत्वबुन्धि इत्यादि। खफछठान्ता अप्रसिद्धा । थकारान्तो गोमथ्शब्द । गोमद् गोमत् गोमथी गोमन्थि इत्यादि । चकारान्तो मूलवृश्च्शब्द ततः स्वादयः संयोगस्यादिस्कोर्लुगिति लुक् व्रश्चभ्रस्जेत्यादिना षत्व जश्त्वचर्त्वे । मूलवृट् मूलवृड् मूलवृश्ची मूलवृंश्चि इत्यादि । प्राच्शब्दात्स्वादय स्वमोः स्लुक् चोः कुत्वम्। प्राक् प्राग्। ग्यादेशे श्चोऽच इति श्चादेश श्चे इति दीर्घ। प्राची। शौ जलामिति नम् ञां जय्यपदान्त इति ञकार । प्राञ्चि । आमन्त्रणेऽप्यविशेष । प्राक् प्राग् प्राची प्राञ्चि । शेषं पुंवत् । एवं प्रत्यङ् उदङ् अमुमुयङ् तिर्यङ् सम्यङ्प्रभृतयः । टकारान्तोऽप्रसिद्धः तकारान्तः शकृतशब्दः । ततः स्वादयः । शकृत शकृद शकृती

शकृन्ति इत्यादि । एवं जरत् गोमत् प्रभृतयः । ददत्शब्दात्स्वादय । ददत् ददद् ददती । शौ—

२८५ ॥ अज्ञेश्शतुः ॥ १ । २ । १४ ॥ अद्भवति श्रेर्यस्मात् ततोऽज्ञेर्द्विरुक्तात् जक्षादेश्च पञ्चकात् परो यः शतृप्रत्यय तदन्तस्य नपो शौ परे आर्यवज्रस्य मतेन नम् भवति अन्येषा न भवति । ददन्ति,ददति । शेषं पुंवत् । एवं द्विरुक्तधातूनां जक्षादीनाञ्च रूपनय. । यात् इत्यस्मात् स्वादय. । यात् याद् । ग्यां द्विग्योर्वादश्न इति पक्षे नम् । यान्ती याती । शौ जलामिति नम् । यान्ति । आमन्त्रणेऽप्यविशेषः । यात् याद् यान्ती याती यान्ति । शेषं पूर्ववत् । एवं वातृप्रभृतय. । भवत्शब्दात् स्वादयः भवत् भवद् । ग्यां शप्श्यादिति नम् । भवन्ती, भवन्ति इत्यादि नेयम् । एवं दीव्यदादयः शत्रन्ता. । कषशान्ता अप्रसिद्धा । षकारान्तः पष्शब्द पुंवत् नेयः । सकारान्तः पयस्शब्दः । पय , पयसी । जलामिति नम् स्महत इति दीर्घः शल्यनुस्वार इति अनुस्वार । पयांसि । ७ मन्त्रणेऽप्यविशेष । पय पयसी पयांसि इत्यादि । एवं तेजस्वयस्यशस्प्रभृतय । विद्वस्शब्दात्स्वादय । विद्वत् विद्वद् । " कस उस् " इति उस् । विदुषी, विद्वांसि इत्यादि । अर्चिस्शब्दात् स्वादयः । अर्चि अर्चिषी षत्वविधौ परे असिद्धमित्यधिकारात् नमि दीर्घे च कृते पश्चात् षत्वम् । अर्चींषि इत्यादि । अनुस्वाराद्यन्ता अप्रसिद्धा । ये तु प्रसिद्धास्तेषां मत्वेऽप्यविशेषः ।

इति हलन्ता नपुंसकलिङ्गाः ।

अथालिङ्गौ युष्मदस्मद्शब्दावुच्यते । तयोश्चालिङ्गत्वात् त्रिष्वपि लिङ्गेषु समानं रूपम् । त्वं युवा, त्वं युवतिः, त्वं तीर्थम् । अहं युवा, अहं युवतिः, अहं पात्रम् इत्यादि । युष्मद् अस्मद् इति स्थिते तत स्वादय । युष्मदस्माद्भ्यामाकामित्यधिकृत्य,

२८६ ॥ त्वाहौ सौ । १ । २ । १८७ ॥ युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सौ परे यथासंख्य त्व अह इत्येतावादेशौ भवतः ।

२८७ । ङेसुटोऽम् । १ । २ । १८०॥ युष्मदस्मद्भ्यां परस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा ङे इत्येतस्य सुटश्च सुपः स्थाने अमित्यादेशो भवति । मोऽणोम इति मत्वम् । त्वम्, अहम् ।

२८८ । मन्तस्य युवावौ द्वयोः । १ । २ । १८५ । द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे यथासंख्य युव आव इत्येतावादेशौ भवतः ।

२८९ । अमौद्हल्याः । १ । २ । १८३ ॥ युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा अमि द्विर्तीयैकवचने औकारयो हलादौ च सुपि परे आकारो भवति । ङेसुटोऽम् इत्यमि दीर्घे । युवाम्, आवाम् ।

२९० ॥ यूयवयौ जसि । १ । २ । १८८ ॥ युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा जसि परे यूय वय इत्येतावादेशौ यथासंख्य भवत । ङेसुटोऽमित्यम् मत्वञ्च । यूयम्, वयम् । आमन्त्रणेऽप्यविशेष । केचिदेवप्रकाराण

सर्वनाम्नामामन्त्रणं नास्तीति मन्यन्ते ।

२९१ ॥ त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥ १। २।१८६
एकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य तत्सम्बन्धिन्यन्यसंबन्धिनि वा सुपि प्रत्ययोत्तरपदयोश्च परतो यथासंख्यं त्व म इत्येतावादेशौ भवतः । अमौद्धल्या इत्यात्वं मत्वं दीर्घश्च । त्वाम्, माम् । औटि पूर्ववत् । युवाम् आवाम् । शसि—

२९२ ॥ ङश्शोभ्यसोऽश्नाभ्यम् ॥ १ । २ । १७८ ॥
युष्मदस्मदुत्तरेषां तत्सम्बन्धिनामन्यसंबन्धिनां वा ङस्शस्भ्यस् इत्येतेषां सुपां अश् नकारः अभ्यश्च यथासंख्यमादेशा भवन्ति । इति शसो नः सच तस्मादादेरित्यकारस्य भवति । अमौद्धल्या इत्यात्वं दीर्घश्च, पदस्येति लुक् । युष्मान् अस्मान् । टायां त्वमौ भवत ।

२९३ ॥ यौसि यः ॥ १ । ३ । १८४ ॥ युष्मदस्मदोस्तत्सम्बन्धिष्वन्यसम्बन्धिषु वा इ आ ओस् इत्येतेषु सुप्सु परतो यकारो भवति । अकार उच्चारणार्थः । त्वया, मया । भ्यामि युवावौ भवतः । अमौद्धल्या इत्यात्वं दीर्घश्च युवाभ्याम् अवाभ्याम् । भिस्यपि आत्वं दीर्घश्च । युष्माभिः अस्माभिः ।

२९४ । तुभ्यमह्यौ ङयि । १ । २ । १८९ । युष्मदस्मदोस्तत्संबन्धिन्यन्यसम्बन्धिनि वा ङयि सुपि परे यथासंख्यं तुभ्य मह्य इत्येतावादेशौ भवत. । ङेसुटोऽमित्यम् । तुभ्यम् मह्यम् । भ्यामि युवाभ्याम् आवाभ्याम् । भ्यसः ङश्शोऽभ्यस्ते-

ङ्नाभ्यमिति अभ्यम्।

२९५॥ दोर्लुक्। १। २।१८१। दकारान्तयोर्युष्मदस्मदोः तत्सम्बन्धिन्यन्यसम्बन्धिनि वा सुपि परे लुग्भवति। इति लुक्। युष्मभ्यम्, अस्मभ्यम्। ङसौ त्वमौ भवतः।

२९६। भ्योऽसोऽद्। १। २। १७९। युष्मदस्मद्भ्यामुत्तरस्य तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा पञ्चमीबहुवचनस्य पञ्चम्येकवचनस्य च अदित्यादेशो भवति। दोर्लुक्, एदे इति लुक्। त्वत्, मत्। भ्यामि युवाभ्याम, आवाभ्याम। भ्यसोऽद् दोर्लुक्, एदे इति लुक्। युष्मत्, अस्मत्। ङसि—

२९७। तवममौ ङसि। १। २। १९०। युष्मदस्मदोस्तत्सम्बन्धिन्यन्यसम्बन्धिनि वा ङसि परे यथासंख्यं तव मम इत्येतावादेशौ भवतः। ङसोऽशादेशः एदे इति लुक्। तव, मम। ओसि युवावौ भवत। यौसि य इति यकारः। युवयोः, आवयोः। आमि—

२९८॥ युष्मदस्मद्भ्यामाकम्॥ १। २। १७७॥ युष्मदस्मदित्येताभ्यां परस्याम. तत्सम्बन्धिनोऽन्यसम्बन्धिनो वा स्थाने आकमित्यादेशो भवति। दोर्लुगिति लुक् दीर्घश्च युष्माकम्, अस्माकम्। ङौ त्वमौ भवतः यौसि य इति यत्वम् त्वयि, मयि। ओसि युवयोः आवयोः। सुप्यात्वं दीर्घश्च। युष्मासु, अस्मासु। उक्तरूपसमुच्चयः कर्तव्य — त्वम्, युवाम्, यूयम्। त्वां युवां युष्मान्। त्वया युवाभ्याम् युष्माभिः। तुभ्यम्, युवाभ्याम् युष्मभ्यम्। त्वत्, युवाभ्याम्, युष्मत्। तव युवयोः युष्माकम्। त्वयि युवयोः युष्मासु। अहम्, आवाम्, वयम्।

माम् आवाम् युष्मान्। मया युवाभ्यां अस्माभिः। मह्यम्, आवाभ्याम्, अस्मभ्यम्। मत्, आवाभ्याम्, अस्मत्। मम आवयोः अस्माकम्। मयि आवयोः अस्मासु। यदा त्वेतौ युष्मदस्मदौ यद्वाक्यस्यावयवौ तद्वाक्यस्यावयवात् पदात् परौ भवतः तदा द्वितीयाचतुर्थीषष्ठ्यन्तयोस्तयोर्भेदः॥ तिङन्तं वाक्यमिति वाक्यसंज्ञा।

२९९॥ पदाद्वाक्यस्य वस्नसौ युष्मिभक्तेः॥१।२।१९१॥ वाक्यस्यावयवात्पदात्परयोः तद्वाक्यस्यैवावयवयोः युष्मदस्मदोः युष्मिभक्त्यन्तयोः यथासंख्यं वस् नस् इत्येतावादेशौ भवतः। इति युष्मान् युष्मभ्यम् युष्माकम् इति द्वितीयाचतुर्थीषष्ठीबहुवचनान्तस्य युष्मदो वसित्यादेशः, अस्मान् अस्मभ्यम् अस्माकमिति तदन्तस्य अस्मदो नसित्यादेशः। धर्मो वो रक्षतु। धर्मो नो रक्षतु। दानं वो दीयते। दानं नो दीयते। शीलं वः स्वम्, शीलं नः स्वम्।

३००॥ वान्नावौ द्वित्वे॥१।२।१९२॥ वाक्यस्यावयवात्पदात्परयोस्तद्वाक्यस्यावयवयोर्युष्मदस्मदोर्द्वित्वविषये युष्मिभक्त्यन्तयोर्यथासंख्यं वाम् नौ इत्यादेशौ भवतः। युवाम्, युवाभ्याम्, युवयोरिति द्वितीयाचतुर्थीषष्ठीद्विवचनान्तस्य युष्मदो वामित्यादेशः, आवाम्, आवाभ्याम् आवयोः इति तद्द्विवचनान्तस्यास्मदो नौ इत्यादेशः। धर्मो वां रक्षतु, धर्मो नौ रक्षतु। दानं वां दीयते, दानं नौ दीयते। शीलं वां स्वम् शीलं नौ स्वम्।

३०१॥ तेमयानेकत्ते। १। २। १९३। वाक्यस्यावय-

वात्पदात्परयोः तद्वाक्यस्यावयवयोः युष्मदस्मदोरेकत्वविषये युग्विभक्त्यन्तयोर्यथासंख्यं ते मे इत्यादेशौ भवतः । तुभ्यम् तव इति ङेङसन्तस्य युष्मदः ते इत्यादेशः मह्यं मम इति ङेङसन्तस्यास्मदो मे इत्यादेशः । दानं ते दीयते, दानं मे दीयते । शीलं ते स्वम्, शीलं मे स्वम् ।

३०२ ॥ त्वामौ द्वितीयायाः । १ । २ । १९४ ॥ वाक्यस्यावयवात्परयोस्तद्वाक्यस्यावयवयोर्युष्मदस्मदोरमन्तयोर्यथासंख्यं त्वा मा इत्येतावादेशौ भवतः । इति त्वामित्यमन्तस्य युस्मदस्त्वा इत्यादेशः । मामित्यमन्तस्यास्मदो मा इत्यादेशः । धर्मस्त्वा रक्षतु, धर्मो मा रक्षतु । एते वस्नसाद्यादेशा अनन्वादेशे विकल्पतो वेदित्व्याः " नित्यमन्वादेशे " इति अन्वादेशे नित्यत्वेनोक्तत्वात् ।

३०३ ॥ नेवामन्त्र्यं पूर्वम् । १ । २ । १९५ ॥ यदामन्त्र्यते संबोध्यते तत्पदं युष्मदस्मद्भ्यां पूर्वं नेव असदिव भवति । आमन्त्र्यपदात्परयोः युष्मदस्मदोः वस्नसादयो न भवन्तीत्यर्थः । देवदत्त युष्मान् रक्षतु धर्मः । देवदत्त अस्मान् रक्षतु धर्मः । देवदत्त युष्मभ्यं दीयते दानम् । देवदत्त अस्मभ्यं दीयते दानम । देवदत्त युष्माकं शीलं स्वम् । देवदत्त अस्माकं शीलं स्वम् । एवमितरवचनयोरपि योज्यम् ।

३०४ ॥ पादाद्योः । १ । २ । १९८ ॥ पादाद्योस्तयोः वस्नसादि न भवति ।

त्रिलोकनगराधीशो, युष्मान् पातु जिनेश्वरः ।
तस्यैव शासनं पुण्यमस्माकं मोक्षकारणम् ॥ १ ॥

३०५ ॥ मनसीक्षार्थैः । १ । २ । १९९ ॥ ईक्षा दर्शनं तदर्थैर्धातुभिः सह तद्वत् यद्वाक्यं तस्य पदात्परयोः युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति, सा चेदीक्षा मनोविषया भवति। जनो युष्मान् समीक्ष्यागतः । जनोऽस्मान् समीक्ष्यागतः। जनस्त्वामुपेक्षते। जनो मामुपेक्षते। ज्ञानं तुभ्यं दीयमानमालोक्यागत । ज्ञानं मह्यं दीयमानमालोक्यागत. । जनस्तव कार्यमालोचयति। जनो मम कार्यमालोचयति इत्यादि। मनसीति किम् ? जनो व पश्यति, जनो नः पश्यति। चक्षुषा इत्यर्थः ।

३०६ ॥ चवा-हाहैवयोगे । १ । २ । २०० ॥ च वा अह ह एव इत्येतैर्योगे सम्बन्धे पदात्परयोर्युष्मदस्मदोर्यदुक्तं वस्नसादि तन्न भवति । जनो युष्मांश्च पश्यति । जनोऽस्मांश्च पश्यति । जनो युष्मान् वा पश्यति । जनोऽस्मान् वा पश्यति । जनो युष्मान् ह पश्यति । जनोऽस्मान् ह पश्यति। जनो युष्मानह पश्यति। जनोऽस्मानह पश्यति। जनो युष्मानेव पश्यति। जनोऽस्मानेव पश्यति। एवमन्यत्रापि योज्यम् ।

अथालिङ्गान्यवचनानि अव्ययानि उच्यन्ते तथा चोक्तम्—

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।** इति

३०७ ॥ **तस्वन्ड्डामधणतस्याङ्क्त्वान्तुन्तिसुङ्प्तस्वाभस्वरादीन्यव्ययम् । १ । १ । ३९ ॥** त वन्ड्डामित्येतदन्तानि धणवर्जिततस्यन्तानि आम, क्त्वा, अम्, तुम् इत्येतदन्तानि निर्ज्ञातानि सुप्सुप्रतिरूपाणि स्वरादीनि च शब्दरू-

पाणि अव्ययसंज्ञानि भवन्ति । तसिनि "व्याश्रये तस्" इत्यारभ्य असेरिकारेण प्रत्याहार । सुड् इति सु इति प्रत्ययादारभ्य **कथमित्थमोरुकारेण** प्रत्याहारः । पीलुमूलतस्, मुनिवत्, उच्चैस्तराम्, रावणतस्, सर्वतस्, दयाम, कृत्वा, पूर्वभोजम्, कर्तुं, अदस्, रात्रौ, वेलायाम्, अस्ति, स्यात, यथा, कुतस्, स्वर्, अन्तर् इत्येतेषामनेनाव्ययसंज्ञकत्वात्, "**अव्ययात् स्यौजस**" इति तेभ्य सु तस्य च अव्ययस्येति इलुक् सुप्तवेः पदत्वम् तत्र च पदाश्रितानि कार्याणि भवन्ति । पीलुमूलतो विद्योतते विद्युत् । अत्र रित्वम् । मुनिवद् वृत्तमस्य, जश्त्वम् । रावणत सर्वत अत्र रिविसर्जनीयौ । दयाञ्चक्रे अत्र परस्व । अद कृत्य रित्वविसर्जनीयौ, **कृकमिकंमकुशाकर्णीकुम्भपात्रेऽतोऽनव्ययस्येति** स्वभावश्च पूर्वेणासमस्तस्यानव्ययस्याकारात्परस्य विसर्जनीयस्य च सिर्भवति करोत्यादौ परे । कुत रित्वविसर्जनीयौ, स्वस्तिप्रति, अन्तस्तिष्ठति अत्र विसर्जनीय सश्छव्यशरीति सत्वञ्च । अन्यत्र सोर्लुक् । एवमन्यान्यप्यव्ययसंज्ञकानि कार्याणि द्रष्टव्यानि । के पुन स्वरादय ? स्वर, अन्तर, प्रातर्, पुनर, उच्चैस्, नीचैस्, शनैस्, पृथक, ऋते, युगपत्, आरात्, ह्यस्, श्वस्, दिवा, सायम्, चिरम्, ईषत्, मनाक्, जोषम्, त्योपम्, तूष्णीम, बहिस्, अवस्, निकषा, समया, मृषा, स्वयम्, नक्तम, इद्धा, सामि, वत्, सम्, सनात्, तिरस्, अन्तरा, ज्योकम्, कम्, शम्, सना, नाना, विना, अन्यत्, क्षमा, उपांशु, विहायसा, दोषा, मुधा, मिथ्या, पुरा, मिथो, मिथस्,

मिथु, प्रायस्, मुहुम्, प्रथा, वाहु, आर्य, अलम्, अभीक्ष्णम्, सार्द्धम्, हिरुक्, प्रशान्, च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, सूपत्, कूपत्, कुवित्, नेत्, चेत्, कच्चित्, यत्र, नह, हन्त, माकिस्, नकिस्, माङ्, नञ्, यावत्, तावत्, न्यावत्, त्वैं, न्वै, नै, वै, तै, श्रौषट्, वौषट्, षषट्, स्वाहा, स्वधा, हिम्, खलु, किल, अधम्, अथ, स्म, अ, इ, उ, ऋ, लृ, ए, ऐ, ओ, औ, ओङ्, अहह, अन्तः, यावत्, किम्, यत्, तत्, धिक्, हे, है, पात्, प्यात्, आहो, उताहो, हो, अहो, अथो, अंहो, मा, नो, ननु, हे, तु, नु, इति, इव, च, न, घ, बत, आम्, शप्, हिकम्, शुकम्, सुकम्, नुकम्, नहिकम्, ऋतम्, सत्यम्, अद्धा, नो, हि, न, चेत्, जातु, अच, अड, अद्, आहो, स्वित्, बाह्या, दिष्ट्या, पशु, फट्, सह, अनुषक्, अंग, युत्, जातक्, अरे, अये, अवे, वत्, वेत्, वात्, हुम्, तुम्, सोम्, कित्, मर्या, ईम्, किम्, सिम्, प्र, परा, अप, सम्, अनु, अव, निर्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप—इति स्वरादय चतुरुत्तरद्विशतम्।

इति नामसिद्धिः।

---

## अथ स्त्रीप्रत्ययान्ता उच्यन्ते।

ऋन्याडिति वर्तते।

३०८। मन्नन्तबहुव्रीहेर्नेच। १। ३। १२। मन्नन्तात् शब्दरूपात् बहुव्रीहेरन्नन्ताच्च स्त्रियां वर्तमानादाड्प्रत्ययो वा

भवति यत्र प्रत्ययः प्राप्नोति स च न भवति। एवं द्वैरूप्यम्, डित्यन्त्याजादेरिति लुक्। मन्नन्तात्—दामा, दामे, दामाः। दामा, दामानौ, दामानः । पामा, पामे, पामाः । पामा, पामानौ, पामानः । एवं सीमन् अतिगहिमन् इत्यादि। अन्नन्तात् बहुव्रीहेः बहवो राजानोऽस्यां नगर्यामिति विगृह्य एकार्थश्चेति बहुव्रीहिः। बहुराजा, बहुराजे, बहुराजाः। बहुराजा, बहुराजानौ, बहुराजान । एवं प्रियश्वन् प्रिययुवन् प्रियमघवन् सुपर्वन् प्रियवर्मन् प्रभृतयः।

३०९ ॥ **अजाद्यताम्** । १ । ३ । १३ ॥ अज इत्येवमादीनामकारान्तानां च शब्दानां स्त्रियां वाच्यायां द्योत्यायां त आडिति प्रत्ययो भवति। अजादीनां बाधकबाधनार्थमकारान्तार्थश्चोपादानम्। अजा, अश्वा, एलका, चटका, कोकिला, मूषिका। अत्र जातिलक्षणस्य ङ्यो बाधा। बाला, होडा, पाका, दोला, वत्सा, मन्दा, कन्या, विलाता। अत्र वयोलक्षणस्य ङ्यो बाधा। पूर्वापहाणा, परापहाणा। निपातनाण्णत्वम्। अत्र टिल्लक्षणस्य ङ्यो बाधा। त्रिफला। अत्र द्विगुलक्षणस्य ङ्यो बाधा। क्रुञ्चा, उष्णिहा, देवविशा। अत्र हलन्तत्वादतः इत्यप्राप्तिः तथापाठाच्च अन्त्याजादिलोपाभावः। अतः—कारीषगन्ध्या, क्रोड्या, खट्वा, देवदत्ता, या, सा, इत्यादि। आडन्तानां जायाशब्दवद् रूपनयः।

३१० ॥ **नृदुगिदश्चोऽस्वस्रादेर्ङी** । १ । ३ । ७ ॥ नकारान्तात्—राज्ञी, तक्ष्णी, दण्डिनी, छलिणी, करिणी, मद्रघ्नी, दन्तिनी, वेदवादिनी इत्यादि। ऋतः—कर्त्री, हर्त्री,

धात्री, भर्त्री, भक्त्री, पवित्री, प्रसवित्री, इत्यादि। क्रोष्टुशब्दस्य—

३११। क्रोष्टोर्। १। ३। १। क्रोष्टुशब्दस्य स्त्रियां वर्तमानस्य ऋकारादेशो भवति। इत्यृकारः। क्रोष्ट्री। उगितः—गोमत् गोमती, विद्वस् विदुषी, कृस उस् भवत् भवती, ऋतुवत् ऋतुवती, अतिपुंम् अतिपुंसी, महत् महती, ददत् ददती, सुदत् सुदती इत्यादि। अञ्चे. प्राची, प्राञ्ची, प्रतीची, उदीची, अमुमुईची, तिरश्ची इत्यादि। अस्वस्रादेरिति किम[1]? स्वसा परमस्वसा सुस्वसा अतिस्वसा दुहिता ननान्दा याता माता।

३१२। पादो वा। १। ३। ९। पादन्तात् बहुव्रीहेः स्त्रियां ङीप्रत्ययो वा भवति। पूर्ववत् पद्भावः। द्विपदी, त्रिपदी, चतुष्पादी, द्विपाद्, त्रिपाद्, चतुष्पाद्।

३१३। ऋच्याड्। १। ३। १०। ऋचि स्त्रियामाड् भवति परत्वादन्त्यात्ज्ञिलुर्च बाधित्वा पद्भावः, सकृत्स्पर्द्धे यद् बाधित तद् बाधितमेवेति पुनर्लुग्न भवति। द्विपदा, त्रिपदा, चतुष्पदा ऋक् इत्यादि।

३१४। वयस्यनन्त्ये। १। ३। १७। बाल्यादिर्वय तस्मिन अनन्त्ये अचरमे वर्तमानादकारान्तात स्त्रियां ङीप्रत्ययो भवति। लुगतः इत्यकारलुक। कुमारी किशोरी वधूटी चिरण्टी तरुणी कलभी। अनन्त्य इति किम्। वृद्धा, स्थविरा। अत इत्येव, शिशु।

---

१ स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा।
याता मातेति सप्तैते स्वस्रादय उदाहृता।

३१५ ॥ द्विगोः । १ । ३ । ३६ ॥ अकारान्तात् स्त्रियां वर्तमानात् द्विगो. ङी प्रत्ययो भवति । पञ्चपूली, पञ्चखट्वी, दशपूली, दशखट्वी ।

३१६ ॥ धवाद्योगादज्येष्ठादिभ्यः । १ । ३ । ४९ ॥ धवो भर्ता तदभिधायिनोऽकारान्तशब्दरूपात् योगात् तत्सम्बन्धात् स्त्रियां वर्तमानात् ङीप्रत्ययो भवति, ज्येष्ठादीन् ज्येष्ठप्रकारान् वर्जयित्वा । प्रष्ठस्य भार्या प्रष्ठी, प्रचरी, गणकी, महामात्री । एते प्रष्ठादयः सोयमित्यभिसम्बन्धात् भार्यायां वर्तन्ते । अज्येष्ठादिभ्य इति किम् ? ज्येष्ठा, कनिष्ठा, मध्यमा, गोपालिका, पशुपालिका । त्यादादयत इतीत्वम् ।

३१७ ॥ वेदऽक्तिनो ङी । १ । ३ । ५८ ॥ क्तिन्वर्जितादिकारान्तात् स्त्रियां वा ङी भवति । दीर्घश्च शक्ती, शक्तिः । यष्टी, यष्टिः । अंगुली, अंगुलि । आवली, आवलि । आजी, आजिः । धूली, धूलि । शुची, शुचि । पदवी, पदविः इत्यादि । अक्तिन इति किम् ? कृतिः, हृतिः । नकार किम् ? रन्ती, रन्तिः ।

३१८ । गुणादुतोऽचोऽखरोः । १ । ३ । ५९ । अचः परो य उकारस्तदन्तात् खरुशब्दवर्जितात् गुणवचनात् स्त्रियां वा ङी भवति । यन्वादेश । पट्वी, पटुः । मृद्वी, मृदुः । पृथ्वी, पृथुः । गुर्वी, गुरु । बह्वी, बहुरित्यादि । गुणादिति किम् ? आखुः । अखरोरिति किम् ? खरुः ।

३१९ । जातेरस्त्रीयशूद्रात् । १ । ३ । ६५ । अकारान्ता-

जातिवाचिन. स्त्रियां ङी भवति नचेत् स्त्र्यर्थः यान्तः शूद्रशब्दो वा भवति । कुक्कुटी, सूकरी, व्याघ्री, ब्राह्मणी, वृषली, नटी, सारसी, वानरी, सिंही, चक्रवाकी, गर्दभी इत्यादि । अस्त्रीयशूद्रादिति किम् ? यूका, मक्षिका, इभ्या, क्षत्रिया, शूद्रा ।

३२० । ऊरुतोऽप्राणिनश्चायुरज्ज्वादिभ्यः । १ । ३ । ७१ । उकारान्तान्मनुष्यजातिन. अप्राणिजातिवाचिनश्च स्त्रियां ऊप्रत्ययो भवति युशब्दान्तं रज्ज्वादींश्च वर्जयित्वा । दीर्घः । कुरूः, इक्ष्वाकूः, ब्रह्मबन्धूः, देवबन्धूः । अप्राणिजातेः अलाबूः, कर्कन्धूः । अयुरज्ज्वादिभ्य इति किम् ? अध्वर्युः, रज्जुः, हनुः ।

३२१ । नारीसखीपङ्गूश्वश्रूः । १ । ३ । ७५ । नार्यादयः स्त्रियां ङ्यूप्रत्ययान्ताः कृतकार्या निपात्यन्ते । नृनरयोः नारी । नृशब्दस्य नारादेशः, नरशब्दस्य दीर्घः निपातनात् ङीप्रत्ययश्च । सखिसखयोः सखी । पङ्गुशब्दादूः पङ्गूः । श्वसुरशब्दादूः अकारोकारलोपश्च श्वश्रूः । ङ्यन्ताः कर्त्रीशब्दवत् ऊकारान्ता जम्बूशब्दवन्नेतव्याः ।

३२२ । यूनस्तित् । १ । ३ । ७६ । युवन् इत्येतस्मात् स्त्रियां तित्प्रत्ययो भवति । तकारः ष्यदिति प्रत्याहारार्थः । पदत्वे " न " इति नकारस्य लुक् । युवतिः, युवती, युवतयः इत्यादि रुचिशब्दवत् ।

इति स्त्रीप्रत्ययान्तसिद्धिः ॥

# अथ विभक्त्यर्थाः

संक्षेपेण निरूपयिष्यन्ते ।

२.३ योगे । १ । ३ । ९३ । यदित ऊर्ध्वमनुक्रमिष्यामः तत्सति योगे भवति नासतीत्यधिकृतमाशास्त्रपरिसमाप्तेर्वेदितव्यम् । योगः सम्बन्धः एकार्थता व्यपेक्षा वा। ऐकपद्ये एकार्थता अन्यत्र व्यपेक्षा । कस्मिन्नर्थे प्रथमा ? एकत्वद्वित्ववहुत्वेष्वर्थेषु "एकद्विबहौ" इति प्रथमा । उजावितो । धीरः, धीरौ, धीराः। पर्वतः पर्वतौ पर्वता । कुञ्जर, कुञ्जरौ, कुञ्जरा. । अश्वः, अश्वौ, अश्वाः । दया, दये, दयाः । वधूः वध्वौ वध्वः । नौः नावौ, नाव । तीर्थम्, तीर्थे, तीर्थानि । वेदवित्, वेदविदौ, वेदविद । दन्ती, दन्तिनौ, दन्तिनः। इत्युदाहरणीयम्। धातुसुबन्तवाक्येभ्य एकत्वादिसंख्याभावात् विभक्तयो न भवन्ति । आमन्त्रणे आमन्त्र्ये इति प्रथमा विभक्तिर्भवति । आमन्त्र्यपदं क्रियाविशेषणं भवति । देवदत्त व्रजाम्यहमिति । तत्र क्रियाप्रधाने "अप्रधाने" इति वर्तमाने ङसोसामिति षष्ठीप्राप्तौ वचनम् । जिनदत्त एहि, देवदत्त तत्रैव तिष्ठ, अरे विष्णुमित्र मागा, तात भुङ्क्ष्व, शिशो व्याकरणमधीष्व, नौर्याहि । द्विवचने–हंसौ रमेथाम्, स्तनौ वर्धेथाम्, कुमारौ स्वैरमासाथाम्, कोकूयेथां च कोकिलौ । वहुवचने–आर्या. श्रोतुमागच्छत, सूताः संपद्यध्वं द्रुतम्, तपस्विनः क्षमध्वम्, महीरुहः फलत इत्यादि नेयम् । क्व द्वितीया ?–

३२४ ॥ हाधिकसमयानिकषोपर्युपर्यध्यध्यधोऽधोऽन्त्यन्तरान्तरेणतस्पर्यभिसर्वोभयैश्चाप्रधानेऽमादद्वस् ।१।२।१००।

परार्थमप्रधानम्, प्रधानमुपकार्यम्। यदर्थमन्यदुपादीयते तदतोऽन्यत्तस्योपकारकम्, यदर्थं तद्विशेषणं तदप्रधानम्। हादिभिस्तसन्तैश्च पर्यादिभिरव्ययैर्योगेऽप्रधानेऽर्थे वर्तमानात् एकाद्विबहुषु यथासंख्यं अमौटशसप्रत्यया भवन्ति। टशावितौ। हा देवदत्तं वर्तते व्याधिः। धिक् देवदत्तमयश. प्रवृद्धम्। समया पर्वतं नदी। निकषा पर्वतं वनम्। उपर्युपरि ग्रामं ग्रामाः। अध्यधि ग्रामं ग्रामाः। अधोऽधो ग्रामं ग्रामाः। अतिवृद्धं तु कुरून् महद् बलम्। अन्तरा निषधं नीलं च विदेहाः। अन्तरेण निषधं नीलं च विदेहाः। अन्तरेण पुरुषकारं न किंचित्। परितो ग्रामं वनानि। अभितो ग्रामं वनानि, सर्वतः श्रीतृणग्रामं क्रमुकवनानि। उभयतो ग्रामं वनानि। हा तात, धिङ्मातरित्यादौ च तातादेरामन्त्र्यतया विवक्षा, न हादियुक्तत्वेनेति द्वितीया न भवति। चकारोऽनुक्तसमुच्चयार्थः। तेन बुभुक्षितं न प्रतिभाति किञ्चित्, वृणीष्व भद्रे प्रतिभाति यस्त्वाम् इत्यादि सिद्धम्। क्रियते साध्यते इति कर्म क्रियासाधनम तच्च निर्वर्त्यं, विकार्यं, प्राप्यञ्चेति त्रिविधम्। तस्मिन् कर्मणि "कर्मणी" ति द्वितीया। कुम्भं करोति। शरं लुनाति। आदित्यं पश्यतीति। एतत् त्रिविधमपि कर्म पुनस्त्रिविधं भवति इष्टमनिष्टमिष्टानिष्टञ्चेति गुडं भक्षयति अहिं लङ्घयति वने व्याघ्रं पश्यति। ग्रामं गच्छन् वृक्षमूलान्युपसर्पति। पुनस्तत् कर्म द्विविधं भवति गुणमुख्यभावेन। अजान्नयति ग्रामम्। गां दोग्धि पयः। क्रियते, कटः कृत कटः, कृत्यः कटः, शत्यः कटः, प्राप्तोदको ग्रामः- इत्यत्र लक्त-

द्धितसमासैरभिहिते अभिधेयाभावात् अप्रधानाधिकाराच्च न भवति । प्रधानं चाभिहितम् ।

३२५ ॥ शीङ्स्थासोऽधेराधारः ॥ १ । ३ । १२२ ॥ अधिपूर्वाणां शीङ्स्थाआस्इत्येतेषाम् आधारः क्रियाश्रयस्य कर्तुः कर्मणो वा अधिकरणं तत् कर्म भवति । इति कर्मवद्भावात् कर्मणीति द्वितीया । ग्राममधिशेते, ग्राममधितिष्ठति, ग्राममध्यास्ते ।

३२६ ॥ कालाध्वनोर्व्याप्तौ ॥ १ । ३ । १२६ ॥ काले अध्वनि चाप्रधाने वर्तमानात् शब्दरूपात् व्याप्तौ स्वेन सम्बन्धिना द्रव्यादिनात्यन्तसंयोगे द्योत्ये अमौट्शसो भवन्ति । मासं गुडापूपा । क्रोशं पर्वत । अत्र द्रव्येण व्याप्तिः । मासं कल्याणी । क्रोशं कुटिला नदी । एतयोर्गुणेन व्याप्तिः । मासमधीते, क्रोशमधीते अत्र क्रियया व्याप्ति. । पञ्चम्याः सप्तम्या वापवादः ।

क्व तृतीया ? 'हेतुकर्तृकरणेत्थंभूतलक्षणे' इति हेत्वादिष्वर्थेषु तृतीया । हेतौ– धनेन कुलम्, विद्यया यशः, कन्यया शोकः, सचित्ताचित्ताभ्यां परिग्रहाभ्यां क्लिश्यते मन, फलैर्भज्यते वृक्ष. । कर्तरि – जिनदत्तेन कृतम्, गुरुदत्तेन भुक्तम्, जायाभ्यां पीड्यते निःस्वः, कन्याभ्यां कम्यते बुध', शत्रुभिः प्रहतो मूर्खः । करणे– दात्रेण लुनाति, परशुना छिनत्ति, दृष्टिभ्यां बाधते कांचित्, शृङ्गारैर्हरते मनः । इत्थंभूतलक्षणे—कमण्डलुना छात्रमद्राक्षीत्, अपिभवानवदातेन वर्णेन कुमारमैक्षिष्ट, शङ्खचक्राभ्यां शार्ङ्गिणम्, शङ्खचामरध्वेतच्छत्रै·

राजानम् । छात्रत्वादिप्रकारमापन्नस्य कमण्डल्वादि लक्षणम् ।

३२७ सहार्थेन । १ । ३ । १२९ ॥ सहार्थस्तुल्ययोगो विद्यमानता च, प्रधानेनाप्रधानस्य क्रियादिना सम्बन्धस्तुल्ययोगस्तेन युक्तेऽप्रधानेऽर्थे वर्तमानादेकद्विबहुषु यथासंख्यं टाभ्यांभिसो भवन्ति । पुत्रेण सहागतः । पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । मातापितृभ्यां सह धनवान् । तिलैः सह माषान वपति । सत्तायाम्–सहैव दशभि. पुत्रैर्भारं वहति गर्दभी । अर्थग्रहणात्पर्यायप्रयोगेऽप्रयोगेऽप्यर्थसत्तायां भवति साकं स्तनाभ्यां जघनं महत्से, सत्रा भ्रूभ्यामस्या नयने महती, युगपत्तराभ्यामस्याः केशा दीर्घाः, सार्द्धं जनैर्धनवान् राजा, पुत्रेणागतः, भार्यया दीक्षितः, बन्धुभि स्वर्ग गत ।

३२८ ॥ यद्भेदैस्तद्वदाख्या । १ । ३ । १३० ॥ यस्य भेदिन प्रकारवतोऽक्ष्यादेरर्थस्य भेदै काणत्वादिभि. प्रकारैर्विशेषै तद्वत प्रकारवदर्थकस्य देवदत्तादेराख्या भवति तत एकद्विबहुषु यथासंख्यं टाभ्यांभिसो भवन्ति । अक्ष्णा काणः । हस्तेन कुणि । पादेन खञ्ज । शिरसा खलति । प्रकृत्या दर्शनीय । प्रायेण वैयाकरण काश्यपो गोत्रेण । ब्राह्मणो जात्या ।

क्व चतुर्थी– ङेभ्यांभ्यसिति देयैराप्ये चतुर्थी । उपाध्यायाय गां ददाति, जिनदत्ताय कन्यां प्रयच्छति, राज्ञे दण्डं वितरति ।

३२९ ॥ क्रुधद्रुहेर्ष्यासूयार्थैर्यं प्रति कोपो नच कर्म । १ । ३ । १२७ अमर्षः क्रोध, अपचिकीर्षा द्रोहः, अक्षमा ईर्ष्या, गुणेषु दोषाविष्करणम् असूया । एतदर्थैः धातुभिर्योगे यं प्रति कोपो भवति तस्मिन्नप्रधानेऽर्थे वर्तमानात् एकद्विबहुषु यथासंख्यं ङेभ्यां-

भ्यसो भवन्ति न च तत् कर्म भवति । जिनदत्ताय क्रुध्यति । देवदत्ताय कुप्यति । देवदत्ताय द्रुह्यति, देवदत्तायेर्ष्यति, देवदत्तायेर्क्ष्यति, देवदत्ताय सूक्ष्यति, देवदत्तायासूयति । कर्मप्रतिषेधो भावादौ त्याद्यर्थ. ।

३३० ॥ भद्रायुष्यक्षेमसुखार्थहितार्थहितैराशिषि ॥ १ । ३ । १४१ ॥ भद्रार्थैः हितशब्देन च योगे अप्रधानेऽर्थे वर्तमानात् आशीर्विषये एकद्विबहुषु यथासंख्यं ङेभ्यांभ्यसो भवन्ति वा । भद्रमस्तु जिनशासनाय, पक्षे ङसोसामिति षष्ठी भद्रमस्तु जिनशासनस्य । भद्रमस्तु जैनाय, भद्रमस्तु जैनस्य । कल्याणमस्तु जैनाय, कल्याणमस्तु जैनस्य । आयुष्यमस्तु जैनाय, आयुष्यमस्तु जैनस्य । दीर्घायुरस्तु जैनाय, दीर्घायुरस्तु जैनस्य । चिरंजीवित्वमस्तु जैनाय, चिरंजीवित्वमस्तु जैनस्य । क्षेमं भूयात् संघाय, क्षेमं भूयात् संघस्य । कुशलं भूयात् संघाय, संघस्य वा । निरामयं भूयात् संघाय, संघस्य वा । सुखं भवतात् प्रजाभ्यः प्रजानां वा । शर्म भवतात् प्रजाभ्यः प्रजानां वा । अर्थो जायतां दूताय दूतस्य वा । शं भवतात् प्रजाभ्यः प्रजानां वा । प्रयोजनं जायतां दूताय दूतस्य वा । कार्यं जायतां दूताय दूतस्य वा । हितं भूयात् जैनाय जैनस्य वा । पथ्यं भूयात् जैनाय जैनस्य वा ।

३३१ । शक्तार्थवषण्नमःस्वस्तिस्वाहास्वधाभिः । १ । ३ । १४२ । वषट्स्वाहास्वधाशब्दा दाने वर्तन्ते । शक्तार्थैः वषडादिभिश्च योगे अप्रधानेऽर्थे वर्तमानादेकद्विबहुषु यथासंख्यं ङेभ्यांभ्यसो भवन्ति । शक्तो

जिनदत्तो देवदत्ताय। प्रभवति जिनदत्तो देवदत्ताय। अलं मल्लो मल्लाय। वषडग्नये। नमोऽर्हद्भ्यः। स्वस्ति प्रजाभ्यः। स्वाहा इन्द्राय। स्वधा पितृभ्यः। आतुराय हितम्।

३३२। यदर्थम्। १। ३। १५०। यत्प्रयोजनं किञ्चिद् विवक्ष्यते तस्मिन्नप्रधानेऽर्थे वर्तमानादेकद्विबहुषु यथासंख्यं ङेभ्यांभ्यसो भवन्ति। रथाय दारु। कुण्डलाय हिरण्यम्।

संयमाय श्रुतं धत्ते, नरो धर्माय संयमम्।
धर्मं मोक्षाय मेधावी, धनं दानाय भुक्तये ॥ १ ॥

क्व पञ्चमी ?—

३३३ ॥ ङसिभ्यांभ्यस्स्तोकाल्पकतिपयकृच्छ्रादसत्त्वे ॥ १। ३। १५२ ॥ असत्त्वे अद्रव्ये वर्तमानेभ्यः स्तोकादिभ्यो ङसिभ्यांभ्यसो भवन्ति वा। स्तोकान्मुक्तः। पक्षे हेत्वित्यादिना तृतीया। स्तोकेन मुक्तः। अल्पान्मुक्तः, अल्पेन मुक्तः। कतिपयान्मुक्तः, कतिपयेन मुक्तः। कृच्छ्रान्मुक्तः कृच्छ्रेण मुक्तः। असत्त्व इति किम्? स्तोकेन विषेण हतः।

३३४ ॥ आरादर्थैः ॥ १। ३। १५३ ॥ आरादिति दूरान्तिकयोः। तत्रेहोभयग्रहणम्। दूरार्थैरन्तिकार्थैश्च शब्दैर्युक्तादप्रधानेऽर्थे वर्तमानादेकद्विबहुषु यथासंख्यं ङसिभ्यांभ्यसो वा भवन्ति। दूरं ग्रामात्, ग्रामस्य वा। विप्रकृष्टं ग्रामात् ग्रामस्य वा। अन्तिकं ग्रामात् ग्रामस्य वा। अभ्यासं ग्रामात्, ग्रामस्य वा। एवमितरवचनयोगेऽपि योज्यम्। आराच्छब्दयोगे दिक्छब्देत्यादिना नित्यमेव पञ्चमी। आराद् ग्रामात्।

३३५ ॥ हेतौ गुणेऽस्त्रियाम् ॥ १। ३। १५४ ॥ अस्त्री-

लिङ्गे गुणे द्रव्याश्रिते पर्याये हेतौ वर्तमानादेकद्विबहुषु यथासंख्यं ङसिभ्यांभ्यसो भवन्ति वा । जाड्याद् जाड्येन वा बद्धः। पाण्डित्यात् पाण्डित्येन वा मुक्त. । मोहाद् मोहेन वा बद्धः। ज्ञानात् ज्ञानेन वा मुक्तः । अस्त्रियामिति किम्? जडतया बद्ध, बुद्ध्या मुक्तः। अस्त्यत्राग्निर्धूमात्, नास्तीह घटोऽनुपलब्धे. इत्यादौ नाग्न्यादेर्धूमादिर्हेतुः । कस्य तर्हि ? तज्ज्ञानस्य। तत्र प्रासादात् प्रेक्षते इत्यादिवद् भवति । अपायेऽवधाविति पञ्चमी। ग्रामादपैति, ग्रामादागच्छति, पर्वतादवरोहति, यवेभ्यो गां वारयति, कूपादन्धं प्रतिषेधति निवर्तयतीत्यर्थः, कुशूलात् पचति, आगमात् शंसति—तस्मात् गृहीत्वेति प्रतीयते । बलाहकाद्विद्योतते विद्युत्, ततो निसृत्य ज्योतिर्विद्योतते विद्योतमानं वा ततो निर्धावतीति प्रतीयते । कुतो भवान्? पाटलिपुत्रात्—कुतो भवानागच्छति, पाटलिपुत्रादागच्छामि इति प्रतीयते । गवेधुमतः सांकाश्यं चतुर्षु योजनेषु—ततो निसृत्य गतेषु भवतीति प्रतीयते । कार्तिक्या आग्रहायिणी मासे—तत. प्रभृति मासि गते भवतीति प्रतीयते । वृकेभ्यो बिभेति, दस्युभ्यस्त्रस्यति—चित्तसंक्षोभपूर्वकं ततो निवर्तते इति प्रतीयते। बिभेतिर्हि भयपूर्विकायां निवृत्तौ वर्तते । चौरेभ्यस्त्रायते, दस्युभ्यो रक्षति—तदुपघातकप्रतीकारेण ततो निवर्तयतीति प्रतीयते । शृङ्गाच्छरो जायते, बीजादङ्कुर उत्पद्यते—तस्मादात्मानं प्रतिलभमानो निस्सरतीति प्रतीयते । हिमवतो गङ्गा प्रभवति, महाहिमवतो रोहित् प्रभवति— तत्र प्रथममुपलभमाना ततो निस्सरतीति प्रतीयते । संततत्वात् नात्यन्तापायकमः । उपाध्यायादधीते

उपाध्यायान्निलीयते— ततोऽदृश्यतयापैतीति प्रतीयते । भोजनात्पराजयते, अध्ययनात् पराभवति—भावेन ततो न्यूनीभूय निवर्तते इति प्रतीयते । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः, देवदत्ताद् जिनदत्त. पटुः, अयमस्मादधिकः, अयमस्मादूनः- पाटलिपुत्रकादिभिः माथुरा आढ्यत्वादिना संसृष्टास्ततोऽ— तिशयादिना धर्मेण विभक्ता. प्रतीयन्ते । विभागश्चापायः। अपायेऽवधिविवक्षायामेवं भवन्ति । विवक्षान्तरे तु यथायोगं विभक्तयो भवन्ति । यवेषु गां वारयति, वलाहको विद्योतते, वलाहके विद्योतते, चौरैर्भयम्, चौरेषु बिभेति, चौराणां बिभेति, शृङ्गं शरो जायते, अधर्मं जुगुप्सते, अधर्मेण जुगुप्सते, मौख- र्येण प्रमाद्यति, भोजने पराजयते, शत्रून् पराजयते, इत्यादि ।

३३६ ॥ स्थानिप्यकर्माधारे ॥ १ । ३ । १६१ ॥ यस्यार्थः प्रतीयते न च प्रयोगः स स्थानी स्थानिप्यादेशान्तेन युक्ते कर्मण्याधारे च ङसिभ्यांभ्यसो भवन्ति । प्रासादात्प्रेक्षते, आसनात्प्रेक्षते, अस्त्यत्राग्निर्धूमात्, नास्त्यत्र घटोऽनुपलब्धेः। स्थानिग्रहणं किम्? प्रासादमारुह्य प्रेक्षते, आसने उपविश्य प्रेक्षते, धूममुपलभ्य अग्निरस्तीति प्रतिपत्तव्यम्, पटानुपलब्धिमुपलभ्य पटो नास्तीति प्रतिपत्तव्यम्। धूमादेर्हेतोर्हेतौ वा पञ्चमी चतुष्पञ्चपाद्गर्पात् इति निर्देशात् ।

३३७ ॥ दिक्च्छब्दान्यार्थाराद्बहिरितरैः ॥ १ । ३ । १६२ ॥ दिक्शब्दै. अन्यार्थैः आरात् बहिस् इतर इत्येतैश्च शब्दैर्युक्तेऽप्रधानेऽर्थे वर्तमानाद् एकद्विबहुषु यथासंख्यं ङसिभ्यांभ्यसो भवन्ति । दिशि दृष्टाः शब्दा दिक्छब्दा इति देश-

कालादिवृत्तावपि भवति। एतदर्थमेव शब्दशब्दोपादानम्। अन्यथा हि दिग्वृत्तावेव स्यात् न कालादिवृत्तौ । दिक्शब्दः- प्राग्ग्रामात्, प्रत्यग् ग्रामात्, पूर्वो ग्रामात्, अपरो ग्रामात्, पूर्वो वसन्तात्, अपरो वसन्तात्। अन्यार्थ.- अन्यो देवदत्तात्, भिन्नो देवदत्तात्, अर्थान्तरं देवदत्तात्, हिरुग् देवदत्तात्। आरात्-आरात् ग्रामात्, आरात् पर्वतात्। बहिस्-बहिः ग्रामात्, बहिः नगरात्। इतरः-इतरो देवदत्तात्। अस्य द्वैतीय इत्यर्थः ।

क षष्ठी ? ङसोसामित्यप्रधाने षष्ठी। अपवादविनिर्मुक्तोऽस्य विषयः। राज्ञः पुरुषः, पशोः पादः, देवदत्तयोः पुत्रः, मापाणां राशिः, वारीणां वीचय ।

**प्रियाणां मधुरं वाक्यं, कवीनां रसवद्वचः,**
**गुरूणां वचनं पथ्यं, साधूनामुत्तमं वचः ॥ १ ॥**

३३८ ॥ **कृत्कामुकस्याबुण्लक्षण्स्वार्थाव्ययैष्यदणेनः कर्मकर्त्रोः** ॥ १ । ३ । १६६ ॥ उणादिवर्जितो यः कृत् तदन्तस्य कामुकशब्दस्य च कर्मणि कर्तरि चैकद्विबहुषु यथासंख्यं ङसोसामो भवन्ति न तुणादेः। द्वितीयातृतीयापवादः। कर्मणि-अपां स्रष्टा, पुरां भेत्ता, वर्षशतस्य पूरकः, पुत्रपौत्राणां दर्शक.। कर्तरि—भवतश्शायिका, भवत आसिका, दास्याः कामुकः।

क सप्तमी—

३३९ ॥ **हेतौ कर्मणा** ॥१।३।१७२॥ कर्मणा युक्तेऽप्रधाने हेतौ वर्तमानादेकद्विबहुषु ङिओससुप् इत्येते प्रत्यया भवन्ति।

चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः ॥ १ ॥
आधारे इति सप्तमी। आसने आस्ते, स्थाल्यां पचति, गङ्गायां घोषः, तिलेषु तैलम्, आकाशे शकुनयः, गुरौ वसति ।

स्तनयोः पतिते नेत्रे, नेत्रयोः पतितं मनः ।
भूभृत्सु पादपाः सन्ति, सन्ति गङ्गासु वालुकाः॥ १
वार्तासु वर्तते बुद्धिः प्रियधर्मकथासु न ।
अन्यस्त्रीषु मनो याति कुलस्त्रीषु न गच्छति ॥ २ ॥

कृष्णा गोषु सम्पन्नक्षीरतमा, धावन्नध्वगेषु शीघ्रतमः । कथं कृष्णा गवां सम्पन्नक्षीरतमेति षष्ठी ? समुदायस्यैकदेशं प्रत्याधारविवक्षायां सप्तमी सम्बन्धविवक्षायां षष्ठी भवति । यथा वृक्षे शाखा, वृक्षस्य शाखेति । निर्धारणं तु कृष्णेत्यादेः पदान्तराद् भवति । जातिगुणक्रियादिभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् ।

३४० । यद्भावो भावलक्षणम् । १ । ३ । १८० । भावः क्रिया प्रसिद्धं लक्षणमप्रसिद्धं लक्ष्यम् । यस्य सम्बन्धिना भावेन क्रियया भावान्तरं लक्ष्यते तस्मिन्नप्रधाने एकद्विबहुषु यथासंख्यं ङि–ओस्–सुपो भवन्ति । गोषु दुह्यमानासु गतः, नान्दीतूर्येषु वाद्यमानेषु गतः, देवार्चनायां क्रियमाणायामागतः, आत्रेषु कथायमानेषु गतः, पक्वेष्वागतः। जातेष्विति गम्यते। गम्यमानमपि विभक्तेर्निमित्तं भवत्येव ।

३४१ । षष्ठी चानादरे । १ । ३ । १८३ । यद्भावो भावलक्षणं तस्मादनादरे अवज्ञाने गम्यमाने षष्ठीसप्तम्यौ विभक्ती

भवतः । रुदति लोके प्राव्राजीत्, रुदतो लोकस्य प्राव्राजीत्। क्रोशति बन्धुवर्गे प्राव्राजीत्, क्रोशतो बन्धुवर्गस्य प्राव्राजीत्। किमपि बहुषु वदत्सु स्वयमार्यो याति साधुमार्गेण, किमपि बहूनां वदतां स्वयमार्यो याति साधुमार्गेण । तस्मिन्नाक्रोशति तमनादृत्य प्राव्राजीत् याति चेत्यर्थः ।

३४२ । तुल्यार्थैस्तृतीया । १ । ३ । १८८ । तुल्यार्थैर्युक्तेऽप्रधाने तृतीया विभक्तिर्भवति । मात्रा तुल्यः, पित्रा समानः, देवदत्तेन सदृक्, जिनदत्तेन सदृशः, गुरुदत्तेन सदृक्षः ।

३४३ । षष्ठी । १ । ३ । १८९ । तुल्यार्थैर्युक्तेऽप्रधाने षष्ठीविभक्तिर्भवति । मातुस्तुल्यः, पितुः समानः ।

३४४ । पञ्चमी चर्ते । १ । ३ । १९१ ॥ ऋतेशब्देन युक्ते अप्रधाने द्वितीयापञ्चम्यौ विभक्ती भवतः । ऋते धर्मं कुतः सुखम्, ऋते धर्मात् कुतस्सुखम् ।

३४५ । पृथग्नाना तृतीया च । १ । ३ । १९२ । पृथक् नाना इत्येताभ्यां युक्तेऽप्रधाने तृतीयापञ्चम्यौ विभक्ती भवतः । पृथक् देवदत्तेन, पृथक् देवदत्तात् ।

३४६ । विनेमास्तिस्रः । १ । ३ । १९३ । विनाशब्देन युक्ते अप्रधाने इमा अनन्तरास्तिस्रस्तृतीयापञ्चमीद्वितीय विभक्तयो भवन्ति । विना वातेन, विना वातात्, विना वातम् ।

३४७ । हेतौ हेत्वर्थैः सर्वाः प्रायः । १ । ३ । १९५ । हेतुर्निमित्तं कारणमिति पर्यायः । तदर्थैः शब्दैर्योगे हेतावप्रधाने प्रायेण सर्वा विभक्तयो भवन्ति । धनेन हेतुना, धनाय हेतवे, धनात् हेतोः, धनस्य हेतोः, धने हेतौ वसति । एवं निमित्तका

रणप्रयोजनशब्दैरपि योगे नेयम्। इत्याद्यनेकविधोऽमूषां विभक्तीनामर्थविभागो वेदितव्यः।

इति विभक्त्यर्थसिद्धिः।

## अथ समाससिद्धिः

सुबन्तात् सुबन्ताश्रितत्वाद्य सुबन्ते संक्षेपेणोच्यते। पृथगर्थानां परस्परसम्बन्धिनां सुबन्तानां शब्दानामेकार्थीभाववचनं समासः। स च षोढा भवति बहुव्रीहिरव्ययीभावः तत्पुरुषः कर्मधारयः द्विगुर्द्वन्द्वश्चेति। तत्र बहुव्रीहिस्त्रिप्रकारः उत्तरपदार्थप्रधानः, उभयपदार्थप्रधानः, अन्यपदार्थप्रधानश्चेति। तत्रोत्तरपदार्थप्रधानो यथा–द्विदशन् इति स्थिते द्विशब्दात् "कालाध्वनोर्व्याप्ता" विधौद्। अभ्यावर्तमानया क्रियया संबध्यमानो हि कालो वार इत्युच्यते। स कालोऽनेन द्विशब्देन संख्यायते। अत्र भवतिक्रियाभ्यावृत्तिः दशभावो हि द्विरावर्तते, धात्वर्थस्यायौगपद्येन वा वृत्तिर्वारः। तत्र कर्मणीत्यौद् भवति, प्रतीयमानकृत्वेतिक्रियापेक्षया कर्मत्वात्। दशन् इत्यतो जम्। द्वि औ दशन् अस् इति स्थिते द्वौ वारौ दश भवन्तीति विग्रहे सुबन्तयोर्योगे सुप्सुपा समासो बहुलमित्यधिकृत्य—

३४८ ॥ सुज्वार्थे संख्या संख्यया संख्येये बहुव्रीहिः ॥ २।१।२॥ वारः सुचोऽर्थः धात्वर्थस्यैवायौगपद्येन वृत्तिरावृत्तिकालो वा। विकल्पः संशयो वा वार्थः। तत्र वर्तमानं संख्यावाचि सुबन्तं संख्यावाचिना संख्येये वर्तमानेन सुबन्तेन

सह समाससंज्ञं भवति बहुव्रीहिसंज्ञं च । योगे ऐकपद्यमेक-विभक्तित्वं चेत्येवमादिकं समासस्य प्रयोजनम् । **प्रत्ययस्य च सुपः श्लुगिति** सुपः श्लुक् । बहुव्रीहेः काष्टेटः इति प्रस्तुत्य.

३४९ ॥ **प्रमाणीसंख्याड्डः** ॥ २ । १ । १८९ ॥ प्रमाणी-शब्दात् संख्यावाचिशब्दान्ताच्च बहुव्रीहेर्डस्समासान्तो भवति । डित्यन्त्याजादेरिति लुक् । सूक्तं पूर्वमिति द्विशब्दस्य पूर्वनिपातः । बहुव्रीहिसंज्ञकाः शब्दा आश्रयलिङ्गत्वात् त्रिष्व-पि लिङ्गेषु नेतव्याः । द्विदशाः पुमांसः, द्विदशाः स्त्रियः, द्विदशानि वस्त्राणि विंशतिरित्यर्थः । एवं त्रीन् वारान् दश त्रिदशाः । चतुरो वारान् दश चतुर्दशाः । पञ्च वारान् दश पंचदशाः इत्यादि । उभयपदार्थप्रधानो यथा—द्विशब्दादौ त्रिशब्दाज्जस्, द्वि औ त्रि जस् इति स्थिते द्वौ वा त्रयो वेति विगृह्य **सुज्वार्थे** इत्यादिना समासः। शेषं पूर्ववत् । द्वित्राः पुमांसः, द्वित्राः स्त्रियः, द्वित्राणि वस्त्राणि । अत्र विकल्प्यमानाः संशय्यमाना वा पूर्वोत्तरपदार्था वाच्याः । अन्यपदार्थप्रधानो यथा—सद्धर्म इति स्थिते उभयत्रापि सुः, शोभनो धर्मोऽस्येति विगृह्य **एकार्थञ्चेति** बहुव्रीहिः समासः । ततः सुपः श्लुक् ।

३५० । **धर्मादन् द्विपदात्** । २ । १ । १९९ । धर्मशब्दा-न्तात् द्विपदात् बहुव्रीहेरन् समासान्तो भवति । तस्य—

३५१ । **ङ्ञाद्यायात्तद्धितः** । २ । ३ । ७३ ॥ ङ्युद्ध इत्यारभ्या **गुपौधूविच्छिपनपणेरायः** इत्यायप्रत्ययात्प्राक् यत् प्रत्ययसंज्ञं तत् तद्धितसंज्ञं भवति । इति तद्धितसंज्ञायां, **शिरसोऽप्येतद्धिते शीर्षन्नित्यधिकृत्य**—

३५२ । ए: । २ । ३ । ७४ । अवर्णान्तस्येवर्णान्तस्य चापदस्य तद्धिते परे लुग्भवति । विशेषणं सर्वादिसंख्यं बहुव्रीहाविति सुशब्दस्य पूर्वनिपात. । सुधर्मा, सुधर्माणौ, सुधर्माणः इत्यादि सुचर्मन्शब्दवत् । एवमनन्तधर्मेत्यादय. चित्रा गो इति स्थिते उभयत्रापि जस् । चित्रा गावोऽस्येति विगृह्य बहुव्रीहिः ।

३५३ । मानिस्त्र्येकार्थयोः स्त्र्यन्यतोऽनूः ।२। २। ४१। अन्यतो विशेष्यवशात् यः शब्द. स्त्रीलिङ्गः अनूः, ऊप्रत्ययान्तो न भवति स मानिन्नित्येतस्मिन् स्त्रीलिंगे चैकार्थे सामानाधिकरणे उत्तरादेः पुमान् भवति ।

३५४ । न्यग्गोप्यतोऽनंशीयो बहुव्रीहेर्न्हस्वः । २ । १ । १२३ । न्यक्कृतुपसर्जनं यो गोशब्दः यश्च प्यत्प्रत्याहारगृहीतप्रत्ययान्तः तदन्तस्य समासस्य ह्रस्वादेशो भवति नचेदसावंशिसमासः इयसो य प्यदधिकारः तदन्तश्च बहुव्रीहिर्भवति । स चासम्न इति ओष्ठयस्यौकारस्य ओष्ठ्य उकारः । चित्रगु', चित्रगू, चित्रगव. इत्यादि पटुशब्दवत् । एवं बहुगुः शबलगुरित्यादि। रूपवती भार्या अस्येति विगृह्य समासे पुंवद्भावो ह्रस्वत्वञ्च । रूपवद्भार्य । एवं प्रियपटु इत्यादि । प्राप्तमुदकं यम्, ऊढो रथो येन, उपहृतो बलिर्यस्यै, उद्धृत ओदनो यस्या , असिः द्वितीयो यस्य वीरा , पुरुपा यस्मिन् । द्वितीयाद्यन्यपदार्थेषु पूर्ववद् बहुव्रीहि । शेषं पूर्ववत् । प्राप्तोदको ग्राम', ऊढरथोऽनड्वान्, उपहृतबलिर्यक्षी, उद्धृतौदना स्थाली । अत्र समासे कृते आह् । असिद्वितीय. पुरुप: । इनः कजित्यधिकृत्य—

३५५ ॥ शेषात्सिद्धनन्दिनः ॥ २ । १ । २२९ ॥ यस्य समासान्तः प्रत्यय आदेशो वा न विहितः तस्मात् बहुव्रीहेः कच् समासान्तः सिद्धनन्दिन आचार्यस्य मतेन भवति अन्येषां मतेन न भवति । चकारो न क्वचीति विशेषणार्थः । वीरपुरुषको ग्रामः । अव्ययम्—उच्चैर्मुखं यस्य, अस्ति क्षीरं यस्या इति विगृह्य बहुव्रीहिः । उच्चैर्मुखः पुरुषः, अस्तिक्षीरा गौः । पश्वादाङ् धर्मादनद्विपदादिति द्विपदग्रहणात् बहूनामपि सुबन्तानां बहुव्रीहिर्भवति । त्रयः काला गोचरा यस्य, लोहितः तक्षकः प्रियो यस्येति विगृह्य त्रिपदबहुव्रीहिः । त्रिकालगोचरं द्रव्यम्, लोहिततक्षकप्रियः पुरुषः । बहुलाधिकारात् क्वचिदसमानाधिकरणेऽपि भवति । करे कृतं येनेति विगृह्य बहुव्रीहिः करकृत इत्यादि ।

अव्ययीभावोऽपि त्रिप्रकारः— अन्यपदार्थप्रधानः, पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानश्चेति । तत्रान्यपदार्थप्रधानो यथा— केशकेश, दण्डदण्ड इति स्थिते सर्वतोऽपि जस् । केशाश्च केशाश्चान्योन्यस्य ग्रहणं यस्मिन् युद्धे, दण्डाश्च दण्डाश्चान्योन्यस्य प्रहरणं यस्मिन् युद्धे इति विगृह्य—

३५६ । मिथो ग्रहणे प्रहरणे च सरूपं युद्धेऽव्ययीभावः । २ । १ । ६ । मिथोऽन्योन्यं गृह्णन्ति यस्मिन्, येन वा प्रहरन्ति तत्र वर्तमानं समानश्रुतिकं सुबन्तं तत्रैव वर्तमानेन सुबन्तेन सह समस्यते द्वितीयाद्यन्यपदार्थे युद्धे स च समासोऽव्ययीभावसंज्ञो भवति । सूक्तं पूर्वमिति पूर्वनिपातः । समासे, अन्त इति च वर्तमाने—

३५७ । इज्युद्धे । २ । १ । १३५ ॥ युद्धे यः समासो विहितः तस्मादिच् समासान्तो भवति । चकारः इत् एरिति लुक् ।

३५८ । आदिजन्ते ।२।२।८७। इज् युद्धे इति य इच् तदन्त उत्तरपदे पूर्वस्याचो बहुलमाकारो भवति । ततः स्वादयः—

३५९ । अव्ययीभावस्य । १ । २ । १५५ ॥ अव्ययीभावस्य सम्बन्धिनः सुपः श्लुग्भवति । केशाकेशि, परस्परं केशेषु गृहीत्वा यत् युध्यते तत् केशाकेशीत्यर्थः । एवं कचाकचि । दण्डादण्डि, दण्डैः परस्परं प्रहृत्य यत् युध्यते तत् युद्धं दण्डादण्डीत्यर्थः । मुष्टामुष्टि, अस्यसि । बहुलाधिकारात् क्वचिदाकारो न भवति । उन्मत्ता गङ्गा इति स्थिते उभयत्रापि सुः । उन्मत्ता गङ्गा अस्मिन्निति विग्रहे—

३६० । नदीभिर्नाम्नि । २ । १ । ७ । नदीवाचिभिः सुबन्तैः सुबन्तं द्वितीयाद्यन्यपदार्थे संज्ञाविषये समस्यते स च समासोऽव्ययीभाव. । सुप. श्लुक् । पूर्वपदस्य मानीत्यादिना पुंवद्भावः । अव्ययीभाव इति नपुंसकत्वेन नपोऽचो ह्रस्व इति ह्रस्वः । ततः स्वादयः । अव्ययीभावस्येति सुपः श्लुचि प्राप्तायाम्—

३६१ । नात. । १ । २ । १५६ । अकारान्तस्याव्ययीभावस्य सुपः श्लुग्न भवति ।

३६२ अमपञ्चम्याः ॥ १ । २ । १५७ ॥ अकारान्तस्याव्ययीभावस्य सम्बन्धिनः सुपोऽमित्ययमादेशो भवति पञ्चमीं वर्जयित्वा । मोऽणोमः इति मत्वम् पदस्येति लुक् । उन्मत्तगङ्गं शोभते, उन्मत्तगङ्गं पश्य ।

३६३ ॥ तृतीयाया वा ॥ १ । २ ।१५८ ॥ अकारान्तस्याव्ययीभावस्य तृतीयाया अम् वा भवति । उन्मत्तगङ्गम्, उन्मत्तगङ्गेन कृतम्, उन्मत्तगङ्गाभ्याम् उन्मत्तगङ्गैः । उन्मत्तगंगं देहि "अपञ्चम्या" इति प्रतिषेधात् पञ्चम्या अमादेशो न भवति । उन्मत्तगङ्गात् उन्मत्तगङ्गाभ्याम् उन्मत्तगङ्गेभ्यः । उन्मत्तगंगं स्वम्—

३६४ ॥ सप्तम्याः ॥ १ । २ । १५९ ॥ अकारान्तस्याव्ययीभावस्य अम् वा भवति । इति विकल्पेनामादेशे प्राप्ते-

३६५ ॥ नद्यद्वंश्यस्य ॥ १ । २ । १६० ॥ नद्यन्तस्य ऋद्धयन्तस्य वंश्यस्याकारान्तस्याव्ययीभावस्य सप्तम्या नित्यमम् भवति । उन्मत्तगंगं वसति । एवं लोहितगंगं, तूष्णींगंगम्, शनैर्गंगम् इति । इमानि देशनामानि । पूर्वपदार्थप्रधानो यथा– यावत् अमत्र इति स्थिते उभयत्रापि जस् यावन्त्यमत्राणि संभवन्तीति विग्रहे–

३६६ ॥ यावदवधारणे ॥ २ । १ । १० ॥ अवधारणमियत्तापरिच्छेदः तस्मिन् गम्यमाने यावदित्येतत्सुबन्तं सुबन्तेन सह समस्यते पूर्वपदार्थेऽभिधेये स च समासोऽव्ययीभावसंज्ञो भवति । शेषं पूर्ववत् । यावदमत्रम् । एवं यावदोदनम्, यावदवकाशम् अतिथीन् भोजय । यावन्त्यमत्राणि तावत अतिथीनिति निर्ज्ञातपरिमाणेनामत्रादिनातिथिपरिमाणमिहावधार्यते । इति शिवार्ये, सहक्षत्र, सुमद्र, दुर्यवन, निर्मक्षिका, निःशीत, अतिकम्बल, अधिस्त्री, अनुरथ, सहचक्र, अनुरूप, प्रति अर्थ, अनुज्येष्ठ, सहशील, सहदेवदत्त, सहतृण, उपकुम्भ,

सहपङ्जीवनिकाय–इति स्थिते इतीत्येवमादिभ्यः पूर्वपदेभ्यो-ऽव्ययेभ्य· सुः । इतीत्येवमादय शब्दाः शब्दप्रथाद्यर्थानां द्यो-तका अपि अत्र समासे वाचका भवन्तीति सप्तविभक्तीरु-त्पादयन्ति इति । शिवार्यक्षत्रशीतकम्बलरथरूपशीलकुम्भश-ब्देभ्यो ङस्, मद्रयवनमक्षिकाज्येष्ठशब्देभ्य आम्, स्त्रीशब्दात् सुप् अर्थशब्दात् **" भागिनि च प्रतिपर्यनुभि "** रित्यम् चक्र-देवदत्ततृणपङ्जीवनिकायशब्देभ्यः टा । नित्यसमासस्य स्वपदविग्रहो नास्तीत्यस्वपदविग्रहः । शिवार्यस्य प्रथनम्, क्षत्रस्य सम्पत्, मद्राणां समृद्धिः, यवनानां व्यृद्धि, मक्षिकाणामभावः, शीतस्यात्यय, कम्बलस्यायमकालः, स्त्रीपु अधिकृत्य, रथस्य पश्चात्, युगपत् चक्रेण, रूपस्य योग्यम्, अर्थे अर्थे प्रति, ज्येष्ठानामनतिवृत्तिः, शीलस्य सादृश्यम्, सदृशो देवदत्तेन, तृणेन सह, कुम्भस्य समीपम्, पङ्जीवनि-कायमन्तं कृत्वा इति विग्रहे—

३६७ । **शब्दप्रथासम्पत्समृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्र-तिसुप्पश्चाद्युगपद्यथासदृक्साकल्यान्तेऽव्ययम् । २।१।१८ ॥** शब्दस्य प्रथा प्रकर्षेण ख्याति', संपदन्यूनत्वम्, समृद्धिर्वृद्धेरा-धिक्यम्, व्यृद्धिः ऋद्धेरभाव, धर्मिणोऽसत्त्वमर्थाभावः, अत्य-योऽतीतत्वम् अतिक्रमः, असम्प्रत्युपभोगादे· वर्तमानकालप्र-तिषेधः । सुवर्थो कर्मादय, पश्चात् पृष्ठे, युगपत् सह एक-काले वा, योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं च यथार्थो, सदृक् सदृश, साकल्यमनवशेष, अन्त. समीपमवसानं च । एतेष्वर्थेषु वर्तमानमव्ययं सुनन्तं सुनन्तेन सह नित्यं समस्यते,

स च समासोऽव्ययीभावः । शेषं पूर्ववत् इतिशिवार्यम् ।

३६८ ॥ **सहस्याकालेऽव्ययीभावे** ॥ २ । २ । १११ ॥ सह इत्येतस्याकालवाचिन्युत्तरपदेऽव्ययीभावे समासे स इत्यादेशो भवति । सक्षत्रम् । सुमद्रम्, दुर्यवनम्, निर्मक्षिकम् । **नपोऽचो ह्रस्व** इति ह्रस्वः । निश्शीतम्, अतिकम्बलम्, अधिस्त्रि । ह्रस्वत्वम् । अनुरथम् । सचक्रम् । सहस्य सभावः । अनुरूपम्, प्रत्यर्थम्, अनुज्येष्ठम्, सशीलम्, सदेवदत्तम् । सहस्य सभावः । सतृणम्, उपकुम्भम्, सषड्जीवनिकायम् । उत्तरपदार्थप्रधानो यथा— सूपप्रति इति स्थिते सूपशब्दात् ङस् प्रतिशब्दात् सुः सूपस्य मात्रा इति विग्रहे—

३६९ **नित्यं प्रतिनाल्पे** ॥ २ । १ । १६ ॥ अल्पे वर्तमानेन प्रतिशब्देन सुपा सुबन्तं नित्यं समस्यते स च समासोऽव्ययीभावः । शेषं पूर्ववत् । सूपप्रति, एवं शाकप्रति ।

इति अव्ययीभावसमासः ।

---

तत्पुरुषो द्विप्रकारः— पूर्वपदार्थप्रधानः उत्तरपदार्थप्रधानश्चेति । तत्र पूर्वपदार्थप्रधानो यथा, नञ् अश्व इति स्थिते ञकार इत् **ननञ्** इतिविशेषणार्थः । उभयत्रापि सुः । अश्वादन्य इति विग्रहे—

३७० ॥ **नञ्** । २ । १ । २४ ॥ नञित्येतत्सुबन्तं सुपा वा समस्यते स तत्पुरुषश्च समासो भवति ।

३७१ ॥ **नञोऽश्** । २ । २ । ६० ॥ नञ उत्तरपदे अशादेशो भवति । शकारः सर्वादेशार्थः ।

३७२ ॥ अशोऽचि नट् । २ । २ । ६४ ॥ नञोऽशादेशादजादौ उत्तरपदे तस्योत्तरपदस्य नडागमो भवति । अकार उच्चारणार्थः, टकारो देशविध्यर्थः । अनश्वः । एवमनेकः, अगौः इत्यादि । पूर्वकाय इति स्थिते पूर्वशब्दात् सुः, कायशब्दात् ङस् । पूर्वः कायस्येति विगृह्य—

३७३ ॥ पूर्वापराधरोत्तरमंशिनाऽभिन्नेन । २ । १ । २५॥ अंशोऽवयवः एकदेशः तद्वानंशी । पूर्वादीन्यंशवाचीनि सुबन्तानि अंशिवाचिना सुपा वा समस्यन्ते तत्पुरुषश्च समासो भवति नचेत्सोंऽशी भिन्नस्तेन । सुप. श्लुगादि पूर्ववत् । पूर्वकायः । अपरकायः । एवमधरकायः । उत्तरकायः इति । उत्तरपदार्थप्रधानो यथा—धर्मश्रित इति स्थिते धर्मशब्दादम् श्रितशब्दात्सुः । धर्मं श्रित इति विग्रहे—

३७४ ॥ श्रितादिभिः ॥ २ । १ । ३३ ॥ द्वितीयान्तं श्रितादिभिः सुबन्तैर्वा समस्यते तत्पुरुषश्च समासः । शेषं पूर्ववत् । श्रितशब्दस्य क्रियावाचित्वात् त्रिलिङ्गत्वम् । धर्मश्रितः धर्मश्रिता धर्मश्रितम् । एवं दुःखातीतः नरकपतितः इत्यादि । शंकुलाखण्ड इति स्थिते शङ्कुलाशब्दात् टा खण्डशब्दात् सुः । शङ्कुलया कृतः खण्डः इति विग्रहे—

३७५ ॥ तृतीया तत्कृतैः ॥ २ । १ । ३६ ॥ तृतीयान्तं तत्कृतैस्तृतीयान्तार्थकृतैः गुणवचनैः सह समस्यते वा तत्पुरुषश्च समासः । शेषं पूर्ववत् । शंकुलाखण्डः । त्रिलिङ्गत्वमपि योज्यम । कृतार्थो वृत्त्यन्तर्भूतः । एवं गिरिकाणः क्षारशुक्लः इत्यादि । आत्मन् कृत, दात्र लून इति स्थिते आत्मन्दात्रश-

ब्दाभ्यां टा, कृतलूनशब्दाभ्यां सुः । आत्मना कृतम्, दात्रेण लूनमिति विग्रहे—

३७६ ॥ साधनं कृता ॥ २ । १ । ३७ ॥ साधनं कारकं, क्रियानिर्वर्तकं तद्वाचि तृतीयान्तं कृत्प्रत्ययान्तेन सुपा समस्यते तत्पुरुषश्च समासः । शेषं पूर्ववत् । न इति नलुक् । आत्मकृतम् । दात्रलूनम् । रथदारु, कुण्डलहिरण्य इति स्थिते रथकुण्डलाभ्यां ङे, दारुहिरण्यशब्दाभ्यां सुः । रथाय दारु, कुण्डलाय हिरण्यम् इति विग्रहे—

३७७ ॥ चतुर्थी प्रकृतिस्वार्थार्थादिभिः । २ । १ । ३९ ॥ स्वार्थेत्यर्थविशेषणं, प्रकृतिः परिणामि द्रव्यम्, तद्वाचिना सुवन्तेनार्थात् विकृतिवाचिस्वार्थेन चतुर्थ्यर्थाभिधायिना अर्थशब्देन तदादिभिश्चान्यैः सुवन्तैः सह चतुर्थ्यन्तं वा समस्यते तत्पुरुषश्च समासः । शेषं पूर्ववत् । रथदारु, कुण्डलहिरण्यम् । पितृशब्दात् ङे, अर्थशब्दात्सुः । पित्रे इदमिति विगृह्य तेनैव समासः । शेषं पूर्ववत् । पित्रर्थं, कुबेरबलिरित्यादि । चौरभय इति स्थिते चौरशब्दात् भ्यस् भयशब्दात् सुः । चौरेभ्यो भयमिति विग्रहे—

३७८ । पञ्चमी भयादिभिः । २ । १ । ४१ ॥ पञ्चम्यन्तं सुवन्तं भयादिभिः सुवन्तैः सह वा समस्यते तत्पुरुषश्च समासः । शेषं पूर्ववत् । चौरभयम्, वृकभयम्, धर्मापेतमित्यादयः । राजन् पुरुष इति स्थिते— राजन्शब्दात् ङस् पुरुषशब्दात्सु । राज्ञः पुरुष इति विग्रहे—

३७९ ॥ षष्ठ्ययत्नात् ॥ २ । १ । ४३ ॥ षष्ठ्यन्तं सुव-

न्तं सुबन्तेन सह समस्यते तत्पुरुषश्च समासः न चेत् सा यत्नात् विशेषात् प्रापिता भवति। शेषं पूर्ववत्। राजपुरुषः। एवं देवपुत्रः ब्राह्मणकम्बलमित्यादयः। अयत्नात् इति किम्? श-तस्य घृतं सर्पिषो ज्ञानमित्यत्र "न विनिमेयद्यूतपणमिति कर्मप्रतिषेधेन करणे ज्ञोऽज्ञाने इत्यनेन च यत्नात् षष्ठी विधी-यते। अक्षशौण्ड इति स्थिते अक्षशब्दात् सुप् शौण्डशब्दा-त्सुः। अक्षेषु शौण्ड इति विग्रहे—

३८० ॥ **सप्तमी शौण्डादिभिः** ॥२।१।५२॥ सप्त-म्यन्तं सुबन्तं शौण्डादिभिः सुबन्तैः सह वा समस्यते तत्पु-रुषश्च समासः। शौण्डो मद्यपः तत्सदृशो व्यसनी च शौण्ड। शेषं पूर्ववत्। अक्षशौण्डः। एवं युद्धशौण्डः, अक्षधूर्तः, युद्धनिपुणः इत्यादि।

इति तत्पुरुषसमासः।

---

कर्मधारयो द्विप्रकारः उत्तरपदार्थप्रधानः पूर्वप-दार्थप्रधानश्चेति। तत्रोत्तरपदार्थप्रधानो यथा–नील उत्पल इति स्थिते उभयत्रापि सु। नीलञ्च तदुत्पलञ्च तदिति विग्रहे—

३८१ ॥ **विशेषणं व्यभिचार्येकार्थं कर्मधारयश्च**।२।१। ५८॥ भेदकं विशेषणम्, भेद्यं विशेष्यम्। तत्र चान्यत्र च संभवि व्यभिचारि तद्विशेषणवाचि एकार्थसमानाधिकरणं सुबन्तं विशेष्यवाचिना सुबन्तेन सह वा समस्यते स च समासः तत्पुरुषसंज्ञः कर्मधारयसंज्ञश्च भवति। ततश्चश-ब्दार्थो वृत्तावन्तर्भूतः। ततः स्यादयः। नीलोत्पलम् कृष्णतिला

इति । पुमांश्च स गौश्च स इति विगृह्य तेनैव समासे पदस्येति सलोपः ।

३८२ ॥ **गोस्तत्पुरुषात्** । २ । १ । १६८ ॥ गोशब्दान्तात् तत्पुरुषादलुचः अट् समासान्तो भवति । टो इत्यर्थः। " एचोऽच्ययवायाव " इति अव्। पुंगवः। कडारश्च स जैमिनिश्च स इति विगृह्य तेनैव समासे कृते सूक्तं पूर्वमिति नित्यं पूर्वनिपाते प्राप्ते—

३८३ ॥ **कडारादयः कर्मधारये** । २ । १ । १२५ ॥ कडारादयः कर्मधारयसमासे वा पूर्वं प्रयोक्तव्याः । कडारजैमिनिः, जैमिनिकडारः । पूर्वपदार्थप्रधानो यथा—क्षत्रियभीरु इति स्थिते उभयत्रापि सुः। क्षत्रियश्च स भीरुश्च स इति विग्रहे—

३८४ । **निन्द्योऽपापाणकेन** । २ । १ । ६२ । निन्द्यः कुत्स्यः निन्द्यवाचि सुवन्तमेकार्थं पाप अणक इत्येतद्वर्जितेन निन्दनवाचिना सुबन्तेन सह वा समस्यते स च तत्पुरुषः कर्मधारयश्च। शेषं पूर्ववत्। क्षत्रियभीरुः, भिक्षुविटः इत्यादि। अत्र क्षत्रियादेर्विशेष्यत्वात् प्राधान्यम् ।

इति कर्मधारय. ।

द्विगुस्त्रिप्रकारः संज्ञायां निषेधात् तद्धितविषय·, उत्तरपदपरः, समाहारार्थश्चेति। तत्र तद्धितविषयो यथा—पञ्चन् कपाल इति स्थिते उभयत्रापि सुप्। पञ्चसु कपालेषु संस्कृतमिति विग्रहे संस्कृतेऽर्थे तद्धित उत्पत्स्यते तदुत्पत्तेः प्रागेव—

३८५ । **संख्या समाहारे च द्विगुश्चानाम्न्ययम्**। २।१।६१

अनेकस्य कथंचिदेकत्वं समाहारः। संख्यावाचिसुबन्तमेकार्थं सुबन्तेन सह वा समस्यते संज्ञायां तद्धिते प्रत्यये विषयभूते उत्तरपदे समाहारे चाभिधेये स च तत्पुरुषः कर्मधारयो द्विगुसंज्ञकश्च न चेत्समासो नाम्नि भवति। सुपः श्लुक्। पुनः पञ्चकपालशब्दात् सुप्—

३८६ ॥ संस्कृते भक्षे ॥ २ । ४ । २३७ ॥ तत्रेति सप्तम्यन्तात् संस्कृते भक्ष्ये यथाविहितं प्रत्ययो भवति इत्यण् सुपः श्लुक्। अणः—

३८७ ॥ श्लुग् द्विगोरलुचोऽनपत्येऽज्यादेः ॥ २ । ४ । १५ ॥ द्विगोरलुगन्तात् परो यः प्राग्जितीयेऽपत्यप्रत्ययवर्जितेऽर्थे अजादिर्यकारादिश्च प्रत्ययः तस्य श्लुग् भवति। इति श्लुक्। ततः स्वादयः। पंचकपालम्। उत्तरपदपरो यथा—पञ्चन् गो धन इति स्थिते गोपञ्चनशब्दाभ्यां जस् धनशब्दात्सुः पञ्च गावो धनमस्येति विगृह्य एकार्थञ्चेति त्रिपदबहुव्रीहिः धनशब्दे उत्तरपदे पञ्चन्शब्दस्य गोशब्देन द्विगुतत्पुरुषः। ततः गोस्तत्पुरुषादित्यट् समासान्तः, अवादेशः। उत्तरपदे च सर्वेषां वृधिरिति नित्य एव समासः। ततः स्वादयः। पञ्चगवधनः पञ्चगवप्रियः। समाहारार्थे यथा—पञ्चन् पूल इति स्थिते उभाभ्यामाम्। पञ्चानां पूलानां समाहार इति विगृह्य—

समाहारार्थे द्विगुतत्पुरुषः, तस्य द्विगुः समाहारे इति स्त्रीलिङ्गत्वात् द्विगोरिति ङी, लुगत इति लुक्, ततः सुः। पञ्चपूली। एवं दशपूली, पञ्चगवी, दशग्रामी इत्यादि।

इति द्विगुसमासः।

द्वन्द्वो द्विप्रकारः, समाहारप्रधानोऽवयवप्रधानश्चेति। तत्र समाहारप्रधानस्य द्वन्द्वस्य द्वन्द्वो वेत्यादिनैकत्वे द्वन्द्वैकत्वमिति नपुंसकत्वं, तत्र एकार्थत्वादेकवचनमेव भवति । एकविंशति-द्वाविंशत्यादय. पुनः समाहार एव तत्रापि स्त्रीलिङ्ग एव। विंशत्यादिवदवयवार्थप्रधानस्य तु द्वन्द्वस्य "परलिङ्गं द्वंद्वतत्पुरुष" इत्युत्तरपदालिंगं भवति । ततो द्व्यर्थाद् द्विवचनम्, बह्वर्थाद् बहुवचनं च भवति । प्लक्षन्यग्रोध इति स्थिते उभाभ्यां सुः प्लक्षश्च न्यग्रोधश्चेति विग्रहे—

३८८ ॥ द्वन्द्वस्सहोक्तौ । २ । १ । ८० ॥ सुबन्तं सुबन्तेन सह सहवचने समस्यते स च द्वन्द्वसंज्ञो भवति । परस्परं संक्रान्तिः सहोक्ति । सुप इलुक्—

३८९ ॥ लघ्व्यजाद्यदल्पाजर्च्यमेकम् । २ । १ ।११९॥ द्वन्द्वसमासे लघ्वक्षरं घिसंज्ञमजाद्यदन्तमल्पाच् अर्च्यञ्चैकं पूर्वं प्रयोक्तव्यम्। इति प्लक्षशब्दस्य पूर्वनिपात.। प्लक्षन्यग्रोधौ। वधूश्च वरश्चेति विगृह्य तेनैव समासे—

३९० । द्वन्द्वो वा । २ । १ । ९३ । द्वन्द्वसमास एकार्थो वा भवति। वधूवरम् । समुदयप्रधानाभावे अवयवप्रधान एव। वधूवरौ। अश्वाश्च रथाश्च, यूकाश्च लिक्षाश्चेति विगृह्य द्वन्द्वसमासः ।

३९१ । सेनाङ्गक्षुद्रजन्तु । २ । १ । ९८ । सेनायाः अङ्गान्यवयवा, क्षुद्रजन्तवोऽल्पकाया प्राणिन. । सेनाङ्गावयवः क्षुद्रजन्त्ववयवश्च बह्वर्थाशो द्वन्द्व एकार्थो नित्यं भवत्यभेदे । अश्वरथं, यूकालिक्षम। दधि पयश्चेति विगृह्य पूर्ववत्समास—

३९२ । **न दधिपयआदिः** । २ । १ । १०५ । दधिपयआदिर्द्वन्द्व एकार्थो न भवति । दधिपयसी । एवं दधिसर्पिषी इत्यादि ।

इति द्वन्द्वः समासः ।

समाससमूहो यथा—चित्राणि च तानि विविधानि च तानि चित्रविविधानि इति विशेषणसमासः। पुष्पाणि च फलानि च पुष्पफलानि इति द्वन्द्व । तरूणां वनानीति तरुवनानि इति षष्ठीसमासः । चित्रविविधानि पुष्पफलानि येषां तानि चित्रविविधपुष्पफलानीति बहुव्रीहिः । तानि च तानि तरुवनानि च तानि चित्रविविधपुष्पफलतरुवनानि इति विशेषणसमासः । उद्यानस्य भूमिरुद्यानभूमिरिति षष्ठीसमास.। चित्रविविधपुष्पफलतरुवनैरुपशोभितेति साधनं कृतेति तत्पुरुषः। सा उद्यानभूमिर्यस्मिन् नगरेऽस्तीति तन्नगरं चित्रविविधपुष्पफलतरुवनोपशोभितोद्यानभूमिरि इति बहुव्रीहि । उपशोभिताशब्दस्य मानि. त्यादिना पुंवद्भाव॰, " शेषात्सिद्धनन्दिनः " इति कच् । धनशब्दवत् रूपनय. । एवं विविधपुष्पफलालंकृतद्रुमशतावृतशिखर॰ पर्वत इत्यादि ।

इति समाससमूहः ।

अथ द्वन्द्वापवाद एकशेष आरभ्यते । वक्रश्च कुटिलश्चेति विग्रहे द्वन्द्वसमासे प्राप्ते तदपवाद —

३९३ ॥ **समानामेकः** । २।१।८१॥ समानां तुल्यार्थानां शब्दानां अर्थस्य सहवचने तेषामेक एव प्रयोक्तव्यः विभक्तिगकृत्यैव॰द्वन्द्वापवादेनैकशेषः क्रियते इति नात्रावयवविभक्तीनां

श्लुग्विधीयते । प्रयुज्यमानः शब्दोऽप्यप्रयुज्यमानानां शब्दानाम-
र्थमाचष्टे अन्यथा सहोक्त्यनुपपत्तेरिति द्विवचनबहुवचने भवतः।
वक्रौ कुटिलौ वा वक्रकुटिलाविति न भवति यथावाक्यम् ।
अक्षश्च शकटाक्षः अक्षश्च विभीताक्षः अक्षश्च देवनाक्षः,
इति विग्रहे—

३९४ । सुप्यसंख्येयः । २ । १ । ८२ ॥ सुपि सर्वत्र ये
शब्दाः समाना एकरूपा भवन्ति तेषां सहोक्तौ एक एव
प्रयोक्तव्यः संख्येयवाचिशब्दरूपं वर्जयित्वा । अक्षाः । विंश-
तिश्च विंशतिश्च विंशती । विंशतिश्च, विंशतिश्च, विंशतिश्च
विंशतयः । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः ।
असंख्येय इति किम्? एकश्च एकश्च, द्वौ च द्वौ च, द्वन्द्वोऽ-
प्यनभिधानान्न भवति । स च देवदत्तश्चेति विग्रहे—

३९५ । त्यदादिः । २ । १ । ८३ । त्यदादिना अन्येन
च त्यदादेः सहोक्तौ त्यदादिरेक एव प्रयुज्यते ।
तौ अयं च देवदत्तश्च इमौ । त्यदादीनां मिथो यत् यत् परं
तदेवैकं प्रयुज्यते । स च त्वं च युवाम् । त्वं च भवांश्च भव-
न्तौ । भवांश्च अहं च आवाम् ।

इति समाससिद्धिः ।

अथाश्लुग्विधिरुच्यते । क्वचित्समासे विभक्तयः श्रूयन्ते
स समासोऽसमासो वेति सन्देह उपजायते तन्निवृत्त्यर्थमश्लु-
गधिकारः प्रारभ्यते । स्तोकमुक्त, अल्पमुक्त, कतिपयमुक्त, कृ-
च्छ्रमुक्त, दूर आगत, अन्तिक आगत इति स्थिते स्तोका-
दिभ्यो ङसिभ्यांभ्यसित्यादिना दूरान्तिकाभ्यां सप्तमी चाम-

त्वारादर्थाविति च ङसिः, मुक्तागताभ्यां सु.—

३९६ ॥ **क्तेनासत्त्वे** । २ । १ । ४२ ॥ असत्त्वे वर्तमाना या पञ्चमी तदन्तं क्तप्रत्ययान्तेन सुपा वा समस्यते तत्पुरुषश्च समासो भवति । प्रत्ययस्य च श्लुचि प्राप्तायाम्—

३९७ ॥ **नोत्तरपदेऽसत्त्वे** ॥२।२।२॥ असत्त्वे यः समास उक्तस्तदवयवस्य सुपः पञ्चम्या उत्तरपदे परतः श्लुग्न भवति । उत्तरपदस्य सुपः श्लुचि समासात् सुप् । स्तोकान्मुक्तः, अल्पान्मुक्तः, कतिपयान्मुक्तः, कृच्छ्रान्मुक्तः, दूरादागतः, अंतिकादागतः । ओजस्कृत, सहस्कृत, अंभस्कृत, तपस्कृत इति स्थिते ओज आदिभ्यः कर्तरि करणे वा तृतीया, कृतात् सुः । साधनं कृतेति समासः । ततः सुपः श्लुचि प्राप्तायाम्-

३९८ ॥ **ओजोऽञ्जस्सहोऽम्भस्तपसष्टः** । २ । २ ।४॥ ओजआदिभ्यः परस्य तृतीयैकवचनस्य उत्तरपदे परे श्लुग्न भवति । ओजसाकृतम्, अम्भसाकृतम्, तपसाकृतम् । तमस इत्येके तेषां तमसाकृतम् । मनसा ज्ञातुं शीलमस्येति विगृह्य आङ्पूर्वाद् ज्ञा इत्येतस्माद् धातोः शीलेजातेरिति णिन् णकार इत् आतो यमिति यम् स्वकृतास्युक्तमिति समासः । ततः श्लुचि प्राप्तायाम्—

३९९ ॥ **मनस आज्ञायिनि** । २ । २ । ६ ॥ मनःशब्दात्परस्य तृतीयैकवचनस्य आज्ञायिन्युत्तरपदे श्लुग्न भवति । मनसाज्ञायी । मनसासंगता, मनसागुप्तेति कर्तरि करणे वा तृतीया साधनं कृतेति समासः । सुपः श्लुचि प्राप्तायाम्—

४०० ॥ **नाम्नि** । २ । २ । ७ ॥ मनःशब्दात्परस्य

तृतीयैकवचनस्य उत्तरपदे संज्ञायां विषये श्लुग्न भवति । मनसासंगता, मनसागुप्ता । संज्ञासु यथाकथंचित् व्युत्पत्तिर्न स्यात्, व्युत्पत्तिर्वाक्याभिनिवेश कर्तव्यः । नाम्नीति किम् ? मनोदत्ता कन्या । परपद, परभाषा, आत्मनूपद, आत्मनूभाषा इति स्थिते यदर्थमिति चतुर्थी पदभाषशब्दयोरर्थादित्वात् चतुर्थी प्रकृतिस्वार्थात्र्थादिभिरिति समासः । तत्र श्लुचि प्राप्तायाम्—

४०१ ॥ ङेर्व्याकरणे । २ । २ । ८ ॥ चतुर्थ्येकवचनस्योत्तरपदे श्लुग्न भवति व्याकरणविषये नाम्नि । परस्मैपदम् परस्मैभाषः, आत्मनेपदम् । आत्मनेभाषः । नाम्नीति किम् ? परहितम् । त्वचूसार, दृषद्मापक, अरण्यतिलक, वनहरिद्रक इति स्थिते पूर्वपदेभ्यः सप्तम्येकवचनं ङि उत्तपदेभ्यः स्वादयः—

४०२ । नाम्नि । २ । १ । ५३ । संज्ञायां विषये सप्तम्यन्तं सुपा समस्यते तत्पुरुषश्च समासः । सुपः श्लुचि प्राप्तायाम्—

४०३ । हलतः सप्तम्याः । २ । २ । ९ । हलन्ताददन्ताच परस्या सप्तम्या उत्तरपदे श्लुग्न भवति संज्ञायाम् । त्वचिसारः दृषदिमापक अरण्येतिलकाः वनेहरिद्रकाः । दृषद्गाषक, समिद्माषक, स्तूपशाणक, मुकुटकार्षापण इति स्थिते पूर्वपदेभ्यो ङिः उत्तरपदेभ्य. सु । दृषदि घातव्यो माषक इति विगृह्य नाम्नि इति समास. । सुपः श्लुचि प्राप्तायाम्—

४०४ । कारे प्राचां हलि २ २ १० रक्षार्थं प्रजानां राज्ञे धर्म्यं देयं कारः तस्मिन् विषये श्लुग्न भवति । दृषदिमाष-

-कः, समिधिमापकः, स्तूपेशाणकः, मुकुटेकार्षापणः। प्राचामिति किम्? यूथपशुः, यूथवृषः। मध्यगुरुः, अन्तगुरुः इति स्थिते पूर्वपदाभ्यां ङि उत्तरपदाभ्यां सु। सप्तमी शौण्डादिभिरिति समासः। मध्ये गुरुरस्येति बहुव्रीहिर्वा। सुपः श्लुवि प्राप्तायाम्—

४०५। मध्यान्ताद् गुरौ ॥ २। २। ११ ॥ मध्यान्ताभ्यां परस्याः सप्तम्याः गुरुशब्दे उत्तरपदे श्लुग्न भवति। मध्येगुरुः, अन्तेगुरुः। उरस् लोमन्, शिरस् शिखा, कण्ठ काल, वह गडु इति स्थिते पूर्वपदेभ्यो ङिः उत्तरपदेभ्यः स्वादि। उरसि लोमान्यस्येत्येवमादि विगृह्य बहुव्रीहिः। सुपः श्लुवि प्राप्तायाम्—

४०६। अकामेऽमूर्द्धमस्तकात् स्वाङ्गात्। २। २। १२। मूर्द्धमस्तकशब्दवर्जितात् स्वाङ्गवाचिनो हलदन्तात् शब्दरूपात् परस्या सप्तम्याः कामशब्दवर्जिते उत्तरपदे श्लुग्न भवति। उरसिलोमा, शिरसिशिखः, कण्ठेकालः, वहेगडुः। अकाम इति किम्? मुखे कामोऽस्य मुखकामः। अमूर्द्धमस्तकादिति किम्? मूर्द्धशिखः, मस्तकशिखः। हस्तबन्ध, चक्रबन्धः इति स्थिते पूर्वपदाभ्यां ङि उत्तरपदाभ्यां सुः। सप्तमी शौण्डादिभिरिति समासः। हस्ते बन्धोऽस्येति विगृह्य बहुव्रीहिर्वा। सुपः श्लुवि प्राप्तायाम्

४०७। बन्धे घञि वा। २। २। १३ ॥ हलदन्तात् सप्तम्याः घञन्ते बध्नातावुत्तरपदे श्लुग्वा न भवति। हस्तेबन्धः हस्तबन्धः, चक्रेबन्धः, चक्रबन्धः, स्तम्ब रम, कर्णे जप इति स्थिते स्तम्बे रमते, कर्णे जपति इति वि

गृह स्वकृतास्युक्तमिति समासः । सुपः श्लुचि प्राप्तायाम्—

४०८ ॥ तत्पुरुषे कृति बहुलम् । २ । २ । १४॥ हलद-
तात् परस्याः सप्तम्याः कृदन्त उत्तरपदे तत्पुरुषसमासे बहु-
लं श्लुग्न भवति । क्वचित् प्रवृत्तिः—स्तम्बेरमः, कर्णेजपः,
भस्मनिहुतम् । क्वचिदप्रवृत्ति—मद्रेषु चरतीति मद्रचरः,
ग्रामे कारक. ग्रामकारक· । सप्तमीसमासः । क्वचित् विभाषा-
सरसिरुहम्, सरोरुहम् । क्वचिदन्यदेव—हृदयं स्पृशतीति हृ-
दिस्पृक् । पद्नोमास्हृन्निशसन्यूषन्दोषन्यकन्शकन्उदन्नासं-
श्वासुटीति हृदयस्य हृदादेश. अनडुधुदित्यादिना शकारस्य
ककारः । एवं दिवं स्पृशतीति दिविस्पृक् । द्वितीयार्थे सप्तमी
लुक्च । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं
वदन्ति । खे शेते इति खेशय, खशय । बिलेशय , बिलशयः।
वनेवासी वनवासी । ग्रामेवास , ग्रामवास , इत्यत्रापि अस्यु-
क्तसमासः । सुपः श्लुचि प्राप्तायाम्—

४०९ । शयवासिवासेऽकालात् । २ । २ । १८ । अका-
लवाचिनः परस्या· सप्तम्या· शयादिषु उत्तरपदेषु श्लुग्वा· न
भवति । अकालादिति किम् ? पूर्वाह्णशय । हलत इत्येव । गुहा-
शयः, भूमिशय. । चौरस्यकुलम्, दासस्यभार्या, दास्याः—
पतिः—अत्रापि षष्ठीसमासे कृते सुप· श्लुचि प्राप्तायाम्—

४१० । षष्ठ्या आक्रोशे ।·२ । २ । २२ । आक्रोशे
गम्यमाने षष्ठ्या उत्तरपदे श्लुग्न भवति । आक्रोशः क्षेपो,
निन्दा । अन्यत्र चौरकुलम्, दासभार्या । दास्याःपुत्रः, दासी-
पुत्र·, वृषल्या पुत्रः वृषलीपुत्रः अत्रापि षष्ठीसमासे कृते

श्लुचि प्राप्तायाम्—

४११ । पुत्रे वा । २ । २ । २३ । आक्रोशे गम्यमाने पुत्रशब्द उत्तरपदे षष्ठ्याः श्लुग्वा न भवति । अन्यत्र ब्राह्मणीपुत्रः । वाचोयुक्तिः, दिशोदण्ड, पश्यतोहरः अत्रापि षष्ठीसमासे श्लुचि प्राप्तायाम्—

४१२ ॥ वाग्दिक्पश्यतो युक्तिदण्डहरे । २ । २ । २४॥ वागादिभ्य. परस्याः षष्ठ्या यथाक्रमं युक्त्यादिषु उत्तरपदेषु श्लुग्न भवति । होतुः पुत्र, होतुरन्तेवासी, पितुः पुत्रः, पितुरन्तेवासी–अत्रापि षष्ठीसमासे श्लुचि प्राप्तायाम्—

४१३ ॥ ऋतां विद्यायोनिसम्बन्धे । २ । २ । २८ ॥ ऋकारान्तानां योनिकृते विद्याकृते च सम्बन्धे वर्तमानानां सम्बन्धिन्याः षष्ठ्याः तत्सम्बन्धिनिमित्त एवोत्तरपदे श्लुग्न भवति। अन्यत्र भर्तृगृहं, भर्तृशिष्यः । होतुःस्वसा होतृस्वसा, दुहितुःपतिः दुहितृपति.–अत्रापि समासे श्लुचि प्राप्तायाम्—

४१४ ॥ स्वसृपत्योर्वा । २ । २ । २९ ॥ विद्यायोनिसम्बन्धे वर्तमानानामृकारान्तानां षष्ठ्याः स्वसृपति इत्येतयोः तत्सम्बन्धिनिमित्तयोरुत्तरपदयोः श्लुग्वा न भवति । मातुःस्वसा, पितुःस्वसा–इत्यत्रापि श्लुचि प्राप्तायां तेनैव विकल्पेनाश्लुक् । यदा त्वश्लुक् तदा—

४१५ ॥ मातृपितुः स्वसुः षिः । २ । २ । १४१ ॥ मातृपितृभ्यां परस्य स्वसृ इत्येतस्योत्तरपदस्य षिरादेशो वा भवति । मातुःष्वसा मातुःस्वसा, पितुःष्वसा, पितुःस्वसा । यदा तु श्लुक् तदा—

४१६ ॥ उः ॥ २ । २ । १४२ ॥ ऋवर्णान्ताभ्याम माटृ पितृभ्यां परस्योत्तरपदस्य स्वसुर्नित्य पिर्भवति मातृष्वसा । माता च पिता चेति द्वन्द्वसमासे श्लुचि कृतायां, मातारपितर ॥ द्वन्द्वे वा इत्यधिकृत्य—

४१७ ॥ आङ् । ० । २ । ३१ ॥ विद्यायोनिसम्बन्धे निमित्ते सति वर्तमानानां ऋकारान्तानां यो द्वन्द्व तत्रोत्तरपदे परे पूर्वपदस्याङ्ङिदाकारादेशो भवति । मातापितरौ, एव होता च पोता च होतापोतारौ, नेष्टा चोद्गाता च नेष्टोद्गातारौ, होतापोता च नेष्टोद्गातारौ च होतापोतानेष्टोद्गातार , होता च पोता च नेष्टोद्गातारौ च होतृपोतानप्टोद्गातार इति भवति अन्यदुत्तरपद यथाविवक्षमाकार —

४१८ इन्द्रामामादिषु देवतानाम् । २ । २ । ३३ ॥ इन्द्राम इत्यवमादिषु वाचिषु द्वन्द्वेषु उत्तरपदेषु पूर्वस्याकारो भवति । द्रश्च सोमश्च इन्द्रासोमौ, सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ । ग्निश्च इन्द्रश्च अग्नेन्द्रौ एतन्निति किम सूर्यचन्द्रौ—

४१९ पोमवरुणेऽग्नेरी । २ । ० । ३४ ॥ अग्निशब्दस्य पोम रुणयोरुत्तरपदयो देवता द्वन्द्वे ईकारो भवति । षोमति निपातनात् त्वम । अग्निश्च सोमश्च अग्नीषोमौ । अग्निश्च वरुणश्च अग्नीवरुणौ ।

४२० नाप्यविष्ण्विन्द्रे । २ । २ । ३५ ॥ अग्निशब्दस्य आद् आकार विषयभूत विष्णु इन्द्र इत्येतद्वर्जित उत्तरपद आकारकारौ न भवत । आग्निमारुत कर्म आग्निवारुणी अनड्वाही । विष्ण्विन्द्र इति किं । आग्निवैष्णवम । आग्नेन्द्रम् । इन्द्रासोमादिषु देवतानामित्या-त्वम् ।

इत्यश्लुक्सिद्धिः ।

# अथ तद्धितसिद्धिः ।

अथ सुबन्ताश्रितत्वात् सुबन्त तद्धितसिद्धि सक्षेपेणोच्यते—
तद्धिता द्विप्रकारा प्रकृत्यर्थादर्थान्तरवृत्तय स्वार्थिकाश्चेति । तत्राद्या द्विप्रकारा अनेकार्था प्रत्यर्थनियताश्चेति, अनेकार्था अणादय , प्रत्यर्थ नियता इत्यादय , एकस्मिन्नेवार्थे वर्तमाना इत्यर्थ । स्वार्थिकाश्च द्वि प्रकारा प्रकृत्यर्थविशेषद्योतिन तावन्मात्रवृत्तयश्चेति । तत्राद्या द्विप्र कारा प्रातिपदिकार्थप्रधाना , विभक्त्यार्थप्रधानाश्चेति, प्रातिपदिकार्थ प्रधाना चरडादय विभक्त्यर्थप्रधाना ह्यादिय तावन्मात्रवृत्तयोऽपि पूर्ववत् द्विप्रकारा प्रातिपदिकार्थप्रधाना ष्यणादय विभक्त्यर्थप्रधाना प्रसादय । प्रकृत्यर्थे एव ये भवन्ति ते स्वार्थिका उपगुशब्दात् ङस् उपगु अम् इति स्थिते उपगोरपत्यमिति विग्रहे प्राग्दिताद् इत्या दयोऽनुवर्तन्ते—

४२१ । ङसोऽपत्ये । २ । ४ । १८ ॥ ङस पष्ठ्यन्तादप त्येऽर्थे यथाविहितमणादय प्रत्यया भवन्ति । यो यतोऽधिकृत स ततो भवतीत्यर्थ । णकार इत् वकयुमिश्रयुप्रत्ययस्येयादर्ण्णिति इति विशेषणार्थ । प्रत्ययस्य च सुप श्लुगिति सुप श्लुक तस्य " इजाद्या यातद्धित " इति तद्धितसज्ञायाम् शिरसोऽप्येतद्धितेशीर्षन्, वकयु मिश्रयुप्रत्ययस्येयादेर्ण्णितीति अधिकृत्य—

४२२ । आरैचोऽश्वादे । २ । ३ । ८४ । ञ्णिति णिति च तद्धित पर य पूर्व तदासन्न प्रकृतिविभाग तस्याचा मध्ये य आदिरच् तस्य स्थाने आ, आर, ऐस्र ओकारश्चादेशा भवन्ति । आसन्न इति उकारस्यौकार ।

४२३ । अवस्वयम्भुवः । २ । ३ । ८२ । स्वयम्भूशब्दवर्जितस्यापदस्योवर्णस्य तद्धितपरे अवादेशो भवति । ततःस्वादयः औपगवः स्त्रियाम्–टिड्ढाणञित्यादिना ङी औपगवी वृद्धविवक्षायाम्–

४२४ । पौत्रादि वृद्धम् १ । १ । १३ । परमप्रकृतेरपत्यवतः यत्पौत्राद्यपत्यम् तत् वृद्धसंज्ञं भवति । उपगोरौपगवस्य वा अपत्यं वृद्धमित्येवं विवक्षायाम् पौत्राद्यपत्यं पूर्वेषामापरमप्रकृतेरपत्यं भवति तत्सम्बन्धिविवक्षायां अनन्तरादिभ्योऽपि प्रत्ययः प्राप्नोतीति नियम आरभ्यते—

४२५ । आद्यात् । २ । ४ । १९ । अपत्ये यः प्रत्ययः स आद्यात् परमप्रकृतेरेव नानन्तरवृद्धयुवभ्य इति नियमात् परमप्रकृतेरेवोपगुशब्दात् प्रथम एवाण् प्रत्ययो भवति । औपगवः । युवापत्य विवक्षायाम्—

४२६ । प्रपौत्राद्यस्त्रीवंश्यज्यायो भ्रात्रोस्मति युवा । १ । १ । १४ । प्रपौत्रः पौत्रापत्यम् परमप्रकृतेश्चतुर्थः वंशे भवो वंश्यः पित्रादिरात्मन कारणम् ज्यायान भ्रात्रादि वयोऽधिकः एकपितृक एकमातृको वा परमप्रकृतेःप्र पौत्राद्यपत्यं स्त्रीवर्जितं वंश्ये सति जीवति पुत्रादिः ज्यायसि च भ्रातरि कनीयान भ्राता युवसंज्ञो भवतीति चतुर्थो देर्युवसंज्ञायां उपगोरौपगवस्य वा अपत्यं युवेति विग्रहे—

४२७ वृद्धाद्यूनि २ । ४ । २० । अयमपि नियमः यून्यपत्ये यः प्रत्ययः स आद्यात् वृद्धात् प्रथमात् यो वृद्धप्रत्ययः तदन्तात भवति न परमप्रकृत्यनन्तरयुवभ्य इति औपगवशब्दा दकारान्तात् इञोऽपत्ये इत्यधिकृत्य—

४२८ । अत इञ् । २ । ४ । २१ । अकारान्तात् परो यो-ङस् षष्ठी तदन्तादपत्येऽर्थे इञ् प्रत्ययो भवत्यणोऽपवादः । अकारः आरैजर्थः शेषं पूर्ववत् । एरितिकारलोपः औपगविर्युवा । दक्षस्यापत्य-मितिविगृह्य पूर्ववत् इञ् शेषं पूर्ववत् दाक्षिःस्त्रियाम्—

४२९ । नुरितः । १ । ३ । ७० । इकारन्तात् मनुष्यजाति वाचिनः स्त्रियां ङी भवति दाक्षी, दक्षस्यापत्यं वृद्धमिति वृद्धापत्य विवक्षायां पूर्ववत् आद्यादिति नियमात् परमप्रकृतेर्दक्षशब्दात् प्रथम प्रत्यय इञ् भवति दाक्षिः दक्षस्यापत्यं युवेति यून्यपत्ये विवक्षिते "वृद्धाद्यूनि" इति नियमात् नडादिभ्यः फणित्यधिकृत्य—

४३० । यञिञः । २ । ४ । ३३ । यञन्तादिञन्ताच्च वृद्धे वर्तमानाद्यून्यपत्ये फण्भवति णकार आरैजर्थः ।

४३१ । छघढखफप्रत्ययस्येयियेयीनायन् । २ । ३ । ३१ । छकारादीनां वर्णानां प्रत्ययावयवानां यथासंख्यमीयादय आदेशा भवन्ति फस्यायन, एरितीकारलुक् अभिन्न इति णत्वम् दाक्षायणः । गर्गस्यापत्यमिति विगृह्य इञ् प्रत्ययः शेषं पूर्ववत् गार्गिः । गर्गस्या पत्यं वृद्धमिति वृद्धापत्यविवक्षायाम्—.

४३२ । गर्गादेर्यञ् । २ । ४ । ३८ । गर्गादिभ्योऽपत्ये वृद्धे यञ् भवति शेषं पूर्ववत् गार्ग्यः, गार्ग्यौ, बहुषु—

४३३ । यञञोऽगोपवनादिस्त्यापर्णान्तात् । २ । ४ । ११० । ... न बहुत्वे गोत्रे वर्तमानस्य य. प्रत्ययः तस्य अस्त्रियां ल्लुग्भवति गोपवनादिभ्यः स्त्यापर्णान्तेभ्यो विदिसं वर्जयित्वा । ल्लुचि "ल्लुग्निमित्तन्" इति नियमात् स्थानिवद्भावाभावादारैज् न भवति गर्गाः । स्त्रियाम्—

४३४ । यञोऽपावटात् । १ । ३ । १५ । यञ्प्रत्ययान्तात् स्त्रियां वर्तमानात् ङी भवति न चेत् स यञ् पकारादवटशब्दाच्च परो भवति । लुगत इत्यकारलुक् ।

४३५ । मत्स्यतद्धितस्य हलो यः । १ । ३ । ७९ । मत्स्य शब्दस्य तद्धितप्रत्ययस्य च यो यकारो हलः परस्तस्य लोपो भवति । गार्गी, गार्ग्यौ, गार्ग्यः इत्यादि । पक्षे—

४३६ । यञ्यञलोहितादिशकलान्तकौरव्यासुरिमाण्डूकाड्डफट् । १ । ३ । १६ । यञोऽयन्तेभ्यः लोहितादिभ्य शकल-पर्यन्तेभ्यः कौरव्य आसुरि माण्डूक इत्येतेभ्यः स्त्रियां ड्फट् प्रत्ययो भवति । टकारो ङ्यर्थः, डकार आसुरेर्लुगर्थः, फस्यायन् टिड्ढणञ्णि-त्यादिना ङी, अभिन्न इति णत्वम् । गार्ग्यायणी, गार्ग्यायण्यौ, गार्ग्या-यण्यः इत्यादि । युवापत्यविवक्षायां गर्गस्यापत्य युवेति विगृह्य 'यञिञः' इति गार्ग्य इत्यत फण् शेषं पूर्ववत् । गार्ग्यायण । करीषस्य गन्ध इवगन्धोऽस्येति विगृह्य बहुव्रीहि वृत्तौ करीषपद करीषगन्धतुल्ये वर्तते इत्येकार्थमेव—

४३७ । चोपमानात् । २ । १ । २०६ । उपमानात्परो यो गन्धशब्दस्तदन्तात् बहुव्रीहे वा इत् भवति समासान्त । यदेत्तदा करीषगन्धेरपत्यम् इति विगृह्य "इसोऽपत्ये" इत्यण् कारीषगन्ध, यदानेत्तदा "अत इञ्" इति इञ् कारीषगन्धिः, स्त्रियाम्—

४३८ । गुरूपोत्तमस्यानार्षेऽपत्येऽणिञःष्यङ् । १ । ३ । २ । अनार्षेऽपत्ये स्त्रियां यौ विहितौ तौ अणिञौ प्रत्ययौ तदन्तस्य शब्द-रूपस्य गुरूपोत्तमस्य ष्यङादेशो भवति । उत्तमशब्दोऽव्युत्पन्नस्त्रिप्रभृती नामन्तमाह तस्य समीपमुपोत्तमं गुरु उपोत्तमं यस्य तत् गुरूपोत्तमम्,

पकारोऽनुबन्धःष्यदिति विशेषणार्थः, डकारोऽन्त्यादेशार्थः ततोऽ जागतामित्याड् कारीषगन्ध्या एवं कौमुदगन्ध्या। भिक्षूणां समूह इति विग्रहे——

४३९। भिक्षादेश्च समूहे। २। ४। १२८। षष्ठ्यन्तात् भिक्षादेरन्यस्माच्च शब्दरूपात् समूहेऽर्थे यथाविहितं प्रत्ययो भवतीत्यण्, शेषं पूर्ववत्। भैक्षम्, एवं काकानां समूहः काकम्, बृहस्पतीनां समूहः बार्हस्पत्यम् एवं वानस्पत्यम् * पत्युत्तरपदयमादित्यदित्यदितेर्ञ्योऽ णपवादे चास्वे इत्यधिकारात् ञ्यः। कवचिनां समूह इति विग्रहे—

४४०। कवचिहस्त्यचित्ताच्च ठण्। २। ४। १३२। कवचिन् हस्तिन् इत्येताभ्यां अचित्तवाचिभ्यश्च केदाराच्च समूहे ठण् भवति णकारः आरैजर्थः ——

४४१। इकुठः। २। ३। ३२। प्रत्ययावयवस्य ठकारस्य इगादेशो भवति।

४४२। सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिकाडूलिशिलालिशिखण्डिसूकरसद्मसुपर्वणोऽपदस्य। २। ३। ६९। सब्रह्मचारिप्रभृतीनां नकारान्तानां चापदसंज्ञानां तद्धिते परेऽन्त्यादेर्लुग्भवति। कावचिकम्, हास्तिकम् अचित्तात्—अपूपानां समूहः आपूपिकम्, शाष्कुलिकम्, कैदारिकम्।

४४३। धेनोरनञः। २। ४। १३३। धेनुशब्दात् समूहे ठण् भवति न चेत् स धेनुशब्दो नञः परो भवति।

---

* पत्युत्तरपदात् यमादिभ्यश्च प्राग्जितीये स्वेऽर्थे ञ्यो भवति।

४४४ । दोसिसुसुगशश्वदकस्मात्तः कः । २ । ३ । ३३ । दोस् शब्दादिसुस् इत्येवमन्तात् उगन्तात् शश्वदकस्माच्छब्दवर्जिताच्च तकारान्तात् परस्य प्रत्ययठकारस्य ककारादेशो भवति । शेषं पूर्ववत् धैनुकम्, अश्मनो विकार इति विग्रहे ङस् इति वर्तते—

४४५ । विकारे । २ । ४ । १४६ । षष्ठ्यन्तात् विकारे यथाविहितं प्रत्ययो भवतीत्यण् । द्रव्यस्यावस्थान्तरं विकारः ।

४४६ । विकारापत्येऽश्महितनाम्नो वा । २ । ३ । ७१ । अश्मन् हितनामन् इत्येतयोरपदयोर्यथासंख्यं विकारेऽपत्ये चार्थे तद्धितेऽन्त्याजादेर्लुग्वा भवति ।

४४७ । अणि । २ । ३ । ६२ । अन्नन्तस्याणि तद्धितेऽन्त्याजादेर्लुग्न भवति इति नित्यं प्रतिषेधे प्राप्ते तद्बाधयानेन पक्षे प्रतिषेधः आश्मः आश्मनो वा, एवं भस्मनो विकारः भास्मनः । व्याकरणस्य बोद्धा अध्येता वेति विग्रहे ङस इति वर्तते ।

४४८ । बोद्धध्येत्रोः । २ । ४ । १७३ । षष्ठ्यन्तात् बोद्धरि अध्येतरि च यथाविहितं प्रत्ययो भवति, इत्यण्—

४४९ । पदेय्वऽऐच् । २ । ३ । ८७ । ञ्णिति तद्धिते आ-ऐच् प्राप्तेरिवर्णयोर्णस्य च स्थाने यौ यकारवकारौ तयोः पदे परतः ऐजागमो भवति यजादेशात् प्रागेवारैचां प्राप्तिः शेषं समानम् । वैयाकरणः एवं छान्दसः, नैमित्तः, मौहूर्तः, ऋजुनावस्य पुंसो निवास इति विग्रहे ङस् इति वर्तते ।

४५० । निवासादूरभवावििति देशे नाम्नि । २ । ४ । १९२ । षष्ठ्यन्तात् निवासादूरभव इत्येतयोरर्थयोर्यथास्वं विहितं प्रत्ययो भवति देशे नाम्नि प्रत्ययान्तं चेत् देशस्य नामधेयं

भवति इति करणे विवक्षार्थः इत्यण् । निवसन्त्यस्मिन्निति निवासः शेषं समानम् । आर्जुनावम् । उदुम्बरस्य निवासः औदुम्बरम्, शक्लायाः निवासः शाक्लम् । अदूरे भवः अदूरभवः वाराणस्या अदूरभवा वाराणसी नगरी टिड्ढाणञित्यादिना ङी । विदिशाया अदूरभवम् वैदिशम् नगरम् । उदुम्बरा अस्मिन् देशे सन्तीति विग्रहे—

४५१ । सोऽस्यास्ति । २ । ४ । १९३ । स इति प्रथमान्तात् अत्रेति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति यः प्रथमान्तः स चेदस्तीति भवति देशेनाम्नि । शेषं पूर्ववत् । औदुम्बरो देशः । एवं वाल्वजः । पार्वतः । कुशाम्बेन निर्वृत्तेति विग्रहे—

४५२ । तेन निर्वृत्तञ्च । २ । ४ । १९४ । तेनेति तृतीयान्तात् निर्वृत्तमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति इत्यण् देशे नाम्नि शेषं पूर्ववत् । टिड्ढाणञित्यादिना ङी कौशाम्बी नगरी। एवं ककन्देन निर्वृत्ता काकन्दी, सगरैर्निर्वृत्तः सागरः । अर्हन् देवतास्येति विग्रहे सास्येति वर्तते ।

४५३ । देवता । २ । ४ । २०६ । सेति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमान्तं देवता चेत्सा भवति इत्यण् शेषं पूर्ववत् आर्हतः, एवं जैनः, ऐन्द्रं हविः । अग्निश्च विष्णुश्च देवतास्येति विगृह्य द्वन्द्वे आत्वे च कृते देवतेत्यण्—

४५४ । देवतादादौ । २ । ३ । ११० । देवतार्थानां प्रकृतिभागानामादावादौ विषये ञ्णिति तद्धिते परत आदेः पूर्वपदस्योत्तरपदस्य च अश्वादेरारैच् आदेशा भवन्ति । प्रक्रियते विधीयते प्रत्ययोऽनः प्रकृतिः आग्नावैष्णवम् एवं आग्निमारुतम्, आग्निवारुणम् नात्यविष्णिन्द्र इत्यात्वेत्वयोर्निषेधः । अग्नीन्द्रौ देव-

तास्येति विगृह्याण्—

४५५ । नेन्द्रवरुणस्यात् । २ । ३ । १११ । अवर्णान्तात् पूर्वपदात् परस्य इन्द्रशब्दस्य वरुणशब्दस्य चोत्तरपदस्याद्यचादेरैच् न भवति । अग्नेन्द्रोपादानात् पूर्वमेडभावादैचः प्राप्तिः आग्नेन्द्रम्, एवमैन्द्रावरुणम् । त्रिषु लिङ्गेष्वपि योज्यम् । पैंगाक्षिपुत्रो देवतास्येति विग्रहे—

४५६ । पैङ्गाक्षिपुत्रादिशुक्राच्छघम् । २ । ४ । २०७ । पैंगाक्षिपुत्र इत्येवमादिभ्यः शुक्रशब्दाच्च यथासंख्यं छघौ भवतः । छस्य ईय्, घस्य इय्, शेषं पूर्ववत् पैंगाक्षिपुत्रीयम्, शुक्रियम् हविः । कुसुम्भेन रक्तमिति विग्रहे—

४५७ । टो रागाद्रक्ते । २ । ४ । २२० । रज्यते येन स रागः कुसुम्भादिः शुक्लस्य वर्णान्तरापादनमिह रंज्यर्थः, ट इति तृतीयान्तात् रागविशेषवाचिनः रक्तेऽर्थे यथाविहितं प्रत्ययो भवतीत्यण् । शेषं पूर्ववत्, कौसुम्भः पटः, कौसुम्भी शाटी, कौसुम्भं वस्त्रम्, एवं काषायम्, हारिद्रम्, लाक्षया रक्तमिति विग्रहे—

४५८ । लाक्षारोचनाट्ठण् । २ । ४ । २२१ । लाक्षारोचनाभ्यां रक्तेऽर्थे ठण् भवति । ठस्येक् शेषं पूर्ववत् । लाक्षिकः, एवं रौचनिकं वस्त्रम्, त्रिलिङ्गेषु योज्यम् । शकलेन रक्तमिति विग्रहे—

४५९ । शकलकर्दमाद्वा । २ । ४ । २२२ । शकलकर्दमाभ्यां टान्ताभ्यां रागवाचिभ्यां रक्तेऽर्थे ठण् भवति । पक्षेऽण् शेषं पूर्ववत् शाकलिकम्, शाकलम्, एवं कार्दमिकम्, कार्दमम्, चक्षुषा गृह्यते इति विग्रहे—

४६० । क्वचित् । २ । ४ । २३९ । अपत्यादिभ्योऽन्यत्राप्यर्थे क्वचित् यथाविहितं प्रत्ययो भवति । इत्यण्, शेषं पूर्ववत् चाक्षुषम् रूपम्, श्रावणः शब्दः, दार्शनम्, स्पार्शनञ्च द्रव्यम्, रासनो रसः । समानग्रामे कृतो भवो वेति विग्रहे—

४६१ । समानादिलोकोत्तरपदाध्यात्मादिभ्यष्ठण् । ३ । १ । ६४ । समानशब्दाद्यवयवेभ्यो लोकोत्तरपदेभ्योऽध्यात्मादिभ्यश्च यथा योगं कृताद्यर्थे ठण् भवति । शेषं पूर्ववत् । सामानग्रामिकः सामानदेशिकः —

४६२ । अनुशतिकादीनाम् । २ । ३ । १०८ । अनुशतिक इत्येवमादीनां प्रकृतिभागानां ञ्णिति तद्धिते पूर्वपदस्योत्तरपदस्य चाक्ष्वादेरैचो भवन्तीत्युभयपदस्य आरैच् ऐहलौकिकः पारलौकिकः, सार्वलौकिकः ॥ आत्मनीति विगृह्य सुवर्थेऽव्ययीभावे अन इत्यकारः समासान्तः । नोपदस्येत्यत्याजादिलुक् अध्यात्मभवमाध्यात्मिकम्, एवमाधिदैविकम्, आधिभौतिकम्, सामानिकम्, ऐहिकम्, आमुत्रिकम् । स्रुघ्ने कृतः लब्धः क्रीतः संभूत इति वेति विग्रहे वाहादित्यादिपादे प्राग्जितादणित्यादयः स्वविशेषेण विशिष्टाः नद्यादिराष्ट्रदूरोत्तरादृण्वेत्यादन्नित्यादयश्चास्मिन् पादे येऽधिकृतास्तेऽनुवर्तन्ते ।

४६३ । ङेः कृतलब्धक्रीतसंभूते । ३ । १ । ८४ । स्वभावनिष्पत्त्यपेक्षितपरव्यापारः कर्मभूतो भावः कृत इत्युच्यते, लब्धः प्राप्तः, मूल्येन प्राप्तः क्रीतः, संभूतः समावलृप्तिः संभावना आधेयस्याधारप्रमाणानतिरिक्तप्रमाणता या तत्क्रियाकर्ता संभूतः । ङेरिति सप्तम्यन्तादेतेष्वर्थेषु यथायोगमणाद्यो ठणादयश्च प्रत्यया भवन्ति यथायोगमिति यः प्रत्ययो यतः प्रकृतेः येन विशेषेण प्रकृति

गतेनार्थगतेन वा यथा नित्यो विकल्पितो बाधितः स तथा सभवे भवतीत्यर्थः । शेष पूर्ववत् । स्रौघ्नः, एव माथुरः प्राग्जितादण् इत्यण् । नादेयः, राष्ट्रियः, नद्यादित्यादिना ढण्घौ टस्य ण्य घस्य इय्, स्रुघ्ने जातः इति विग्रहे—

४६४ । जाते । ३ । १ । ८८ । सप्तम्यन्तात् जातेऽर्थे यथा विहितमणादयो ढणादयश्च प्रत्यया भवन्ति । जन्मनि कर्तृभूतोऽनपक्षित परव्यापारो जात इत्युच्यते शेष पूर्ववत् । स्रौघ्नः, एव माथुर , नादेय॰, राष्ट्रिय । स्रुघ्ने भव इति विग्रहे—

४६५ । भवे । ३ । १ । ११२ । सप्तम्यन्तात् जातेऽर्थे यथाविहित प्रत्ययो भवति । भवतिस्सत्ता विद्यमानता च न जन्यर्थे कालसामान्ये कर्तयप्रत्यये इति भवतीति अस्य विशेष्यलिङ्गता शेष पूर्ववत् स्रौघ्न॰, नादेय । देशे भव इति विग्रहे—

४६६ । दिगाद्यङ्गाद्यः । ३ । १ । ११३ । दिगादिभ्य शरीरावयववचनाच्च सप्तम्यन्तात् भवेऽर्थे य प्रत्ययो भवति । दिश्य, ण्रिति लुक् वर्ग्य , मुख्य॰, जघन्य , दन्त्य॰, कण्ठ्य , ओष्ठ्य॰, पाद्य , अन्तरगारे भव इति विग्रहे—

४६७ । अन्तः पूर्वात् । ३ । १ । १२७ । अन्त शब्द पूर्वात् अव्ययीभावात् तत्र भवेऽर्थे ठण् भवति । अगारस्यान्तरन्त रगारम् । पारे मध्येऽन्त षष्ठ्या इति अव्ययीभाव शेष पूर्ववत् । आन्तरगारिक , आन्तर्गेहिक॰, आन्त.पुरिक , उपगोरिदमिति विग्रहे—

४६८ । ङसःस्वे । ३ । १ । १३७ । ङस इति षष्ठ्यन्तात् स्वे इति द्वितीये सम्बन्धिनि यथाविहितमणादयो ढणादयश्च प्रत्यया भवन्ति । शेष पूर्ववत् औपगवम्, कापटवम्, स्रौघ्नम्,

माथुरम्, गाङ्गम्, नादेयम्, राष्ट्रियम्,। स्त्रुघ्नादागत इति विग्रहे—

४६९ । ङसेरागते । ३ । १ । १५८ । ङसेरिति पञ्चम्यन्तात् आगतेऽर्थे यथाविहितमणादयो ढणादयश्च प्रत्यया भवन्ति। शेषं पूर्ववत्। स्रौघ्नः, नादेयः, राष्ट्रियः। शुल्कशालाया आगतमिति विग्रहे——

४७० । आयस्थानात् । ३ । १ । १६२ । स्वामिग्राह्यो भाग आयः तस्योत्पत्तिस्थानवाचिनः पञ्चम्यन्तात् आगतेऽर्थे टण् भवति। शेषं पूर्ववत्। शौल्कशालिकम्, आपणिकम्, आकरिकम्, गौल्मिकम्। भद्रबाहुणा प्रोक्तानीति विग्रहे——

४७१ । टः प्रोक्ते । ३ । १ । १६९ । प्रकर्षेण व्याख्यातमध्यापितं वा प्रोक्तम्, तस्मिन् ट इति तृतीयान्तात् यथा विहितं प्रत्ययो भवति शेषं पूर्ववत्। भाद्रबाहवाणि उत्तराध्ययनानि, पाणिनिना प्रोक्तमिति विग्रहे——

४७२ । यस्याच्स्वादिरादैच् । १ । १ । १९ । यस्य शब्दस्याचां मध्ये आदिरच् आकार ऐच् वा भवति स दुसंज्ञो भवति।

४७३ । दोश्छः । ३ । १ । २६ । दुसंज्ञकात् प्राग्जितीये कृतार्थे छो भवति। छस्य ईय् पाणिनीयम् एवं शाकटायनीयम् पाणिनीयस्य बोद्धा अध्येता वेति विग्रहे बोद्ध्रध्येत्रोरित्यण्——

४७४ । प्रोक्तात् । २ । ४ । १८३ । प्रोक्तप्रत्ययान्तात् विहितस्य बोद्ध्रध्येतृप्रत्ययस्य लुग्भवति। पाणिनीयश्छात्रः। वररुचिना कृतानीति विग्रहे——

४७५ । ग्रन्थे । ३ । १ । १८६ । टान्तात् कृतेऽर्थे ग्रन्थे यथाविहित प्रत्ययो भवति। शेषं पूर्ववत्

छायापाली रूपसिद्धिः । सुघ्नो निवासोऽस्येति विग्रहे—

४७६ । सोर्निवासादस्य । ३ । १ । १९७ । सोरिति प्रथमान्तात् निवासवाचिनः अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति शेषं पूर्ववत् । स्रौघ्न , नादेयः, राष्ट्रियः । अक्षैर्जितः जयम् दीव्यन् वेति विगृह्य—

४७७ । टोजितजयदीव्यत्खनत्सु । ३ । २ । २ । ट इति तृतीयान्तात् जिते जयति दीव्यति खनतिचार्थे ठण् भवति शेष पूर्ववत् । आक्षिकः, शालाकिकः, अभ्र्या खनन आभ्रिकः एवं कौद्दालिकः, खानित्रिक , ट इति करणे तृतीया, नान्यत्राभिधानात् । दध्ना संस्कृतमिति विग्रहे—

४७८ । संस्कृते । ३ । २ । ३ । तृतीयान्तात् संस्कृते ठण् भवति । सत उत्कर्षाधानं संस्कारः शेषं पूर्ववत् । दाधिकम् , एवं शाङ्गवेरिकम्, मारीचिकम्, औपाध्यायिकः शिष्यः, वैविकः, उडुपेन तरन्निति विग्रहे—

४७९ । तरति । ३ । २ । ५ । तृतीयान्तात् तरति ठण् भवति शेषं पूर्ववत् । औडुपिकः एवं काण्डप्लविकः । गोपुच्छिकः । हस्तिना गच्छन्निति विग्रहे—

४८० । चरति । ३ । २ । ७ । चरति गच्छति भक्षयति चार्थे ठण् भवति । हास्तिक , शाकटिकः, दध्ना भक्षयन् दाधिक , शाङ्गवेरिकः ।

४८१ । शाब्दिकदार्दुरिकलालाटिककौक्कुटिकाः । ३ । २ । ४७ । शाब्दिकादयः शब्दाः यथास्वं प्रसिद्धेऽर्थविशेषे ठणन्ता निपात्यन्ते । शब्द कुर्वन अविनष्टं शब्दमुच्चरयन शाब्दिको

वैयाकरणः। निपातनं हि रूढ्यर्थम्, दर्दुरं वादित्रं कुर्वन् इति दार्दुरिकः। ललाटं पश्यन् लालाटिकः सेवकः। कुक्कुटं पश्यन् कौक्कुटिकः। कुक्कुटिवाल्पेन देशेन गच्छन् पुरोयुगमात्रार्पित दृष्टिः संयतो भिक्षुरुच्यते—

४८२। दैष्टिकास्तिकनास्तिकाः। ३। २। ६१। दैष्टिकादयः शब्दा, तदिति प्रथमान्तादस्येति षष्ठ्यर्थे ठणन्ताः निपात्यन्ते। दिष्टा प्रमाणानुपातिरस्य दिष्टं दैवं प्रमाणमिति वा मतिरस्येति दैष्टिकः। अस्ति परलोकः पुण्यपापमिति मतिरस्येति आस्तिकः, नास्ति परलोकः पुण्यपापमिति मतिरस्येति नास्तिकः। अस्ति नास्तीति शब्दौ निपातौ अपूपभक्षणं शीलमस्येति विग्रहे—

४८३। शीलम्। ३। २। ६२। तदिति प्रथमान्तादस्येति षष्ठ्यर्थे ठण् भवति, यत्तत् प्रथमान्तं शीलं चेत्तद्, भवति। शीलं प्राणिनां स्वभावः, फलनिरपेक्षा प्रवृत्तिः। शेषं पूर्ववत्, आपूपिकः, एवं शाष्कुलिकः, मौदकिकः, ताम्बूलिकः। भक्षणार्थः शीलार्थश्च वृत्तावन्तर्भूतः। छत्रं शीलमस्येति विग्रहे—

४८४। छत्रादेरञ्। ३। २। ६३। छत्रादिभ्यः तदस्य शीलमित्यस्मिन् विषये अञ् भवति। शेषं पूर्ववत् छात्रः छत्रवत् गुरुछिद्रावरणादि प्रवृत्तः, शिष्य उच्यते एवं शैक्षः, भैक्षः। शुल्कशालायां नियुक्त इति विग्रहे—

४८५। तत्र नियुक्ते। ३। २। ७२। तत्रेति सप्तम्यन्तात् नियुक्तेऽर्थे ठण् भवति। नियुक्तोऽधिकृतो व्यापारितः शेषं समानम्—शौल्कशालिकः आपणिकः, दौवारिकः पदेष्वष्टैच् इत्यधिकृत्य—

४८६। द्वारादेः। ३। ३। ८८। द्वारइत्येवमादीनां यो

यकारो वकारश्च तत्प्राप्तेरातोरप्राप्तिमतोऽश्वादस्समीपितस्य ञ्णिति तद्धिते ऐजागमो भवति । सप्तत्याक्रीतमिति विग्रहे—

४८७ । मूल्यैःक्रीते । ३ । २ । १४६ । मूल्यवाचिन तृतीया तात् क्रीतर्थे यथाविहित प्रत्ययो भवतीति ठण् । शप समानम् । माप्ततिक्म्, आशीतिकम्, नैष्किकम, पाणिकम्, रथ हतीति विग्रह य इति वर्तते—

४८८ । वहति रथप्रासगात् । ३ । २ । १८२ । तदिति द्वितीयान्तात् रथान् प्रासगाच वहत्यर्थे यो भवति । शप समानम् । यस्मात् स्कन्धे प्रासज्यते इति प्रासङ्गोयुग तद्वहन् प्रासग्य । धुर वहन्निति विग्रह—

४८९ । धुरो यढण् । ३ । २ । १८३ । धुर् शब्दाद्वित्ती यान्तात् वहत्यर्थ यढणो भवत धुर्य, एय् धौरय, सामनि साधुरिति विग्रह—

४९० । तत्रसाधौ । ३ । २ । १९६ । तत्रेति सप्तम्यन्तात् साधार्थे यो भवति । नोऽपत्यपेति लोप प्राप्ते—

४९१ । येऽनोऽन्त्ये । २ । ३ । ६१ । ञ्यण् वर्जित य प्रत्यय अनोऽन्त्याजादर्लुम भवति । सामन्य, वेमन्य, कर्मण्य, सभ्य, साधुर्याग्य प्रवीण उपकारको वा य सुख करोति स उपकारक । वत्सेभ्यो हितमिति विग्रह—

४९२ । तस्मै हितेऽराजाचार्य ब्राह्मणवृष्ण. । ३ । २ । २१३ । चतुर्थ्यन्तात् हित च्छो भवति नराचाद हितमुपकारकम इति छ छस्य इय् वत्सीय, पुत्रीय ।

४९३ । युगाद्योर्यः । ३ । २ । २१० । युगादिभ्य च-

र्णान्तेभ्यश्च य प्रत्ययो भवति । छायावादः युग्यः —

४९४ । रथखलतिलयवमाषवृषब्रह्मप्राण्यङ्गाद्यः । ३ । २ । २१४ । रथादिभ्यः प्राण्यङ्गवाचिभ्यश्च तस्मै हिते यो भवति रथाय हिता रथ्याभूमिः, खल्यमग्निरक्षणम, तिल्यं वायुः । यव्यः तुषारः । माष्यो वातः, वृष्यं क्षीरपानम् । ब्रह्मण्यो देशः । दन्तेभ्यो हितम् दन्त्यम्, कण्ठ्यम्, नाभ्यम्—

४९५ । सुप इवे । ३ । ३ । २ । सुबन्तात् इवार्थे वत् प्रत्ययो भवति इवशब्दः सादृश्यं द्योतयति तच्चेत् सादृश्यं कृत्ये क्रियाविषयं क्रियागतं भवतीत्यर्थः । क्षत्रिय इव क्षत्रियवत् युध्यति, देवमिव देववत् पश्यति गुरुम्, साधुनेव साधुवदाचरितं देवदत्तेन, ब्राह्मणाय इव ब्राह्मणवत् दत्तं देवदत्ताय, पर्वतादिव पर्वतवदवरोहत्या-समात ।

४९६ । तत्र । ३ । ३ । ३ । तत्रेति सप्तम्यन्तादिवार्थे वत् भवति । मथुरायामिव मथुरावत् स्रुघ्ने प्राकाराः, पाटलिपुत्रवत् साकेते परिखाः ।

४९७ । तस्य । ३ । ३ । ४ । तस्येति षष्ठ्यन्तात् इवार्थे वत् भवति देवदत्तस्येव देवदत्तवत् जिनदत्तस्यगावः । गोर्भावः इति विग्रहे—

४९८ । भावेत्वतल् । ३ । ३ । ५ । तस्येति षष्ठ्यन्तात् भावेऽभिधेयेत्वतलौ भवतः । भवतोऽस्मादभिधान प्रत्ययाविति भावः, शब्द प्रवृत्तिनिमित्तम्, लकारः स्त्रीलिङ्गार्थः, गोत्वम्, गोता, अत्र सामान्यंभावः, शुक्लत्वम्, शुक्लता, पटस्य अत्र गुणसामान्यम्, राजपुरुषत्वम्, राजपुरुषता, पाचकत्वम, पाचकता, औपगवत्वम्, औपगवता

अत्र सम्बन्धः डित्थत्वम्, डित्थता, अत्र शब्दरूपम् संज्ञासंज्ञिसम्बन्धो बालकुमाराद्यवस्थानुगतं वा वस्तुरूपत्वात् त्वान्तं नपुंसकलिङ्गम्, न्तं स्त्री । अधिपतेर्भावः कृत्यं वेति विग्रहे—

४९९ । पतिराजान्तगुणाङ्गराजादिभ्यः कृत्ये च । ३ । ३ । ० । षष्ठ्यन्तेभ्यः कृत्ये कर्तव्ये कर्मणि क्रियायाञ्च भावे च ष्यण् वति प्रोक्तादिति त्वतलौ भवतः । टकारो ङ्यर्थः, शेषं समानम् । ाधिपत्यम्, अधिपतित्वम्, अधिपतिता, अधिको राजा अधिराज-स्य भावः कृत्यं वा आधिराज्यं, आधिराजत्वम्, अधिराजता, ुणः अंगं प्रवृत्तिनिमित्तं येषां ते गुणाङ्गाः, गुणद्वारेण गुणिनि र्तमानास्तेभ्यः मौढ्यम्, मूढत्वम्, मूढता राजादिभ्यः नोऽपदस्ये-यन्त्यादादि लोपः, राज्यम्, राज्यता राजत्वम्, काव्यम्, कवित्वम् कविता । ऊरुः प्रमाणमस्येति विग्रहे—

५०० । तदस्य प्रमाणान्मात्रट् । ३ । ३ । ६० । तदिति प्रथमान्तात् प्रमाणवाचिनः शब्दादस्येति षष्ठ्यर्थे मात्रट् भवति टकारो ङ्यर्थः आयाममानं प्रमाणं तत् द्विविधम्—ऊर्ध्वमानं शय्या-मानञ्चेति तत्रोर्ध्वमानात् ऊरुमात्रमुदकम्, ऊरुमात्री खाता, शय्या-माने रज्जुमात्री भूमिः । हस्ती प्रमाणमस्येति विग्रहे—

५०१ । हस्तिपुरुषाद्वाण् । ३ । ३ । ६१ । तदिति प्रथ-मान्तात् प्रमाणवाचिनो हस्तिशब्दात् पुरुषशब्दाच्च अस्येति षष्ठ्यर्थे अण् प्रत्ययो वा भवति पक्षे यथाप्राप्तम् । नोऽपदस्येति लोपस्य अनपत्ये इति प्रतिषेधः । हास्तिनम्; हस्तिमात्रमुदकम्, पौरु-षम्, पुरुषमात्रमुदकम्; ऊरुः प्रमाणमस्येति विग्रहे—

५०२ । वोर्ध्वे दघ्नज्द्वयसट् । ३ । ३ । ६२ । ऊर्ध्वं यत्प्र माण तद्वाचिन शब्दरूपात् प्रथमान्तादस्येति षष्ठ्यर्थे दघ्नट्द्वय-सटौ वा भवत । पक्षे मात्रट् ऊरुदघ्नम्, ऊरुद्वयसम्, ऊरुमात्र सुदघ्नम् । हस्तिदघ्नम्, हस्तिद्वयसम् । पुरुषदघ्नम्, पुरुषद्वयसम्, इद मानमस्यति विग्रह——

५०३ । घत्विदकिमः । ३ । ३ । ६८ । तदिति प्रथमा न्तात् मानवृत्तेरिदशब्दात् किंशब्दाचास्येति षष्ठ्यर्थे घतुर्भवति । उकार उगित्कार्यार्थे । मान चतुर्विधम्—वितस्त्यादि प्रमाणम्, प्रस्थादि परिमाणम्, कर्षादि मानम्, एकत्वादि सख्यामानञ्चेति घस्य इय् ।

५०४ । किमिदमः कीश् । २ । २ । १०८ । किमिदमो घेत्वादिषु यथासख्य कीशावृशौ भवत इति । इदम ईश्, किम कि, एरिति लुक् उगिदचोऽनधादरिति नम् । सावतोऽवेति दीर्घ सोर्हल्ड्याडिति लुक्, पदस्यति तकारस्य लोप इयान् पट, इयत धान्यम्, इयत् सुवर्णम्, इयन्तो गुणिन, एव कियान्, कियत्——

५०५ । एतदो वो घः । ३ । ३ । ६९ । एतद परस्य घतोर्वित्तस्य वकारो भवति ।

५०६ । आ पदृग्दृक्षे । २ । २ । १०७ । घतुप्रत्यये दृगादिषु चोत्तरपदेषु पूर्वस्याकारो भवति, इति दकारस्याकार, रूप सिद्ध ॥ एतन्मानमस्यति एतावान् दण्ड ।

५०७ । यत्तदः । ३ । ३ । ७० । यद् तदित्येताभ्यां परस्य घतोर्वकारस्य वकारो भवति रूप समानम् । यत्परिमाणमस्येति यावान्, तत्परिमाणमस्येति तावान् । अत एवादशवचनात् यत्तदे

तद्र्यो यतुर्भवति । चतुरोऽवयवा अस्येति विग्रहे—

५०८ । अवयवात्तयट् । ३ । ३ । ७२ । अवयवे वर्तमाना-त्संख्यावाचिनः शब्दात्तदिति प्रथमान्तादस्येति षष्ठ्यर्थे अवयविनि तयट् भवति । टकारो ङ्यर्थः. "सिद्धस्यधातो" रिति पदत्वे "रःपदान्ते विसर्जनीयः" इति विसर्जनीयः तस्य ह्रस्वात्सुपरतीति सिः तस्य शास्त्रसित्यादिना षत्व टिड्ढणिति च ङी । चतुष्टयी रज्जुः एवं पञ्चतयो यम, दशतयो धर्म ॥ एकादशानां पूरण इति विग्रहे—

५०९ । संख्यापूरणे डट् । ३ । ३ । ७६ । संख्याशब्दात् या येन पूर्यते तस्मिन् संख्यापूरणेऽभिधेये षष्ठ्यन्तात् डट् प्रत्ययो भवति । शेषं समानम् । एकादशः, एकादशसंख्यापूरण इत्यर्थः । एव द्वादश., त्रयोदशः, चतुर्दश , एकादशी तिथिः । षण्णां पूरण इति विग्रहे-

५१० षट्कतिकतिपयात् थट् । ३ । ३ । ७९ । षडा-देभ्यः संख्यापूरणेऽर्थे थट् भवति । थकारटकारौ पुंवद्भावङी प्रत्ययार्थौ । षष्ठी चानादरे इत्यादि निर्देशात् बलादिलक्षणपदसंज्ञा भावात् जश्त्वं न भवति । षष्ठः, षष्ठी । ष्टौ ष्ट इति ष्टुत्वम्, कतीनां पूरणः कतिथः कतिथी, कतिपयानां पूरण कतिपयथः । पिति-तद्धिते इति पुंवद्भाव कतिपयथी ।

५११ । चतुरः । ३ । ३ । ८० । चतुरित्येतस्मात् संख्या-पूरणे थट् भवति । चतुर्णां पूरणः चतुर्थ , चतसृणां पूरणी चतुर्थी पुंवद्भावः ।

५१२ । यछौ चः श्लुक्च । ३ । ३ । ८१ । चतुरित्ये-तस्मात् छयौ प्रत्ययौ भवत , चशब्दस्य च श्लुक् । चतुर्णां पूरणः तुर्यः, तुरीयः, तुर्या, तुरीया ।

५१३ । नो मट् । ३ । ३ । ८५ । नान्तादनादेः संख्या शब्दात् संख्यापूरणे मट् भवति । डटोऽपवादः पञ्चानां पूरणः पञ्चमः, पञ्चमी, सप्तमः, अष्टमः, नवमः, दशमः । अनादेरिति किम् ? एकादशः ।

५१४ । द्वित्रिस्तीयद्रेश्च ऋश् । ३ । ३ । ८६ । द्वित्रिभ्यां संख्याशब्दाभ्यां पूरणे तीयद् प्रत्ययो भवति, त्रिशब्दस्य च यद्रि इति रूपं तस्य प्रत्ययसंनियोगे ऋश् इत्ययमादेशो भवति । शकारः सर्वादेशार्थः द्वयोः पूरणः द्वितीयः द्वितीया, तृतीयः, तृतीया, तकारः डदिति प्रत्याहारार्थः । तारका अस्य संजाता इति विग्रहे—

५१५ । संजातं तारकादिभ्य इतः । ३ । ३ । ११४ । तदिति प्रथमान्तेभ्यः संजातोपाधिकेभ्यः तारकादिभ्यः अस्येति षष्ठ्यर्थे इत प्रत्ययो भवति शेषं समानम् । तारकाः संजाता सुष्ठु भूता अस्येति तारकितं नभः । पुष्पितः, मुकुलितः, कुड्मलितः, कुसुमितः पल्लवितः । गावोऽस्य सन्तीति विग्रहे—

५१६ । अस्त्यस्मिन् वेति मतुः । ३ । ३ । ११६ । तदिति प्रथमान्तादस्तीत्येवमुपाधिकात् अस्येति षष्ठ्यर्थे अस्मिन्निति सप्तम्यर्थे वा मतुप्रत्ययो भवति । उकारः उगित्कार्यार्थः शेषं समानम्, गोमान्, श्रीमान् ।

५१७ । मान्तोपान्त्यञयो मतोर्मो वः । १ । २ । ९६ । मकारान्तात् मकारोपान्तादवर्णान्तादवर्णोपान्ताञयन्ताश्च परस्य मतोर्मकारस्य वकारो भवति । वृक्षा अस्मिन् सन्तीति वृक्षवान्, किंवान्, दाडिमीवान्, शालावान्, अहर्वान्, विद्युत्वान्, इति करणो विवक्षार्थः । श्लोकः —

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः ॥ १ ॥

५१८ । वागालाटौ । ३ । ३ । १२३ । वागित्येतस्मात् प्रथमान्तादस्त्युपाधिकात् अस्यास्मिन् वेत्येतयोरर्थयोः आलाटौ भवतः क्षेपे गम्यमाने । वागस्यास्त्यस्मिन् वेति वाचाटः, वाचालः । यो बहु निःसारं भाषते स एवं क्षिप्यते ।

५१९ । ग्मिन् । ३ । ३ । १२४ । अस्यास्मिन् वेत्यर्थयोः वाचो ग्मिन् प्रत्ययो भवति मतुश्च । " चोः कुः " इति कुत्वं, ' झलो जश् ' इति जश्त्वम् । वाग्मी, वाग्मान् । गकारः " प्रत्यये " इति अनुनासिकनिवृत्त्यर्थः ।

५२० । दन्त उन्नतः । ३ । ३ । १३६ । दन्तशब्दादुन्नतोपाधिकात् मत्वर्थे डुरो भवति । दन्ता उन्नता अस्य सन्तीति दन्तुरः । अन्त्याजादेर्लुक् , तपोऽस्यास्मिन् वास्तीति विग्रहे—

५२१ । तपःस्रग्मायामेधासो विन् । ३ । ३ ।१५०। तप आदिभ्यः असन्तेभ्यश्च मत्वर्थे विन् भवति । 'स्तंमत्वर्थे' इति पदत्वनिषेधाद्रुत्वाभावः, शेषं समानम् । तपस्वी, स्रग्वी । सिद्धत्यधातोरिति पदत्वे " चोः कुः " इति कुत्वम् । मायावी, मेधावी, यशस्वी, तेजस्वी । मतुः स्रग्वान् , मायावान् , मेधावान् , यशस्वान् । व्रीह्योऽस्यास्मिन् सन्तीति विग्रहे—

५२२ । व्रीह्याद्यतोऽनेकाचः । ३ । ३ । १५३ । व्रीह्यादिभ्यः अकारान्तादनेकाचश्च मत्वर्थे ठेनौ भवतः, मतुश्च । व्रीहिकः, व्रीही, व्रीहिमान् । मायिकः, मायी, मायावान् । दण्डिकः, दण्डी, दण्डवान् । छत्रिकः, छत्री, छत्रवान् । करिकः, करी, करवान् । पटुः प्रकारोऽस्येति विग्रहे—

५२३ । प्रकारे जातीयर् । ३ । ३ । १७९ । तदिति प्रथमान्तादस्येति षष्ठ्यर्थे जातीयर् प्रत्ययो भवति यत् तत्प्रथमान्तं स चेत् प्रकारो भवति । सामान्यस्य भिद्यमानस्य यो विशेषो विशेषान्तराननुवृत्तः स प्रकारः भेदः। रेफो रित् स्वार्थ इति प्रतिषेधार्थः । शेषं समानम् । पटुजातीयः, मृदुजातीयः, तज्जातीयः, यज्जातीयः । नानाभूतप्रकारोऽस्य नानाजातीयः । एवंजातीयः, तथाजातीयः, यथाजातीयः, कथंजातीयः । अतः परं प्रायशः स्वार्थिकाः प्रत्ययाः, अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति वचनात् । तत्रोपाधिः प्रकृतेर्विज्ञायते न प्रत्ययस्य द्योत्यो भवति ।

५२४ । भूतपूर्वे ष्चरट् । ३ । ४ । १ । पूर्वं भूतः भूतपूर्वः तस्मिन्नर्थे वर्तमानात्सुबन्तात् शब्दरूपात् ष्चरट् प्रत्ययो भवति । षकारटकारावितौ । आढ्यो भूतपूर्वः आढ्यचरः, दर्शनीयचरः, आढ्या भूतपूर्वा आढ्यचरी " षिति तद्धिते " इति पुंवद्भावः ।

५२५ । अद्वयादिवैपुल्यात्सर्वादिकिंबहोः ष्तस् । ३ । ४ । १२ । द्वयादिवर्जितेभ्यः सर्वादिभ्यः किंशब्दात् अवै-

पुरुषवाचिनो बहुशब्दाच्च पञ्चम्यन्तात् तस् भवति । पकारः पूर्ववत् । सर्वस्मात् सर्वतः, विश्वतः, यतः । तसौ चादिति इकारस्याकारः । एदे इति लुक् । बहुभ्यः बहुतः। अव्ययत्वात् सुपः स्लुक् बह्वीभ्यः बहुतः । पिति तद्धिते इति पुंवद्भावः ।

५२६ । इतोऽतः कुतः । ३ । ४ । १३ । इतस्, अतस्, कुतस् इत्येते शब्दाः प्तसन्ता निपात्यन्ते । अस्मादिति विगृह्य इतः । इदमः प्तसि इशादेशो निपात्यते । एतस्मादिति विगृह्य अतः एतदः अशादेशः । कस्मात् इति कुतः । किमः कु इत्यादेशः प्तस् च ।

५२७ । भवदायुष्मद्दीर्घायुर्देवानांप्रियैकार्थात् । ३ । ४ । १४ । एतत्समानाधिकरणादद्व्यादिवैपुल्यात् सर्वादि-किंबह्वोः सर्वविभक्त्यन्तात् त्रप्[1] च प्रत्ययो वा भवति, पकारः पूर्ववत् । स भवान् इति तत्रभवान् । तं भवन्तं तत्र भवन्तमित्याद्युदाहार्यम् ।

५२८ क कुत्रात्रेह । ३ । ४ । १६ । कादयः त्रबन्ताः शब्दा निपात्यन्ते । कस्मिन् इति क, कुत्र । किमः कादेशः त्रपश्चाशादेशः । किमः कुश्च । एतस्मिन्निति अत्र । एतदः अशादेशः । अस्मिन्निति इह । इदम इशादेशः त्रपश्च हादेशः ।

५२९ । सप्तम्याः।३।४।१७। सप्तम्यन्तादद्व्यादिवैपुल्या-

---

१ 'त्रप् च' इति सूत्रमत्र वर्तते [illegible]र्पणीयः ।

त सर्वादिकिंबहोः त्रप् प्रत्ययो भवति । सर्वस्मिन् सर्वत्र, तत्र, बहुत्र, बह्वीषु बहुत्र । पुंवद्भावः ।

५३० । किंयत्तत्सर्वैकान्यात्काले दा ३ । ४ । १८ । किं यत् तत् सर्व एक अन्य इत्येतेभ्यः सप्तम्यन्तेभ्यः काले वर्तमानेभ्यः दाप्रत्ययो भवति । कस्मिन् काले कदा । किम. कादेशः । यदा तदा सर्वदा एकदा अन्यदा ।

५३१ । सदैतर्ह्यधुनेदानीं तदानींसद्यः ३ । ४ । १९ । सदादयः शब्दाः काले निपात्यन्ते । सर्वस्मिन् काले सदा, सर्वशब्दात् दाप्रत्ययः सर्वस्य सभावश्च । अस्मिन् काले एतर्हि इदमः र्हिप्रत्ययो भवति एतादेशश्च । इदम्शब्दादेवाधुनेदानीं प्रत्ययौ भवतः अशादेशौ च । अधुना, इदानीम् । तदो दानीं प्रत्यय तदानीम् । समानशब्दात् द्यस् सभावश्च समाने काले सद्यः ।

५३२ । अनद्यतने र्हिः । ३ । ४ । २४ । सप्तम्यन्तादनद्यतने काले वर्तमानाद्यथासम्भवमद्व्यादिवैपुल्यात् सर्वादिकिंबहोः र्हिप्रत्ययो भवति । यस्मिन्ननद्यतने काले यर्हि तर्हि अन्यर्हि कर्हि ।

५३३ । प्रकारे था । ३ । ४ । २५ । यथासंभवं विभक्ति सामान्यस्य भेदो, भेदान्तरानुवृत्तः प्रकारः तस्मिन् वर्तमानाद्द्व्यादिवैपुल्यात् सर्वादिकिंबहोः था प्रत्ययो भवति । सर्वेण प्रकारेण सर्वथा, यथा, तथा ।

५३४ । कथमित्थमुः । ३ । ४ । २६ । कथमित्थ-

मिति प्रकारे थप्रत्ययान्ते निपात्येते। केन प्रकारेण कथम्, अनेन एतेन प्रकारेण इत्थम्। इदम एतदश्च इदादेशः। उकारः प्लस्विति पत्याहारार्थः।

५३५ संख्याया धा। ३।४।२७। सख्यावाचिनः सुबन्तात् प्रकारे वर्तमानात् धाप्रत्ययो भवति। एकेन प्रकारेण एकधा, द्विधा, त्रिधा, चतुर्धा, पञ्चधा, गणधा, भवति।

५३६। तिङश्च प्रकृष्टे तमप्। ३।४।७१॥ तिङ-न्तात् सुबन्ताच्च प्रकृष्टे प्रकर्षवत्यर्थे वर्तमानात् स्वार्थे तमप् प्रत्ययो भवति। पकार इत। सर्व इमे पचन्ति, अयमेषां प्रकृष्टं पचतीति तमप्।

५३७। अव्ययैत्किंतिङोऽसत्त्वे तयोर्डाम्। ३।४। ७४। अव्ययेभ्य एकारान्तात् किंशब्दात् तिङन्ताच्च परयोः तरप्तमपोः डामादेशो भवति न चेत्तौ सत्त्वे द्रव्ये प्रकृष्टे वर्तेते। डकारोन्त्यादेशार्थः। पचतितमां देवदत्तः। डामन्तस्या-व्ययत्वात् सोः स्लुक्। पचतस्तमाम् पचन्तितमाम्। सर्वे इमे शुक्लाः अयमेषां प्रकृष्ट इति शुक्लतमः।

५३८। द्वयोर्विभज्ये च तरप्। ३।४।७२। द्वयोर्मध्ये प्रकृष्टे विभज्ये विकल्प्ये चार्थे वर्तमानात् तिङन्तात् सुबन्ताच्च तरप् भवति। तमपोऽपवादः। द्वाविमौ पचतः अयमनयोः प्रकृष्टं पचति पचतितराम्। अव्ययैदित्यादिना डाम्। पठतितराम्। द्वाविमौ पटू अयमनयोः प्रकृष्टः पटुः पटुतरः। पाचकतरः। बहव इमे पटवः अयमेषां प्रकृष्टः पटुरिति,

द्वाविमौ पटू अयमनयोः प्रकृष्टः पटुरिति च विगृह्य तमप्-तरपौ भवतः ।

५३९ । गुणाङ्गाद्वेष्ठेयसू । २ । ४ । ७५ । गुणमभिधाय यः शब्दो द्रव्ये वर्तते तस्माद् गुणाङ्गात्परयोः तमप्तरपोर्यथासंख्यं इष्ठ ईयसु इत्येतावादेशौ भवतो वा । अन्त्याजादेरिति लुक् । उकार उगित्कार्यार्थः । पटिष्ठः पटीयान् । लघिष्ठः लघीयान् । प्रशस्यशब्दादपि तरप्तमपौ भवतः तयोरिष्ठेयसू ।

५४० । प्रशस्यस्य श्रः । २ । ३ । ४७ । प्रशस्यशब्दस्य णीष्ठेयसु परतः श्र इत्यादेशो भवति । श्रेष्ठः श्रेयान् ।

५४१ । प्रशस्ते रूपप् । २ । ४ । ७६ । सुबन्तात् तिङन्ताच्च प्रशस्तेऽर्थे रूपप् भवति । पकार इत् । प्रशस्तं पचति पचतिरूपम् । प्रशस्तो वैयाकरणः वैयाकरणरूपः ।

५४२ । ईषदसमाप्तेऽत्यादेः कल्पन्देश्यन्देशीयर् । २ । ४ । ७७ । तिङन्तात् सुबन्ताच्च त्याद्यन्तवर्जितात् ईषदसमाप्तेऽर्थे वर्तमानात् कल्पप्–देश्यप्–देशीयर् प्रत्यया भवन्ति । पकार इत् रेफात् स्वार्थ-इति पर्युदासार्थः । ईषदसमाप्तं पचति पचतिकल्पम्, पचतिदेश्यम्, पचतिदेशीयम् । ईषदसमाप्तः पटुः पटुकल्पः, पटुदेश्यः, पटुदेशीयः ।

५४३ । तिङ्सर्वादेरस्वन्त्यात्पूर्वोऽक् । २ । ४ । ३२ । तिङन्तस्य सर्वादीनाञ्च अदकर्णामध्ये योऽन्त्योऽच् तस्मात् पूर्वोऽक् मत्ययो भवति । कुत्सितमल्पमज्ञातं वा पचति पचतकि पचतकः, पचन्तकि । सर्वकः, सर्वकौ, सर्वके । विश्वकः,

विश्वकौ, विश्वके । अदमित्यस्य असुकः, असकौ । वाऽकोऽ-स्योरिति पक्षे अकारस्य उकारः कः साकोऽपि किमः कः इति कादेशः । यकः । इत्यादि । यो भवतोः कठादिरिति विग्रहे—

५४४ यत्तत्किमन्याद् द्वयोर्निर्धार्ये डतरः ३ । ४ । १०५ । यदादिभ्यः द्वयोरेकस्मिन् निर्धार्ये वर्तमानेभ्यः डतरप्रत्ययो भवति । " समुदायादेकदेशस्य प्रकृत्या यद्धि-कया करणभूतया, निष्कृष्य पृथक्कृत्य धारणं प्रतिपत्तिः बहि-र्निर्धारणं वा निर्धारणम्, " तस्य कर्म निर्धार्यम् डकारोऽ-न्त्याजादिलुगर्थः यतरो भवतोः कठः पटुर्गन्ता दण्डी देवदत्तो वा. ततर आगच्छतु, कतरो भवतोः कठः पटुर्वा, अन्यतरो भवतोरागच्छतु ।

५४५। वैकात् । ३ । ४ । १०६ । एकशब्दात् द्वयो-रेकस्मिन् निर्धार्ये डतरो वा भवति । एकतरो भवतोः कठः पटुर्वा । वावचनमगर्थम् । एककः । यो भवतां कठ इति विग्रहे—

५४६ । बहूनां प्रश्ने डतमश्च । ३ । ४ । १०७ यत्तत्-किमन्येभ्यो बहूनां मध्ये निर्धार्ये वर्तमानेभ्यः प्रश्न विषये च डतमप्रत्ययो भवति डतरश्च वा । प्रश्न इति किम एव विशेषणम्, नान्येषामसंभवात् । यतमो यतरो वा भवतां कठः, ततमः ततरो वा आगच्छतु, कतमः कतरो वा भवतां कठः बहुष्वासीने-षु कश्चित् कञ्चित् पृच्छति कतमो देवदत्तः कतरो देवदत्तः

अन्यतमो अन्यतरो वा भवतां कठः ।

५४७ । एकात् । ३ । ४ १०८ । एकशब्दात् बहूनामेकस्मिन् निर्धार्ये डतमो वा भवति । एकतमो भवतां कठः पटुर्गन्ता वा । वावचनमणर्थम् ।

५४८ । वर्णात् कारः । ३ । ४ । १२६ । वर्णवाचिनः कारप्रत्ययो भवति स्वार्थे । अ एव अकारः ककारः चकारः बहुलमित्येव तेनाभिनिष्ठान इत्यादौ न भवति । एवकार इत्यादौ च भवति । रेफ इति रादिफ इति सिद्धम् । रकार इत्यपीष्यते ।

५४९ । भेषजादिहोत्रादेवेभ्यष्ट्यणीयच्छतल् । ३ । ४ । १२७ । भेषजादिभ्यः होत्रा देव इत्येताभ्यां च स्वार्थे यथासंख्यं ट्यणीयच्छतल् इत्येते प्रत्यया वा भवन्ति । टणला इतः । भेषजमेव भैषज्यम्, अनन्तमेव आनन्त्यम्, इतिहेत्येव ऐतिह्यम्, इतिहेति निपातसमुदाय उपदेशपारंपर्ये वर्तते। चत्वार एव वर्णाः चातुर्वर्ण्यम्, त्रैलोक्यम्, षाड्गुण्यम्, होत्रैव होत्रीयम्, देव एव देवता ।

५५० । प्रज्ञादिभ्योऽण् । ३ । ४ । १३२ । प्रज्ञादिभ्यः स्वार्थे अण् वा भवति । प्रज्ञ एव प्राज्ञः, प्राज्ञी, वणिगेव वाणिजः । इत्यादि सर्वं तद्धितोदधिं समवलोक्य समुन्नेयम् ।

॥ इति दयापालमुनिविरचिते रूपसिद्धिव्याकरणे तद्धितसिद्धिः ॥

# अथ कर्तरि तिङन्ता नीयन्ते ।

ीपालसिद्ध सदनन्तवीर्यं वीरं सुशान्ति विजयाकलंकम् ।
ीस्वर्णसेनं प्रणिपत्य पूतं धात्विष्टकार्यं प्रवदामि किञ्चित् ॥

त्र प्रथमं तिङ्प्रत्ययाःक्रियार्थेभ्यो धातुभ्यः परस्य लकारस्य
ाने योज्यन्ते । के पुनस्तिङ्प्रत्ययाः–तिप्, तस्, झि, सिप्,
स् थ, मिप्, वस्, मस् । त, आताम्, झ, थास्, आथाम्,
ध्वम्, इट्, वहिङ्, महिङ् इति । के च लकाराः–लट्, लिट्,
लुट्, लृट्, लेट्, लङ्, लिङ्, लुङ्, लृङ्, लेङ् इति । धातवः
पुनरर्थवशाद् द्विविधा भवन्ति । सकर्मकाकर्मकाश्चेति । तत्र ये
कर्मापेक्षां क्रियामाहुः कटं करोति, ग्रामं गच्छति इत्यादयः ते
सकर्मकाः । ये च कर्मनिरपेक्षाः क्रियामाहुः आस्ते शेते इत्याद-
यस्तेऽकर्मकाः । ते पुनः सर्वे एकादशविधा भवन्ति, शब्वि-
करणा एधादयः । सुबन्तप्रकृतिकानामेधादिष्वन्तर्भावः शब्वि-
करणकत्वात् । श्लुग्विकरणा अदादयः, श्लुविकरणा जुहो-
त्यादयः, श्यविकरणा दिवादयः, श्नुविकरणाः स्वादयः,
श्नाविकरणाः क्र्यादयः, शविकरणास्तुदादयः, उविकरणास्त-
नादयः, नम्विकरणा रुधादयः, णिजन्तास्चुरादयः, विकल्पि-
तणिजन्ता युजादयश्चेति । ते पुनस्तिङ्प्रत्ययवशात् त्रिविधा
भवन्ति अतङ्वन्तस्तङ्वन्त उभयवन्तश्चेति । कदाचिल्लक्षण-
विशेषादतङ्वन्तस्तङ्वन्तो भवन्ति, तङ्वन्तोऽप्यतङ्वन्तो भ-
वन्ति । तत्र प्रथमं शब्विकरणेष्वेधादिषु अतङ्वतो भूइत्येत-

अन्यतमो अन्यतरो वा भवतां कठः ।

५४७ । एकात् । ३ । ४ १०८ । एकशब्दात् बहूनामेकस्मिन् निर्धार्ये डतमो वा भवति । एकतमो भवतां कठः पटुर्गन्ता वा । वावचनमगर्थम् ।

५४८ । वर्णात् कारः । ३ । ४ । १२६ । वर्णवाचिनः कारप्रत्ययो भवति स्वार्थे । अ एव अकारः ककारः चकारः बहुलमित्येव तेनाभिनिष्ठान इत्यादौ न भवति । एवकार इत्यादौ च भवति । रेफ इति रादिफ इति सिद्धम् । रकार इत्यपीष्यते ।

५४९ । भेषजादिहोत्रादेवेभ्यष्ट्यण्ञ्छतल् । ३ । ४ । १२७ । भेषजादिभ्यः होत्रा देव इत्येताभ्यां च स्वार्थे यथासंख्यं ट्यण्ञ्छतल् इत्येते प्रत्यया वा भवन्ति । टणला इतः । भेषजमेव भैषज्यम्, अनन्तमेव आनन्त्यम्, इतिहेत्येव ऐतिह्यम्, इतिहेति निपातसमुदाय उपदेशपारंपर्ये वर्तते । चत्वार एव वर्णाः चातुर्वर्ण्यम्, त्रैलोक्यम्, षाड्गुण्यम्, होत्रैव होत्रीयम्, देव एव देवता ।

५५० । प्रज्ञादिभ्योऽण् । ३ । ४ । १३२ । प्रज्ञादिभ्यः स्वार्थे अण् वा भवति । प्रज्ञ एव प्राज्ञः, प्राज्ञी, वणिगेव वाणिजः । इत्यादि सर्वं तद्धितोदधिं समवलोक्य समुन्नेयम् ।

॥ इति दयापालमुनिविरचिते रूपसिद्धिव्याकरणे तद्धितसिद्धिः ॥

# अथ कर्तरि तिङन्ता नीयन्ते ।

श्रीपालसिद्धं सदनन्तवीर्यं वीरं सुशान्ति विजयाकलंकम् ।
श्रीस्वर्णसेनं प्रणिपत्य पूतं धात्विष्टकार्यं प्रवदामि किञ्चित् ॥

तत्र प्रथमं तिङ्प्रत्ययाःक्रियार्थेभ्यो धातुभ्यः परस्य लकारस्य थाने योज्यन्ते । के पुनस्तिङ्प्रत्ययाः–तिप्, तस्, झि, सिप्, थस् थ, मिप्, वस्, मस् । त, आताम्, झ, थास्, आथाम्, ध्वम्, इल्, वहिङ्, महिङ् इति । के च लकाराः–लट्, लिट्, लुट्, लृट्, लेट्, लङ्, लिङ्, लुङ्, लृङ्, लेट् इति । धातवः पुनरर्थवशाद् द्विविधा भवन्ति । सकर्मकाकर्मकाश्चेति । तत्र ये कर्मापेक्षा क्रियामाहु कटं करोति, ग्रामं गच्छति इत्यादयः ते सकर्मकाः । ये च कर्मनिरपेक्षाः क्रियामाहुः आस्ते शेते इत्याद-यस्तेऽकर्मकाः । ते पुनः सर्वे एकादशविधा भवन्ति, शब्वि-करणा एधादयः । सुबन्तप्रकृतिकानामेधादिष्वन्तर्भावः शब्वि-करणकत्वात् । श्लुग्विकरणा अदादयः, श्लुविकरणा जुहो-त्यादयः, श्यविकरणा दिवादयः, श्नुविकरणाः स्वादयः, श्नाविकरणाः क्र्यादयः, शविकरणास्तुदादयः, उविकरणास्त-नादयः, नम्विकरणा रुधादयः, णिजन्ताश्चुरादयः, विकल्पि-तणिजन्ता युजादयश्चेति । ते पुनस्तिङ्प्रत्ययवशात् त्रिविधा भवन्ति अतङ्वन्तस्तङ्वन्त उभयवन्तश्चेति । कदाचिल्लक्षण-विशेषादतङ्वन्तस्तङ्वन्तो भवन्ति, तङ्वन्तोऽप्यतङ्वन्तो भ-वन्ति । तत्र प्रथम शब्विकरणेष्वेधादिषु अतङ्वतो भूरित्येत-

स्मात् कृत्तोर्तृत्वामिति कर्तरि विहितस्य लकारस्य स्थाने तिबादयो योज्यन्ते । भूसत्तायामिति सत्तायामर्थे भू इति प्रकृतिः पठ्यते । भू इति स्थिते क्रियार्थो धातुरिति धातुसंज्ञायां सत्यां सतीति लट् । टकार एटित इति विशेषणार्थः । अकारो विदो लटो वेति विशेषणार्थः । एकद्विबहुष्विति वर्तते—

५५१ । लोऽन्ययुष्मदस्मासु तिप्तस्झिसिप्थस्थमिब्वस्मस् । १ । ४ । १ । ल इति सामान्येनोल्लुप्तानुबंधानां दशानां लकाराणां ग्रहणम्, अन्ययुष्मदस्मदर्थेषु प्रत्येकमेकद्विबहुषु वर्तमानस्य धातोर्विहितस्य लकारस्य यथाक्रमं तिबादयो नवादेशा भवन्ति । इति अन्यस्मिन्नेकस्मिन्नर्थे तिप्, अन्ययोर्द्वयोस्तस्, अन्येषु बहुषु झि । युष्मद्येकस्मिन्नर्थे सिप्, युष्मदोर्द्वयोस्थस्, युष्मत्सु बहुषु थ । अस्मद्येकस्मिन्नर्थे मिप्, अस्मदोर्द्वयोः वस्, अस्मत्सु बहुषु मस् भवति । तिप्सिप्मिपां पकारोऽप्रयोगी इत्यल्लाविति पर्युदासार्थः ।

५५२ । झोऽन्तः । १ । ४ । ८८ । धातोर्लादेशावयवस्य झकारस्य अन्त इत्यादेशो भवति । तकारेऽकार उच्चारणार्थः। ततः कर्तरि शबिति मध्ये शप् । शकारपकाराविती, शकार एनोऽस्या इति विशेषणार्थः, पकारः पूर्ववत् “अक्ङिल्लुग्वेतौ” इत्यूकारस्यौकारः एचोऽव्ययवायावित्यवादेशः । अन्तादेशे एदे इति अकारस्य लुक् । मिब्वस्मस्सु—

५५३ । आग्न्यतः । ४ । २ । ३४ । मकारादौ वकारादौ लिवर्जितलादेशे परे अकारस्याकारो भवति ततः सुक

ःमिति पदसंज्ञायां सजूरुस्सो तिप्यकसंपुध्वंसो रिरिति
दान्तस्य सकारस्य रिः । तस्य रः पदान्ते विसर्जनीय इति
सर्जनीयः । नीतिः—स भवति, तौ भवतः, ते भवन्ति, त्वं
वसि, युवां भवथः, यूयं भवथ, अहं भवामि, आवां भवा-
ः, वयं भवामः । यत्रैकस्मिन्वाक्ये युष्मच्छब्दः प्रयोक्तुं
क्यते तत्र सिबादयो भवन्ति नान्यत्रेति भवान् भवति, भवन्तौ
वतः, भवन्तो भवन्ति इति । अत्र युष्मच्छब्दपर्यायस्य भव-
च्छब्दस्य प्रयोगे युष्मच्छब्दस्य प्रयोक्तुमशक्यत्वात् सिपूथ-
मुथा न भवन्ति । युष्मच्छब्दप्रवृत्तिं प्रति हि योग्यो युष्मच्छ-
ब्दार्थो विज्ञायते । भवति, भवतः, भवन्ति, भवसि, भवथः,
भवथ, भवामि, भवावः, भवामः इति अत्रान्ययुष्मदस्मदाम-
प्रयोगेऽपि तदर्थ एव लार्थः इत्यादेशार्थः । अर्थविशेषाभिव्यक्त्यर्थं
धातोरुपसर्गेण योगः काम्यते तत्र च धातुरन्तरङ्गत्वात्
पूर्वमुपसर्गेण युज्यते पश्चात् साधनेनेति कर्मव्यतिहाराभिव्य-
क्त्यर्थं विअति इत्येतावुपसर्गौ भूइत्येतस्माद् धातोः पूर्वं
प्रयोक्तव्यौ, पश्चात् सतीति लट्प्रत्ययः तस्य एकद्विबहौ
लोऽन्ययुष्मदस्मासु तातामझथासाथांध्वमिलवहिमहिङिति च
वर्तमाने ---

५५१ । व्यतिहृतेऽगतिहिंसाशब्देऽहृवहश्चापरस्परान्यो-
न्येतरेतरे १ । ४ । ७६ । परस्परसम्बन्धिहरणं व्यतीहारः, इतर-
सम्बन्धिन इतरेणेतरसम्बन्धिनश्चेतरेण ग्रहणं तस्य कर्म व्यतिहृ-
तम् । तस्मिन् गतिहिंसाशब्दवर्जितेऽर्थे वर्तमानस्य हरतेः वहते

अन्यस्य च धातोः कर्तृषु अन्ययुष्मदस्मासु प्रत्येकमेकद्विबहुषु वर्तमानस्य लकारस्य यथासंख्यं त आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् इत्येते आदेशा भवन्ति परस्पर अन्योन्य इतरेतर इत्येतस्मिन्नसति । इति तादयो नवादेशा भवन्ति। लकारो रञ्जो झेलोरिति विशेषणार्थः। ङकारः सुडिति तडिति च प्रत्याहारार्थः तादिषु पूर्ववत् झबोत्वावादेशाः, झकारस्य झोऽन्त इत्यन्तादेशः ।

५५५। ए टितः । १ । ४ । ९२ । धातोर्विहितस्य टितो लकारस्य तङ एकारादेशो भवतीति षष्ठ्या स्थानेऽन्तेलः इति अन्तस्य एकारो भवति ।

५५६ । थासः से । १ । ४ । ९५ । टितो लकारस्य थास. से इत्यादेशो भवतीति थासः सेभावः ।

५५७ । वह्यामो गेश् । १।४।९३ । टितो लकारस्य तङो वहेरिकारस्यामश्च गेश् भवति । इति आतामाथामित्यनयोरामः वहेरिकारस्य च गेश् भवति । गकारो गित इति प्रतिषेधार्थः शकारः सर्वादेशार्थः ।

५५८ । आतोऽपः। ४ । २ । ३६ । धातोर्यः पित्‌विवर्जितः लादेशः तस्य य आकारः तस्य परस्यातः इयादेशो भवतीति आतामाथामोराकारस्येय् भवति ।

५५९ । लुग्व्योर्वल्कौ । २ । ३ । ३५ । प्रत्ययस्यावयवे कार्ये वलि कौ च परे वकारयकारयोर्लुग्भवतीति यकारस्य लुक् । इक्येहरित्येट् झकारस्यान्तादेशाकारे ध्वमि मकारस्य

ले लकारस्य च एकारे कृते एदे इति पूर्वाकारस्य लुक्। वहि-
ह्मोराद्यन्यतः इत्याकारः। नीतिः— व्यतिभवते, व्यतिभवेते,
व्यतिभवन्ते, व्यतिभवसे, व्यतिभवेथे, व्यतिभवध्वे,
व्यतिभवे, व्यतिभवावहे, व्यतिभवामहे। एधि वृद्धौ।
कारोऽप्रयोगी तदर्थः। सतीति लट् तस्य।

५६०। तातांझथासाथांध्वमिल्वहिमहिङ्डिदिच्छीय-
ह्रक्ष्णवपस्कृनिविशः। १। ४। २। ङकारेतः इदितः शीया-
देशात् संक्ष्णुअपस्कृनिविश् इत्येतेभ्यश्च सोपसर्गेभ्यः परस्य लका-
देशात् संस्थअन्ययुष्मदस्मदर्थेषु प्रत्येकमेकद्विबहुषु वर्तमानस्य यथासंख्यं
तादयो नवादेशा भवन्ति। शेषं पूर्ववत्। नीतिः— एधते, एधेते,
एधन्ते। एधसे, एधेथे, एधध्वे, एधे, एधावहे, एधामहे।
डुपचीष् पाके ईकारषकारडुशब्दा इतः। ततः लडादयः। पचति,
पचतः, पचन्ति, पचसि, पचथः, पचथ, पचामि, पचावः,
पचामः। फलेशविवक्षायां लकारस्य—

५६१। ञीदिदपवदानुपसर्गञः। १। ४। ६६। ञितः,
ईदितः अपपूर्वस्य च वदेरनुपसर्गस्य च जानातेर्धातोः परस्य
लस्य फलेशे कर्तरि वर्तमानस्य तडो भवन्तीति तादयः। शेषं
पूर्ववत्। पचते, पचेते, पचन्ते। पचसे, पचेथे, पचध्वे। पचे,
पचावहे, पचामहे। तेभ्य एव धातुभ्यः व्यभेर्भुवोभूते इति
वर्तमाने—

५६२। अनद्यतने लङ्। ४। ३। २०७। आन्याय्यादु-
त्थानादान्याय्यात् संवेशनात् एषोऽद्यतनकालः, अहरुभयतो

अर्द्धरात्रं वा। न विद्यतेऽद्यतनो यस्मिन् तस्मिन्भूतेर्थे वर्तमानाद् धातोर्लङ् प्रत्ययो भवतीति लङ्। इकार एर्ङितो लुगिति विशेषणार्थः। अकारः श्लेलेयगिति विशेषणार्थः। मध्ये शबोत्वावादेशाः।

५६३। लङ्लुङ्लृङ्क्ष्वडुदात्तः। ४। २। १३१। धातोर्लुङ् लङ् लृङ् विषये अडागमो भवति न चेन्माङाऽस्य योगो भवति। टकारः टिदादिरिति विशेषणार्थः। तिबादयः।

५६४। एर्ङितो लुक्। १। ४। १०५। ङितो लका-रस्यातह इकारान्तस्य लुग्भवतीति इकारस्य लुक्। अन्तस्य सकारस्य पदस्येति लुक्।

५६५। तस्थस्थमिपां तान्तन्तामः लेटश्च १। ४। ११४। ङितो लेटश्च लकारस्य तस्थस्थमिप् इत्येतेषां यथासंख्यं ताम्, तम्, त, व, म, अम्, इत्येते आदेशा भवन्तीति तसादीनां तामादयः, वसमसोराद्यन्यत इत्याकारः। नीतिः-अभवत्, अभवताम्, अभवन्। अभवः, अभवतम्, अभवत। अभवम्, अभवाव, अभवाम। तङ्क्षु टित्वाभा-वात एटित इत्यादि नास्ति। नीतिः—व्यत्यभवत, व्यत्यभवे-ताम्, व्यत्यभवन्त। व्यत्यभवथाः, व्यत्यभवेथाम, व्यत्यभव-ध्वम्। व्यत्यभवे, व्यत्यभवावहि, व्यत्यभवामहि।

५६६ आडजादीनाम्। ४। २। १३२। लङ्लुङ्लृङ्-विषये धातोरादेरचः आडेचो भवन्त्यमाङ्योगे। शेषं पूर्ववत्। ऐधत, ऐधेताम्, ऐधन्त, ऐधथाः, ऐधेथाम्, ऐधध्वम्, ऐधे,

ऐधावहि, ऐधामहि। अपचत्, अपचताम्, अपचन्। अपचः, अपचतम्, अपचत, अपचम्, अपचाव, अपचाम। अपचत, अपचेताम्, अपचन्त। अपचथाः, अपचेथाम्, अपचध्वम्। अपचे, अपचावहि, अपचामहि। तेभ्य एव धातुभ्य इच्छार्थे लेङ् लेडिति अधिकृत्य—

५६७। विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थने। ४। ४। १२६। विधिर्नियोगः, अज्ञातज्ञापनमित्येके। निमन्त्रणं नियोगतः कर्तव्यम्, स्वाभिमुखीकरणमित्येके। स्वेच्छया कामचारतः कर्तव्येष्वनुज्ञापनमामन्त्रणमित्येके। अधीष्टं सत्कारपूर्विका व्यापारणा। संप्रश्नः संप्रधारणा। बुभुत्सावेदनं प्रार्थना। एतेषु अर्थविशेषणेषु धातोः लेङ्लेटौ भवतः।

५६८। लिङ्लेटाशिषि। ४। ४। १३६। आशिषि गम्यमानायां धातोर्लिङ्लेटौ भवतः। टकार ए टित इति विशेषणार्थः। एकारः तस्थस्थवस्मस्मेस्तान्ततवमां लेटश्चेति विशेषणार्थः। शबोत्वावादेशाः पूर्ववत्तिबादयः।

५६९. सीस्येहर्युन्याम्। १। ४। ११४। लेटः सिमि ए इत्येतेषां यथासंख्यं ह्यादयो भवन्ति।

५७०। तुह्योस्तातादाशिषि। १। ४। १२२। आशिषि तुह्योस्तातादेशो भवति वा।

५७१। अतो हः। ४। २। ३९। धातोः परो योऽकारान्तप्रत्ययः तस्मात् परस्य हकारादेः लिवर्जितलादेशस्य हलुग्भवति। तसादीनां तामादयः।

५७२ । म्वेनादेष्टाप् । १ । ४ । ११५ । मकारवकारनकारादेर्लेडादेशस्य टाबागमो भवति । टपावितौ । प्रयोजनं पूर्ववत् । दीर्घ इति दीर्घः । नीतिः—भवतु, भवताद्—भवताम्, भवन्तु, भव—भवतात्, भवतम्, भवत । भवानि, भवाव, भवाम । तङः झोऽन्तः, एटितः, वह्यामोगेषु, थासःसे इति च कार्याणि भवन्ति, तत्र तातांझाथाम्सु तदेकारस्य सीम्येहर्धुन्यामिति आमादेशः सेः ध्वेश्चैकारस्य—

५७३ । स्वो वाम् । १।४।११७। लेडादेशस्य सकारवकाराभ्यां परस्य एकारस्य यथाक्रमं व अम् इत्यादेशौ भवतः । इति वामौ भवतः । वहेमहे इत्यत्र म्वेनादेष्टाप् इति टाप् ।

५७४। एतोऽऐप् ।१।४।११६। लेडादेशस्य म्वेनादेरेकारस्य ऐबादेशो भवतीत्यामपवादः अगकारानुबन्धः इलादेशैकारस्यानेन परत्वादैकारः न टाप् । नीतिः-व्यतिभवताम्, व्यतिभवेताम्, व्यतिभवन्ताम्, व्यतिभवस्व, व्यतिभवेथाम्, व्यतिभवध्वम्, व्यतिभवै, व्यतिभवावहै, व्यतिभवामहै । एधताम्, एधेताम्, एधन्ताम् । एधस्व, ऐधेथाम्, एधध्वम् । एधै, एधावहै, एधामहै । पचतु—पचतात्, पचताम्, पचन्तु । पच—पचतात्, पचतम्, पचत । पचानि, पचाव, पचाम । पचताम्, पचेताम्, पचन्ताम् । पचस्व, पचेथाम्, पचध्वम् । पचै, पचावहै, पचामहै । तेभ्य एव धातुभ्यः विधिनिमन्त्रणेत्यादिना लेङ् । ङकार एङितो ङुगिति विशेषणार्थः एकार लेलेरिति विशेषणार्थः । शबोत्वावादेशाः पूर्ववत्तिबादयः

एङिति लुगित्यादीनि च ङिल्लादेशकार्याणि ।

५७५ । इयाट्क्यासट् । १ । ४ । १०९ । लेङादेशस्य लिङादेशस्य चातङां यथासंख्यं इयाट्क्यासट् इत्येतावागमौ भवतः । टीयोऽपवादः । टकारो देशविध्यर्थः । ङकारो ङित्कार्यार्थः ।

५७६ । लेलेः । १ । ४ । १०८ । ङितो लकारस्य लेङो लिङश्च झेर्जुप् भवति । जकारो जुस्यक्येङर् इति विशेषणार्थः ।

५७७ । इयः । ४ । २ । ३५ । धातोर्या लिवर्जितला- शः तस्य यो याशब्दः तस्यातः परस्य इयादेशो भवति । ण्वोर्वल्कावेिति यकारस्य लुक्, इक्येङरित्येङ् । नीतिः— भवेत्, भवेताम्, भवेयुः । भवेः, भवेतम, भवेत । भवेयम, भवेव, भवेम । तद्वल्लुः —

५७८ । रन्नौ झलोः । १ । ४ । ११० । ङितो लकारस्य लेङ्ङ झ इलू इत्येतयोर्यथासंख्यं रन् अत् इत्येतावादेशौ भवतः ।

५७९ । टीय् । १ । ४ । १११ । लेङ् लिङादेशस्य तङः टीयागमो भवति । वलि लुण्वोर्वल्कावेिति यकारस्य लुक् । व्यतिभवेत, व्यतिभवेयाताम् , व्यतिभवेरन् । व्यतिभवेथाः, व्यतिभवेयाथाम्, व्यतिभवेध्वम् । व्यतिभवेय, व्यतिभवेवहि, व्यतिभवेमहि । एधेत, एधेयाताम् , एधेरन् । एधेथाः, एधेयाथाम, एधेध्वम् , एधेय, एधेवहि एधेमहि । पचेत्, पचेताम्, पचेयुः, पचेः, पचेतम्, पचेत । पचेयम्, पचेव, पचेम । पचेत, पचेयाताम्, पचेरन् । पचेथाः, पचेयाथाम्, पचेध्वम् ।

पचेय, पचेवहि, पचेमहि । टुनदु समृद्धौ उकारटुशब्दावितौ ।

५८० । उदितः। ४ । २ । १९७ । उदितो धातोर्नमागमो भवति। अकार उच्चारणार्थः । मकारो देशविध्यर्थः पूर्ववत् लङादयः । नन्दति, नन्दतः, नन्दन्ति इत्यादि । ध्वंसुङ् गतौ अवस्रंसनेच उकारङकाराविनौ। म्वांजव्यपदान्ते शल्यनुस्वार इत्यनुस्वारः । ङित्वात् तातामित्यादिना तङ् । ध्वंसते, ध्वंसेते, ध्वंसन्ते इत्यादि । व्येञ् संवरणे। संव्ययति, संव्ययतः, संव्यन्ति इत्यादि । ञित्वात् ञीदिदेत्यादिना तङ् । व्ययते, व्ययेते, व्ययन्ते इत्यादि। लङि अनन्दत्, अनन्दताम्, अनन्दन् इत्यादि। समव्ययत् समव्ययताम् समव्ययन् इत्यादि । अव्ययत, अव्ययेताम्, अव्ययन्त इत्यादि । लेटि नन्दतु नन्दताद्वा नन्दताम्, नन्दन्तु इत्यादि । ध्वंसताम्, ध्वंसेताम् ध्वंसन्ताम्, इत्यादि । संव्ययतु संव्ययताद्वा, संव्ययताम्, संव्ययन्तु इत्यादि । संव्ययताम्, संव्ययेताम्, संव्ययन्ताम् इत्यादि । लेङि—नन्देत्, नन्देताम्, नन्देयुरित्यादि । ध्वंसेत, ध्वंसेयाताम्, ध्वंसेरन् इत्यादि । संव्ययेत्, संव्ययेताम्, संव्ययेयुः इत्यादि । संव्ययेत । संव्ययेयाताम्, संव्ययेरन् इत्यादि नेयम् ।

इति भ्वादयः ।

## अथादादयः कथ्यन्ते—

लेटलेड्क्षु मध्ये कर्तरि शबिति शप् नस्य हृदादेः श्लुबलुगिति श्लुक् चरीति चर्त्वम् । अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । झकारस्य,

५८१ । तङोऽनतः । ६ । ४ । ९० । तङो झकारस्यानतः अनकारादुत्तरस्य अतृइत्ययमादेशो भवति । इत्यत् । व्यत्ते व्यसदाते व्यसदते । व्यत्त्से, व्यसदाथे, व्यसद्ध्वे, व्यसदे, व्यसद्वहे, व्यसद्महे । शीङ् स्वप्ने पूर्ववत् लडादयः—

५८२ । एश्शोङः । ४ । २ । ३ । शीङो धातोरिकः श्लेलेपरे एकारो भवति । झकारस्य—

५८३ । शीङो रत् । ६ । ४ । ९१ । शीङः परस्य तङो झकारस्य रदित्यादेशो भवति इति रत । सेः शास्वमीत्याविना पिः । शेते, शयाते, शेरते । शेषे, शयाथे, शेध्वे । शये, शेवहे शेमहे । ब्रूञ् व्यक्तायां वाचि । अकार इत । पूर्ववल्लडादयः ।

५८४ । ब्रुव ईट् । ४ । २ । २५ । ब्रूञ इगन्तात् परस्याकिङतो हलादेः लिवजिरालादेशस्य ईडागमो भवति । टकारो देशविध्यर्थः । अपिति श्लयव्लाविति ङिद्वद्भावादीडेडो न भवत मूहलश्नोश्चेयुवित्युव् । ब्रवीति ब्रूतः ब्रुवन्ति । ब्रवीषि ब्रूथः ब्रूथ । ब्रवीमि ब्रूवः ब्रूमः । ब्रूते, ब्रुवाते, ब्रुवते, ब्रूषे, ब्रुवाथे, ब्रूध्वे, ब्रुवे, ब्रूवहे, ब्रूमहे ।

५८५ । ब्रुवस्तिप्प्रश्नतो णशूपञ्चतूरुवश्चाहः । ६ । ४ । १०४ । ब्रूञो लटः तिबादीना पंचानां यथाक्रमं णश्, अतुस्, उस्, थ, अथुस् इत्यादेशा वा भवन्ति तत्सन्नियो-

गेन च ब्रुव आहादेशो भवति । अकार उच्चारणार्थः ।

५८६ । थ्याहः । ४ । २ । ८२ । आहो ब्रूञादेशस्य थादौ तकारो भवति। आह आहतुः आहुः आत्थ आहथुरिति। लङि—

५८७ । अदोऽट् । ४ । २ । २८ । अदेर्धातोः परस्याक्ङितो हलादेर्लिवर्जितलादेशस्यालमात्रस्याट् भवति । टकारो देशविध्यर्थः। आरैजायच इत्याकारः। आदत्, आत्ताम् , आदन् आदः, आत्तम् , आत्त । आदम् , आद्व, आद्म । व्यत्यात्त, व्यत्यादाताम्, व्यत्यादत । व्यत्यात्थाः व्यत्यादाथाम्, व्यत्याद्ध्वम् । व्यत्यादि, व्यत्याद्वहि, व्यत्याद्महि । अशेत, अशयाताम्, अशेरत । अशेथाः, अशयाथाम् , अशेद्ध्वम् । अशयि, अशेवहि, अशेमहि । अब्रवीत्, अब्रूताम्, अब्रुवन् । अब्रवीः, अब्रूतं, अब्रूत । अब्रवम् , अब्रूव, अब्रूम । अब्रूत, अब्रुवाताम्, अब्रुवत । अब्रूथाः, अब्रुवाथाम्, अब्रूध्वम् । अब्रुवि, अब्रूवहि, अब्रूमहि । लेटि से र्हिभावे—

५८८ । जल्दोर्हो धिः । ४ । २ । ३२ । जलन्ताज्जुहोतेश्च परस्य लिवर्जितलादेशस्य हकारस्य धि इत्यादेशो भवति । इकार उच्चारणार्थः । अत्तु, अत्ताद्धा, अत्ताम्, अदन्तु । अद्धि अत्ताद्धा, अत्तं, अत्त । अदानि, अदाव, अदाम । व्यत्यत्ताम्, व्यत्यदाताम, व्यत्यदताम् । व्यत्यत्स्व, व्यत्यदाथाम्, व्यत्यद्ध्वं, व्यत्यदै, व्यत्यदावहै, व्यत्यदा

महे। शेताम्, शयाताम्, शेरताम्। शेष्व, शयाथाम्, शेध्वम्। शयै, शयावहै, शयामहै।

५८९। हि चापि। १। ४। १२३। हि च तान्च पिन्न भवतीति हौ ताति च पित्त्वाभावात् इत्यन्लाविति ङिद्वद्भावात् एङरो न भवन्ति। ब्रवीतु, ब्रूतात्, ब्रूताम्, ब्रुवन्तु। ब्रूहि, ब्रूतात्, ब्रूतम्, ब्रूत। ब्रवाणि, ब्रवाव, ब्रवाम। ब्रूताम्, ब्रुवाताम्, ब्रुवताम्, ब्रूष्व, ब्रुवाथाम्, ब्रूध्वम्। ब्रवै, ब्रवावहै ब्रवामहै। लेङि वसि,

५९०। श्लुसि। ४। २। ३७। धातोर्ये वस तस्मिन् परत आकारस्य श्लुग्भवतीत्याकारस्य श्लुक्। अयात्, अयाताम्, अयुः। अयाः, अयातम् अयात। अयाम्, अयाव, अयाम। व्यत्यदीत, व्यत्यदीयाताम्, व्यत्यदीरन्। व्यत्यदीथाः, व्यत्यदीयाथाम्, व्यत्यदीध्वम्। व्यत्यदीय, व्यत्यदीवहि, व्यत्यदीमहि। शयीत, शयीयाताम्, शयीरन्। शयीथाः, शयीयाथाम्, शयीध्वम्। शयीय, शयीवहि, शयीमहि। ब्रूयात, ब्रूयाताम्, ब्रूयुः। ब्रूयाः, ब्रूयातम्, ब्रूयात। ब्रूयाम्, ब्रूयाव, ब्रूयाम। ब्रुवीत, ब्रुवीयाताम्, ब्रुवीरन्। ब्रुवीथाः, ब्रुवीयाथाम्, ब्रुवीध्वम्, ब्रुवीय, ब्रुवीवहि, ब्रुवीमहि।

इत्यदादयः।

## अथ ह्वादय:

हु दानादनयोः। पूर्ववत् लडादयः। तत्र श्लेलेषु कर्तरि शबिति मध्ये शप्। तस्य ह्वादेः श्लुवश्लुगिति श्लुप्। पित्सु द्विर्वचनात् प्रागेव परत्वात् अक्ङिल्लुग्घेताविति एङ्। तसादावपि श्लयञ्लाविति ङिद्वद्भावादेङ् न भवति। द्विर्धातुः श्लुव्लिङ्के प्रत्यये प्राकृत्वच्यच इति द्विर्वचनम्।

५९१। कुहोश्चुः। ४। १। ८४। द्विर्भावे पूर्वस्य यौ कवर्गहकारौ तयोश्चवर्गौ भवतीत्यासन्न इति हकारस्य झकारः। आण्जश्रझषः इति ओकारस्य उकारः। झकारस्य जकारः।

५९२। द्व्युक्तिजक्षपञ्चतोऽत्। १। ४। ८९। द्वे उक्ती यस्मिन् वा स द्व्युक्तिः द्विरुक्त इत्यर्थः। पञ्चानां वर्गः पञ्चत्। जक्षाणां पञ्चत् जक्षपञ्चत्। जक्षादिपञ्चकमित्यर्थः। द्विरुक्तात् जक्षादिभ्यश्च पञ्चभ्यः परस्य लादेशावयवझकारस्य अदित्यादेशो भवतीत्यन्तादेशापवादः।

५९३। ह्विणोऽचीकः श्लेले यव्। ४। २। १। हु इण् इत्येतयोरिकः शिति लेटि लेङि लटि लङि च क्ङित्यजादौ प्रत्यये परे यवादेशो भवति। इयुवपवादः। जुहोति जुहुतः जुह्वति। जुहोषि जुहुथः जुहुथ। जुहोमि जुहुवः जुहुमः। व्यतिजुहुते, व्यतिजुह्वाते, व्यतिजुह्वते। व्यतिजुहुषे, व्यतिजुह्वाथे, व्यतिजुहुध्वे। व्यतिजुह्वे, व्यतिजुहुवहे,

न्यतिजुहुमहे । ओहाङ् गतौ । पूर्ववल्लुडादयः शपः श्लुर्द्वि-
र्वचनादि ।

५९४ । भृञामित् । ७ । ४ । ७६ । भृञ्माङोहाङ्
आङ् इत्येतेषां श्लुपि विहिते द्विर्भावे सः पूर्वः तस्य इकारो
भवति ।

५९५ । ई हल्यघोः । ६ । ४ । ११३ । आप्रत्ययस्या-
ज्ञेश्नाभ्यस्तयोरातः इत्याकारस्य लुभ-
ते ईकारो भवति । अजादौ श्नाभ्यस्तयोरातः इत्याकारस्य लुभ-
ति । जिहीते, जिहाते, जिहते । जिहीषे, जिहाथे, जिहीध्वे ।
जिहे, जिहीवहे, जिहीमहे । डुधाञ् धारणे च । ञकारडुश-
ब्दावितौ पूर्ववल्लुडादयः शपः श्लुप् द्विर्वचनादि आण्जश्ज्ञप
इत्यकारो दकारश्च—

५९६ । धाञो झलि च । १ । २ । ७७ । झषन्तस्य
धाञो धातोरवयवस्य बशः स्थाने झलादौ प्रत्यये परे भष्
भवति । दधाति, धत्तः, दधति । दधासि, धत्थः, धत्थ ।
दधामि दध्वः, दध्मः । धत्ते, दधाते, दधते । धत्से, दधाथे
धद्ध्वे । दधे, दध्वहे, दध्महे । लङि झेः—

५९७ । सिविदज्ञेरभ्वः । १ । ४ । १०७ । सिप्रत्य-
यान्ताद्विदः अज्ञेश्च धातोः परस्य ङित्लादेशस्य झेर्नित्यं
जुस् भवति नचेत् स सिः भुवः परो भवतीति जुस् —

५९८ । जुस्यचोऽङर । ६ । ३ । १६ । धातोरिकः
जुसि परे च परे एङ्गो भवन्ति । अजुहोत्, अजुहुताम्, अजु-

हवुः । अजुहोः, अजुहुतम्, अजुहुत । अजुहवम्, अजुहुव, अजुहुम । व्यत्यजुहुत, व्यत्यजुह्वाताम्, व्यत्यजुह्वत । व्यत्यजुहुथाः, व्यत्यजुह्वाथाम्, व्यत्यजुहुध्वम् । व्यत्यजुह्वि, व्यत्यजुहुवहि व्यत्यजुहुमहि । अजिहीत, अजिहाताम्, अजिहत । अजिहीथाः, अजिहाथाम्, अजिहीध्वम् । अजिहि, अजिहीवहि, अजिहीमहि । अदधात् अधत्ताम् अदधुः । अदधाः अधत्तम् अधत्त । अदधाम् अदध्व अदध्म । अधत्त, अदधाताम्, अदधत । अधत्थाः, अदधाथाम् अधद्ध्वम् । अदधि, अदध्वहि, अदध्महि । लोटि जस्होर्धिरिति धिभावः हिचाबित्त्वपित्वात् ङिद्वद्भावादेङ् न भवति । जुहोतु जुहुतात्‌वा, जुहुताम्, जुह्वतु, जुहुधि जुहुतात्‌वा, जुहुतम् जुहुत । जुहवानि, जुहवाव, जुहवाम । व्यतिजुहुताम् व्यतिजुह्वाताम् व्यतिजुह्वताम् । व्यतिजुहुष्व व्यतिजुह्वाथाम् व्यतिजुहुध्वम् । व्यतिजुहवै, व्यतिजुहवावहै, व्यतिजुहवामहै । जिहीताम्, जिहाताम् जिहताम् । जिहीष्व, जिहाथाम्, जिहीध्वम् । जिहै, जिहावहै, जिहामहै । दाधाघ्वदापिति घुसंज्ञायाम् ।

५९९ । घोर्हि । ४ । १ । ६८ । घुसंज्ञकस्यधातोः हकारादौ हि इत्येतस्मिन् लोडादेशे प्रत्यये परे अच एकारो भवति न च द्विः । दधातु धत्तात्‌वा, धत्ताम्, दधतु । धत्स्व, दधाथाम्, धद्ध्वम् । दधै, दधावहै, दधामहै । लिङि जुहुयात्, जुहुयाताम्, जुहुयुः । जुहुयाः, जुहुयातम्, जुहुयात । जुहुयाम्, जुहुयाव, जुहुयाम । व्यतिजुह्वीत, व्यतिजु-

ह्रीयाताम्, व्यतिजुह्वीरन । व्यतिजुह्वीथाः, व्यतिजुह्वीयाथाम्, व्यतिजुह्वीध्वम् । व्यतिजुह्वीय व्यतिजुह्वीवहि व्यतिजुह्वीमहि । जिह्वीत, जिह्वीयाताम्, जिह्वीरन् । जिह्वीथाः, जिह्वीयाथाम्; जिह्वीध्वम् । जिह्वीय, जिह्वीवहि, जिह्वीमहि । विपूर्वः विदध्या-, विदध्याताम्, विदध्युः । विदध्याः, विदध्यातम्, विद-ध्यात । विदध्याम्, विदध्याव, विदध्याम । विदधीत, विदधी-याताम्, विदधीरन् । विदधीथाः, विदधीयाथाम्, विदधी-ध्वम् । विदधीय, विदधीवहि, विदधीमहि ।

इति ह्वादयः ।

## अथ दिवादयः ।

दिवू क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु । ऊकार इत् पूर्ववत् लडादयः । दिवादेः श्य इति मध्ये श्यः शपोऽपवादः शकारः हल्यन्त्यादिति ङिद्वद्भावार्थः । तेन ह्रस्वस्य हल इत्ये-ड् न भवति । धातोर्ग्गमित्यादिना दीर्घः । दीव्यति, दीव्यतः, दीव्यन्ति, दीव्यसि इत्यादि । व्यतिदीव्यते व्यतिदीव्येते व्यतिदीव्यन्ते व्यतिदीव्यसे इत्यादि । षूङ् प्राणिप्रसवे ङकारौ-कारौ इतौ । आदेष्ण इत्यादिना षकारस्य सकारः । सूयते, सूयेते, सूयन्ते इत्यादि । णह बन्धने ईदित । आदेष्ण इत्यादिना ण-कारस्य नकारः । नह्यति नह्यतः नह्यन्ति इत्यादि । नह्यते, नह्येते, नह्यन्ते इत्यादि । लङि धातोः प्राक् ससमः प्रयोगः

समदीव्यत्, समदीव्यताम्, समदीव्यन् इत्यादि । व्यत्यदीव्यत व्यत्यदीव्येताम् व्यत्यदीव्यन्त इत्यादि । प्रपूर्वः दीर्घः प्रासूयत प्रासूयेताम् प्रासूयन्त इत्यादि । समनह्यत्, समनह्यताम्, समनह्यन् इत्यादि । समनह्यत, समनह्येताम्, समनह्यन्त इत्यादि । लोटि परिपूर्वः परिदीव्यतु, परिदीव्यताम्, परिदीव्यन्तु इत्यादि । व्यतिदीव्यताम्, व्यतिदीव्येताम्, व्यतिदीव्यन्ताम् इत्यादि । प्रसूयताम् प्रसूयेताम् प्रसूयन्ताम् इत्यादि ।

६०० । हिनुमीनानिणोऽदुरोऽन्तरश्च णः । ४ । २ । २३८
दुर्वर्जितात् उपसर्गादन्तरशब्दाच्च परस्य हिनुमीनाआनि इत्येतेषां णादेशस्य च नस्य णो भवति । भवति प्राप्तेण इति परिभाषया व्यवस्था । परिणह्यतु, परिणह्यताद्वा परिणह्यताम् परिणह्यन्तु इत्यादि । परिणह्यताम्, परिणह्येताम्, परिणह्यन्ताम् इत्यादि । लेङि—दीव्येत, दीव्येताम्, दीव्येयुः इत्यादि । व्यतिदीव्येत, व्यतिदीव्येयाताम्, व्यतिदीव्येरन् इत्यादि । प्रसूयेत प्रसूयेयाताम् प्रसूयेरन् इत्यादि । सन्नह्येत्, सन्नह्येताम्, सन्नह्येयुरित्यादि । सन्नह्येत, सन्नह्येयाताम्, सन्नह्येरन् इत्यादि । इति दिवादयः ।

---

## अथ स्वादयः

षुञ् अभिषवे । अभिषवो मज्जनं (मथनं) पीडनं वा सकारस्तदर्थः आदेष्ण इत्यादिना सकारः । पूर्ववल्लडादयः । अक्षश्नुरिति वर्तमाने—

६०१ । स्वादेः । ४ । ३ । २८ । स्वादिभ्यो धातुभ्यः कर्तरि श्लेले श्नुर्भवति । शकारः श्ल्यरु३ावित्ति डिद्भावार्थः अतोऽत्राक्ङिदिति एङ् न भवति । वस्मसोः —

६०२ । म्वि लुग्वा । ४ । २ । ४१ । असंयोगात्परो य "कारस्तदन्तो यः प्रत्ययो धातोस्तस्य मकारादौ वकारादौ ।पिति लिवर्जितलादेशे परे लुग्वा भवतीति पक्षे उकारस्य क् । एवं वहिमह्योरपि । सुनोति सुनुतः सुन्वन्ति । सुनोपि ुनुथः सुनुथ । सुनोमि, सुन्वः सुनुवः, सुन्मः सुनुमः । ुनुते, सुन्वाते, सुन्वते । सुनुषे, सुन्वाथे, सुनुध्वे । सुन्वे, सुनुवहे सुन्वहे, सुनुमहे सुन्महे । अशौङ् व्याप्तौ औकार-इकारावितौ । न शादिति श्चुत्वनिषेधः । अश्नुते, अश्नुवाते, अश्नुवते । अश्नुषे, अश्नुवाथे, अश्नुध्वे । अश्नुवे, अश्नु-वहे, अश्नुमहे । चिञ् चयने । चिनोति, चिनुतः, चिन्वन्ति । चिनोपि, चिनुथः, चिनुथ । चिनोमि, चिन्वः चिनुवः, चिन्मः चिनुमः । चिनुते, चिन्वाते, चिन्वते । चिनुषे, चिन्वाथे, चिनुध्वे । चिन्वे, चिन्वहे चिनुवहे, चिन्महे चिनुमहे । लङि— असुनोत, असुनुताम्, असुन्वन् । असुनोः, असुनुतम् , असुनुत, असुनवम् , असुन्व असु-नुव, असुन्म असुनुम । असुनुत, असुन्वाताम् , असुन्वत । असुनुथाः, असुन्वाथाम् , असुनुध्वम् । असुन्वि, असुन्वहि असुनुवहि, असुन्महि असुनुमहि । आश्नुत, आश्नुवाताम्, आश्नुवत । आश्नुथाः, आश्नुवाथाम् , आश्नुध्वम् , आश्नुवि,

आश्नुवहि, आश्नुमहि । अचिनोत, अचिनुताम्, अचिन्वन्।
अचिनोः, अचिनुतम्, अचिनुत । अचिनवम्, अचिन्व
अचिनुव, अचिन्म अचिनुम । अचिनुत, अचिन्वाताम्,
अचिन्वन्त । अचिनुथाः, अचिन्वाथाम्, अचिनुध्वम् ।
अचिन्वि, अचिन्वहि अचिनुवहि, अचिन्महि अचिनुमहि ।
लेटि अभिपूर्वः ।

६०३ । सुञ्सुसोस्तुस्तुभोऽत्र्यप्यद्रेः । ४ । २ । २२०
सुञादीनामद्रिरूपाणां सकारोपसर्गात् परस्य षिर्भवत्यडाग-
मेऽन्तरे सत्यसत्यपि । हेः—

६०४ । असंयोगादोः । ४ । २ । ४० । असंयोगात्परो
य उकारस्तदन्तो यः प्रत्ययो धातोस्ततः परस्य हकारादेर्लिव-
र्जितलादेशस्य लुग्भवतीति लुक् । अभिषुणोतु अभिषुणुताद्वा,
अभिषुणुताम्, अभिषुण्वन्तु । अभिषुणु, अभिषुणुताद्वा,
अभिषुणुतं, अभिषुणुत । अभिषुणवानि, अभिषुणवाव, अभि-
षुणवाम । अभिषुणुताम्, अभिषुण्वाताम्, अभिषुण्वताम् ।
अभिषुणुष्व, अभिषुण्वाथाम्, अभिषुणुध्वम् । अभिषुणवै,
अभिषुणवावहै, अभिषुणवामहै । विपूर्वः— व्यश्नुताम्,
व्यश्नुवाताम्, व्यश्नुवताम्, । व्यश्नुष्व, व्यश्नुवाथाम्,
व्यश्नुध्वम्, । व्यश्नवै, व्यश्नवावहै, व्यश्नवामहै । निस्
पूर्वः- श्चौश्चूस्तोरिति श्चुत्वम् । निश्चिनोतु निश्चिनुताद्वा
निश्चिनुताम्, निश्चिन्वन्तु । निश्चिनु, निश्चिनुताद्वा, निश्चि
नुतम्, निश्चिनुत । निश्चिनवानि, निश्चिनवाव, निश्चि-

नवाम । निश्चिनुताम्, निश्चिन्वाताम्, निश्चिन्वताम् । निश्चिनवै, निश्चिनुष्व, निश्चिन्वाथाम्, निश्चिनुध्वम् । निश्चिनवै, निश्चिनवावहै, निश्चिनवामहै । लेङि—सुनुयात सुनुयाताम् सुनुयुः । सुनुयाः सुनुयातम सुनुयात । सुनुयाम् सुनुयाव सुनुयाम । सुन्वीत, सुन्वीयाताम्, सुन्वीरन् । सुन्वीथाः, सुन्वीयाथाम्, सुन्वीध्वम् । सुन्वीय, सुन्वीवहि, सुन्वीमहि । असुनुवीत, असुनुवीयाताम्, असुनुवीरन् इत्यादि । निश्चिनुयात, निश्चिनुयाताम, निश्चिनुयु· । निश्चिनुयाः, निश्चिनुयातम्, निश्चिनुयात । निश्चिनुयाम् निश्चिनुयाव, निश्चिनुयाम । निश्चिन्वीत, निश्चिन्वीयाताम, निश्चिन्वीरन् इत्यादि ।

इति स्वादय· ।

## अथ क्र्यादयः ।

डुक्रीञ् द्रव्यविनिमये । डुशब्दञकारावितौ पूर्ववद्बोधादयः स्तम्भूस्तुम्भूस्कम्भूस्कोः श्नाद्येत्यधिकृत्य —

६०५ । क्र्यादेः । ४ । ३ । ३० । डुक्रीञित्यादिभ्यः कर्तरि श्लेले श्ना भवति । शकारःश्लयश्लाविति ङिद्वद्भावार्थः अतोऽस्मिन् एङ् न भवति । श्नाभ्यस्तयोरात इति ईकारः । अन्तादेशे ईनाम्भेरात इत्याकारस्य लुक् । क्रीणाति, क्रीणीत·, क्रीणन्ति । क्रीणासि, क्रीणीथः, क्रीणीथ । क्रीणामि. क्रीणीवः, क्रीणीमः । क्रीणीते, क्रीणाते, क्रीणते । क्रीणीषे, क्रीणाथे, क्रीणीध्वे । क्रीणे

क्रीणीवहे, क्रीणीमहे। वृङ् संभक्तौ। ङकार इत्। वृणीते, वृणाते, वृणते। वृणीषे, वृणाथे, वृणीध्वे। वृणे, वृणीवहे, वृणीमहे। ग्रही उपादाने। ईकार इत्। वशिज्यविव्यधिज्यामहिप्ररिचप्रच्छि भ्रज्जां क्ङिति इति साचो यस्य इक्। गृह्णाति, गृह्णीतः, गृह्णन्ति। गृह्णासि, गृह्णीथः, गृह्णीथ। गृह्णामि, गृह्णीवः, गृह्णीमः। गृह्णीते गृह्णाते, गृह्णते। गृह्णीषे, गृह्णाथे, गृह्णीध्वे। गृह्णे, गृह्णीवहे, गृह्णीमहे। लङि—अक्रीणात्, अक्रीणीताम्, अक्रीणन्। अक्रीणा, अक्रीणीतम्, अक्रीणीत। अक्रीणाम्, अक्रीणीव, अक्रीणीम। अक्रीणीत, अक्रीणाताम्, अक्रीणत। अक्रीणीथाः, अक्रीणाथाम् अक्रीणीध्वम्। अक्रीणि, अक्रीणीवहि, अक्रीणीमहि। अवृणीत, अवृणाताम्, अवृणत। अवृणीथाः, अवृणाथाम्, अवृणीध्वम्। अवृणि, अवृणीवहि, अवृणीमहि। अगृह्णात, अगृह्णीताम्, अगृह्णन्। अगृह्णा, अगृह्णीतम्, अगृह्णीत। अगृह्णाम्. अगृह्णीव, अगृह्णीम। अगृह्णीत, अगृह्णाताम्, अगृह्णत। अगृह्णीथाः, अगृह्णाथाम, अगृह्णीध्वम्। अगृह्णि, अगृह्णीवहि, अगृह्णीमहि। लोटि—क्रीणातु, क्रीणीतात्, क्रीणीताम्, क्रीणन्तु। क्रीणीहि, क्रीणीतात्, क्रीणीतम्, क्रीणीत। क्रीणानि, क्रीणाव, क्रीणाम। क्रीणीताम्। क्रीणाताम्, क्रीणताम्। क्रीणीष्व, क्रीणाथाम्, क्रीणीध्वम। क्रीणै, क्रीणावहै, क्रीणामहै। वृणीताम् वृणाताम्, वृणताम्। वृणीष्व, वृणाथाम्, वृणीध्वम्। वृणै, वृणावहै, वृणामहै।

६०६ । हलश्श्नः शानज्झौ ।४।१।३१। हलन्ताद् धातोः परस्य श्नाप्रत्ययस्य हौ परे आनादेशो भवति । अतोह इति हेर्लुक् । गृह्णातु, गृह्णीताद्वा, गृह्णीताम्, गृह्णन्तु । गृहाण, गृह्णीताद्वा, गृह्णीतम्, गृह्णीत । गृह्णानि, गृह्णाव, गृह्णाम । गृह्णीताम्, गृह्णाताम्, गृह्णताम् । गृह्णीष्व, गृह्णाथाम्, गृह्णीध्वम् । गृह्णै, गृह्णावहै गृह्णामहै । लेङि— क्रीणीयात्, क्रीणीयाताम्, क्रीणीयुः । क्रीणीयाः, क्रीणीयातम्, क्रीणीयात । क्रीणीयाम्, क्रीणीयाव, क्रीणीयाम । क्रीणीत, क्रीणीयाताम्, क्रीणीरन् । क्रीणीथाः, क्रीणीयाथाम्, क्रीणीध्वम् । क्रीणीय, क्रीणीवहि, क्रीणीमहि । वृणीत, वृणीयाताम्, वृणीरन् । वृणीथाः, वृणीयाथाम्, वृणीध्वम् । वृणीय, वृणीवहि, वृणीमहि । गृह्णीत, गृह्णीयाताम्, गृह्णीरन् इत्यादि ।

इति क्र्यादयः ।

## अथ तुदादयः

तुदी व्यथने ईकारस्तदर्थः ।

६०७ । तुदादिभ्यः शः ।४।१।३२। तुदादिभ्यः कर्तरि श्लेलेमध्ये शो भवति । शपोऽपवादः शकारः इत्यकला- विति ङिद्वद्भावार्थः तेन ह्रस्वस्य हल इत्येट् न भवति । तुदति, तुदतः, तुदन्ति इत्यादि । तुदते, तुदेते, तुदन्ते इत्यादि मृ प्राणत्यागे । लटि—

६०८। म्रियतेर्लुङ्लिङोश्च । १।३।६१। म्रियतेः परेषां लुङ् लिङ् लट् लङ् लेट् लेङां नहो भवन्ति। यङय- क्क्याद्दे इत्यविकल्प।

६०९। रिः । ४। २। १५। धातोः ऋकारस्य यङ् यक् क्यास् श इत्येतेषु परतः रि शब्द आदेशो भवति। अचश्नुधातुभ्रुवामिति इय् म्रियते, म्रियेते, म्रियन्ते इत्यादि। मुच्लृ मोक्षणे। लकारनकारावितौ लडादि।

६१०। लिपादितृफदफगुफोभशुमः शे । ४। २। १९८। लिपादीनां तृफ इत्यादीनां च धातूनां शे प्रत्यये परे नमागमो भवति। नाजयपदान्ते इति परस्वः। मुञ्चति, मुञ्चतः, मुञ्चतीत्यादि। मुञ्चते, मुञ्चेते, मुञ्चन्ते इत्यादि। लङि अतुदत्, अतुदताम्, अतुदन् इत्यादि। तुदतु, तुदताद्वा, तुदताम्, तुदन्तु इत्यादि। तुदताम्, तुदेताम्, तुदन्ताम् इत्यादि। अतुदत, अतुदेताम्, अतुदन्त इत्यादि। अम्रियत, अम्रियेताम्, अम्रियन्त इत्यादि। अमुञ्चत्, अमुञ्चताम्, अमुञ्चन् इत्यादि। अमुञ्चत, अमुञ्चेताम्, अमुञ्चन्त। म्रियताम्, म्रियेताम्, म्रियन्ताम् इत्यादि। मुञ्चतु, मुञ्चताद्वा, मुञ्चताम्, मुञ्चन्तु इत्यादि। मुञ्चताम्, मुञ्चेताम्, मुञ्चन्ताम् इत्यादि। लेङि—तुदेत्, तुदेताम्, तुदेयुरित्यादि। तुदेत, तुदेयाताम, तुदेरन् इत्यादि। म्रियेत, म्रियेयाताम्, म्रियेरन् इत्यादि। मुञ्चेत्, मुञ्चेताम्, मुञ्चेयुरित्यादि। मुञ्चेत, मुञ्चेयाताम्, मुञ्चेरन् इत्यादि।

इति तुदादयः।

## अथ तनादयः ।

तनूञ् विस्तारे ऊकारञकारावितौ पूर्ववल्लडादयः ।

६११ । कृञ्तनादेः । ३ । १ । ३३ । कृञः तनादि- श्च श्लेलेमध्ये उप्रत्ययो भवति । शपोऽपवादः । तस्य पित्सु ङिद्दद्भावाभ भवति । किङदित्येड् अपित्सु शल्यठलाविति ङिद्दद्भावान भवति । वकारवकारादौ म्विल्युर्वेति पक्षे लुक् । तनोति तनुतः तन्वन्ति । तनोषि, तनुथः, तनुथ । तनोमि, तनुवः तन्वः, तनुमः तन्मः । तनुते, तन्वाते, तन्वते, तनुषे, तन्वाथे, तनुध्वे । तन्वे, तन्वहे तनुवहे, तन्महे तनुमहे । मनूङ् बोधने । ऊकारङकारावितौ । मनुते, मन्वाते, मन्वते इत्यादि । डुकृञ् करणे । डुशब्दञकारावितौ लडादयः उप्रत्ययेऽरादेशे च कृते—

६१२ । अतः श्रि चोत् । ४ । २ । ४३ । शित्यपिति पिति च लिवर्जितलादेशे य उकारस्तन्निमित्तकः तस्य कार्यभूतो योऽकारः कृञवयवः तस्य उदादेशो भवति । तकारकरणा- दस्य एद् न भवति । करोतेः परस्य

६१३ । कुर्पि च । ४ । २ । ४२ । करोतेः परस्य उकारस्य म्वादावपिति यकारादौच लिवर्जितलादेशे परे नित्यं लुग्भवति । करोति कुरुतः कुर्वन्ति । करोषि कुरुथः कुरुथ । करोमि, कुर्वः, कुर्मः । कुरुते, कुर्वाते, कुर्वते । कुरुषे, कुर्वाथे, कुरुध्वे । कुर्वे, कुर्वहे, कुर्महे । लङि सम्पूर्वः समतनोत समतनुताम्, समतन्वन् । समतनोः, समतनतम

कुत्वम् । भुङ्क्ते, भुंजाते, भुञ्जते । भुङ्क्षे, भुञ्जाथे, भुङ्ग्ध्वे भुञ्जे, भुञ्ज्वहे, भुञ्ज्महे । युजृन् योगे ऋकारजकारावितौ युनक्ति, युङ्क्तः, युञ्जन्ति । युनक्षि, युङ्क्थः, युङ्क्थ युनज्मि युञ्ज्वः युञ्ज्मः । प्रयुङ्क्ते, प्रयुञ्जाते, प्रयुञ्जते प्रयुङ्क्षे, प्रयुञ्जाथे, प्रयुङ्ग्ध्वे, प्रयुञ्जे, प्रयुञ्ज्वहे, प्रयुञ्ज्महे ।

६२० । ला । १ । २ । ९४ । लादेशेन सह प्रकृतेर्य संयोगस्तदन्तस्य पदस्य लुग्भवति । जलो जशिति जश्त्वे कृते

६२१ । सिपि दश्च वा । १ । २ । ७३ । पदान्ते सकारस्य दकारस्य च सिपि परतो रिर्वा भवति । विसर्जनीयश्च न्यरुणत्, न्यरुन्धाम्, न्यरुन्धन् । न्यरुणः न्यरुणद्वा, न्यरुन्धं, न्यरुन्ध । न्यरुन्धम्, न्यरुन्ध्व, न्यरुन्ध्म । अरुन्ध अरुन्धाताम अरुन्धत । अरुन्धाः अरुन्धाथाम् अरुन्ध्वम् । अरुन्धि, अरुन्ध्वहि, अरुन्ध्महि । अभुङ्क्त, अभुञ्जाताम्, अभुञ्जत । अभुङ्क्थाः, अभुञ्जाथाम्, अभुङ्ग्ध्वम् । अभुञ्जि, अभुञ्ज्वहि, अभुञ्ज्महि । अयुनक्, अयुङ्क्ताम्, अयुञ्जन् । अयुनक्, अयुङ्क्तम्, अयुङ्क्त । अयुनजम्, अयुञ्ज्व अयुञ्ज्म । न्ययुङ्क्त, न्ययुञ्जाताम्, न्ययुञ्जत । न्ययुङ्क्थाः, न्ययुञ्जाथाम् । न्ययुङ्ग्ध्वम् । न्ययुञ्जि, न्ययुञ्ज्वहि, न्ययुञ्ज्महि । लेटि-रुणद्धु रुन्धाद्वा, रुन्धाम्, रुन्धन्तु । रुन्धि रुन्धाद्वा, रुन्धम्, रुन्ध । रुणधानि, रुणधाव, रुणधाम । रुन्धाम्, रुन्धाताम्, रुन्धताम् । रुन्त्स्व, रुन्धाथाम्, रुन्ध्वम्, रुणधै, रुणधावहै, रुणधामहै । भुङ्क्ताम्, भुञ्जाताम्,

भुञ्जताम्, भुङ्क्ष्व, भुञ्जाथाम्, भुङ्ग्ध्वम्। भुनजै, भुनजावहै, भुनजामहै। युनक्तु युङ्क्तात्, युङ्क्ताम्, युञ्जन्तु। युङ्ग्धि युङ्क्तात्, युङ्क्तम्, युङ्क्त। युनजानि, युनजाव, युनजाम। वियुङ्क्ताम्, वियुञ्जाताम्, वियुञ्जताम्। वियुङ्क्ष्व, वियुञ्जाथाम्, वियुङ्ग्ध्वम्। वियुनजै, वियुनजावहै, वियुनजामहै। लेङि--रुन्ध्यात्, रुन्ध्याताम, रुन्ध्युरित्यादि। रुन्धीत, रुन्धीयाताम्, रुन्धीरन् इत्यादि। भुञ्जीत भुञ्जीयाताम्, भुञ्जीरन् इत्यादि। युञ्ज्यात्, युञ्ज्याताम्, युञ्ज्युरित्यादि। युञ्जीत, युञ्जीयाताम्, युञ्जीरन् इत्यादि।

इति रुधादयः।

## अथ चुरादयः।

चुर स्तेये अकार उच्चारणार्थः।

६२२। चुरादिभ्यो णिच्। ४।१।५। चुरादिभ्यो धातुभ्यो णिच् प्रत्ययो भवति स्वार्थे। चकारः णेरिक्रानिडामारवन्त्वे-त्वाध्ये इति सामान्यग्रहणविघातार्थः। णकारः णिरिक्रा-निडामिति सामान्यग्रहणार्थः--

६२३। ह्रस्वस्य हलः। ४। २। १८। हलन्तस्य धातोः प्रत्यये परे पूर्वस्यैको ह्रस्वस्य एङरो भवन्ति अकिङ्-त्लुग्घेतौ। ततो धातुसंज्ञायां लडादयः। मध्ये शबेडादयश्च। चोरयति, चोरयतः, चोरयन्तीत्यादि। छदि संवरणे। इकारः इत्।

६२४ । ञ्णित्यस्याः । ४ । १ । २३० । ञिति णिति च प्रत्यये परे धातोरुपान्त्यस्याकारस्याकारो भवति । अवयवे कृतं लिङ्गं समुदायस्य विशेषणं भवतीति णिजन्तात्सङः । छादयते, छादयेते, छादयन्ते । इत्यादि । लक्षी दर्शनाङ्कनयोः । ईकार इत् । लक्षयति, लक्षयतः, लक्षयन्ति इत्यादि । लक्षयते, लक्षयेते, लक्षयन्ते इत्यादि । लङि—अचोरयत्, अचोरयताम्, अचोरयन् इत्यादि । अच्छादयत, अच्छादयेताम्, अच्छादयन्त इत्यादि । अलक्षयत्, अलक्षयताम्, अलक्षयन् इत्यादि । अलक्षयत, अलक्षयेताम्, अलक्षयन्त इत्यादि । लेटि—चोरयतु चोरयताद्वा, चोरयताम्, चोरयन्तु इत्यादि । छादयताम्, छादयेताम्, छादयन्तामित्यादि । लक्षयतु लक्षयताद्वा, लक्षयताम्, लक्षयन्तु । इत्यादि । लक्षयताम्, लक्षयेताम्, लक्षयन्ताम् इत्यादि । लेङि- चोरयेत्, चोरयेताम्, चोरयेयुरित्यादि । छादयेत, छादयेयाताम्, छादयेरन् इत्यादि । लक्षयेत्, लक्षयेताम्, लक्षयेयुरित्यादि । लक्षयत, लक्षयेयाताम्, लक्षयेरन् इत्यादि । युज पृच संयमने । अकार इत् ।

६२५ । युजादेर्वा । ४ । १ । ८ । युजादिभ्यो धातुभ्यो णिच् प्रत्ययो वा भवति स्वार्थे । णकारचकारावितौ । पूर्ववल्लङादयः । योजयति । पक्षे न्यायविकरणः शप् योजति इत्यादि । अर्चि पूजायां इकार इत् । णिजभावपक्षे सावकाश इति णिचि तङ् न भवति । अर्चयति, अर्चते इत्यादि । वृन्‌ वरणे । नकार

इत्। लडादयः। ञकारानुबन्धो णिजभावपक्षे कृतार्थ इति णिजन्तात्तङ् न भवति। अरादेशे कृते ञिणत्यस्या इत्याकारः। प्रवारयति,प्रवारयतः, प्रवारयन्ति। प्रवरति प्रवरते इत्यादि। लङि—अयोजयत्, अयोजत् इत्यादि। आर्चयत्, आर्चत इत्यादि। प्रावारयत, प्रावरत्, प्रावरत इत्यादि। लेटि—योजयतु, योजतु इत्यादि। अर्चयतु, अर्चतामित्यादि। वारयतु, वरतु, वरतामित्यादि। योजयेत, योजेत इत्यादि। अर्चयेत्, अर्चेत् इत्यादि। प्रवारयेत्, प्रवरेत्, प्रवरेत इत्यादि। सर्वमुन्नेयम्।

इति कर्तरि इलेलपरिच्छेदः प्रथमः।

## अथ कर्मभावविवक्षायां लकारा उच्यन्ते।

यदा तु—

६२६। साप्यानाप्याल्लक्तव्यप्रवार्थाः कर्मभावे। ४। ३। ५५। सकर्मकादकर्मकाच्च धातोर्लक्तव्यप्रवार्थाः प्रत्यया यथासंख्यं कर्मणि भावे च भवन्तीति कर्मभावयोर्लाः भवन्ति तदा—

६२७। कर्मभावे। ४। ३। १७। कर्मणि भावे च यो लकारस्तस्य पूर्ववत्तङो भवंति नातङः। तत्र च।

६२८। इलेले यक्। ४। ३। १९। धातोः कर्मणि भावे च वर्तमाने शिदादौ लेटि लेङि लटि लङि च प्रत्यये परे यक् प्रत्ययो भवति न शबादयः। ककारोऽक्ङिदिति वि-

शेषणार्थः । प्राग्वदेत्वादयः । कर्मभावयोः समानं रूपम् , किन्तु स एव भावे भवन्ति लकारवाच्यस्य भावस्यैकत्वा-द्युष्मदस्मद्विषयत्वाच्च लकारेण कर्त्रनभिधानात् कर्तृवा-चिनः प्रातिपदिकात् कर्तरि तृतीया । भू इत्येतस्मात् सत्तायाः क्रियायाः अकर्मकत्वात् भावे लकारो भवति । भूयते देव-दत्तेन विदुषा । भूयते देवदत्तजिनदत्ताभ्यां विद्वद्भ्याम् । भूयते देवदत्तजिनदत्तगुरुदत्तैर्विद्वद्भिः । त्वया भूयते । मया भूयते । साधनभेदे यद्यपि क्रियाभेदः न स शब्देनोपादीयते इत्येकवचनमेव भवति । अकर्मका अपि धातवः सोपसर्गाः सकर्मकाः भवन्तीति वचनात् यदा स्वयमुपसर्गपूर्वस्तदा सकर्मको भवति । अनुपूर्वः अनुभूयते, अनुभूयेते, अनुभूयन्ते । अनुभूयसे, अनुभूयेथे, अनुभूयध्वे । अनुभूये, अनुभूयावहे, अनुभूयामहे । अविवक्षितकर्मकः अकर्मक इति अविवक्षित-कर्मकात् भावेऽपि भवन्ति । एवं अभिभूयते इत्यादि । एव अभूयत, भूयताम् , भूयेत, अन्वभूयत, अनुभूयताम् , अनुभू-येत । तथा एध्यते, ऐध्यत, एध्यताम् , एध्येत । पच्यते, अपच्यत, पच्यताम् , पच्येत । नन्द्यते, अनन्द्यत, नन्द्यताम् , नन्द्येत । हलोनोऽनर्चाञ्च्युदितोरिति नलुक् । प्रध्वस्यते, प्राध्वस्यत, [illegible], प्रध्वस्येत ।

६२९ । ज्योऽलिटि । ४ । १ ।१८६ । ज्येञो धातोरलि-[illegible] विषये आकारो भवति । इत्यादित्वठवचः किति [illegible]ति साचो यम् इक् ।

६३०। दीर्घोऽचोऽवः। । । । अजन्तस्य वेञ्व-र्जितस्य धातोः साचो यत्र इक्प्रत्यये परे दीर्घो भवति। वीयते, अवीयत, वीयताम्, वीयेत। अद्यते, आद्यत, अद्यताम्, अद्येत।

६३१। स्यय्। ४। २। ४। शीङ इकः क्ङिति यकारादौ प्रत्यये परे अय् भवति। अधिशय्यते, अध्यशय्यत, अधिशय्यताम्, अधिशय्येत।

६३२। अस्तिब्रुवोर्भूवचौ। ४। २। ९१ असेर्ब्रुवश्च यद्विलप्रत्ययविषये यथासङ्ख्यं भूवच इत्यादेशौ भवतः। तव्यादिस्वव्वचः किताति साचो यत्र इक् उच्यते, लङि यकि कृते आरैजाद्यच इत्यौकारः। औच्यत, उच्यताम् उच्येत।

६३३। यङ्लेङ्कृति चर्दचो रीदीर्घौ।२।३।४१। ऋकार-स्याचश्च यदि लेङ्कृद्वर्जिते यकारादौ च्वौ च प्रत्यये परे रीदीर्घा-वादेशौ भवतः। ह्रियते, अह्रियत, ह्रियताम्, ह्रियेत। ह्रायते, अह्रायत, ह्रायताम्, ह्रायेत।

६३४। ई हल्यप्ये। ४। २। ८७। घुसंज्ञकानामास्था-गापाहाहासा इत्येतेषाञ्च धातूनां प्यवर्जिते हलादौ ल्यञ्चिप्रत्यये परे ईकारो भवति। विधीयते, व्यधीयत, विधीयताम्, विधीयेत। दीव्यते, अदीव्यत, दीव्यताम्, दीव्येत। प्रसूयते, प्रासूयत, प्रसूयताम्, प्रसूयेत। सन्नह्यते, समनह्यत, सन्नह्यताम्, सन्नह्येत। अभिपूयते, अभ्यपूयत, अभिपूयताम्, अभिपूयेत। अश्यते, आश्यत, अश्यताम्, अश्येत। निश्चीयते, निरचीयत, निश्चीयताम्, निश्चीयेत। विक्रीयते,

व्यक्रीयत, विक्रीयताम्, विक्रीयेत । संव्रियते, समव्रियत, संव्रियताम्, संव्रियेत । गृह्यते, अगृह्यत, गृह्यताम्, गृह्येत । तुद्यते, अतुद्यत, तुद्यताम्, तुद्येत । रिरिति रिः। म्रियते, अम्रियत, म्रियताम्, म्रियेत । मुच्यते, अमुच्यत, मुच्यताम्, मुच्येत ।

६३५ । तनो यकि । ४ । १ । २७० । तनोतेर्धातोर्यकि आकारो वा भवति । दीर्घ· तायते, तन्यते, अतायत, अतन्यत, तायताम् तन्यताम्, तायेत, तन्येत । मन्यते, अमन्यत, मन्यताम्, मन्येत । क्रियते, अक्रियत, क्रियताम् क्रियेत । रुध्यते, अरुध्यत, रुध्यताम्, रुध्येत । भुज्यते अभुज्यत, भुज्यताम्, भुज्येत । युज्यते, अयुज्यत, युज्यताम्, युज्येत ।

६३६ । णेरिक्तानिडामाल्वन्तेत्न्वाय्ये । ४ । २ । १०१ । धातोरवयवस्य णेरिडाद्योःक्तयोः इडामाल्वन्तेत्न्वाय्यवर्जिते च लयशिलप्रत्यये च परे लुग्भवति । चोर्यते, अचोर्यत, चोर्यताम्, चोर्येत । छाद्यते, अच्छाद्यत, छाद्यताम्, छाद्येत । लक्ष्यते, अलक्ष्यत, लक्ष्यताम्, लक्ष्येत । योज्यते, अयोज्यत, योज्यताम्, योज्येत । युज्यते, अयुज्यत, युज्यताम्, युज्येत ! अर्च्यते, आर्च्यत, अर्च्यताम्, अर्च्येत । णिजभावपक्षेऽप्यविशेषः । प्रवार्यते, प्रावार्यत, प्रवार्यताम्, प्रवार्येत । प्रव्रियते प्राव्रियत, प्रव्रियताम् . प्रव्रियेत । इत्यादि सप्रपञ्चमवलोकयोऽयम् ।

अपि च धातोः कस्यचित् कश्चिदर्थभागः कर्मस्थः प्रधानं फलरूपो विवक्षाभेदादिः। कश्चित् कर्तृस्थो गुणः भावः नारूढोऽधिश्रयणादिः। तत्र यदा कर्मस्थे स्वस्यार्द्धभागे सुकरत्वा कर्मण्यध्यारोपितायां भावनायां धातुर्वर्तते तदा तु कर्म कर्ता भवति तस्मिन् लकारे।

६३७। कर्मण्वत्तुत्रादीनां कर्मवत्क्ष्ठि। ४। ३। ३५।
दुत्वत्यादिवर्जितस्य धातोः कर्मणि कर्तरि लकारे सति तदन्तस्य कर्मवत् कार्यं भवतीति कर्मणि कार्यं भवति कर्मणि लकारे सति यथा चिञ्चिण्यक्तङाना भवन्ति तथात्रापि ते भवन्तीत्यर्थः। कर्मकर्तर्यपि एतान्येवोदाहरणानि भवन्ति। कर्मकर्तृभावाभिव्यक्त्यर्थं स्वयमेवेत्यनुप्रयुज्यते। अनुभूयते कम्बलः स्वयमेव। अनुभूयेते कम्बलौ स्वयमेव। अनुभूयन्ते कम्बलाः स्वयमेव। इत्यादि। एवं पच्यते ओदनः स्वयमेव विक्लिद्यतीत्यर्थः। इत्यादि नेयम्। किञ्च—

६३८। भूषार्थसन्दुहादीनां च ञियक्। ।। भूषार्थानां सन्नन्तानां दुहादीनां ण्यन्तानां श्रि स्नु इत्येतयोः तङ्च कर्मणां च धातूनां कर्मकर्तरि ञिः, ञिट् यक् च प्रत्ययो भवतीति ञ्यन्तस्य ग्रन्थश्च दुहादित्वात् यग् न भवति, शवेव भवति। इति यक्परिच्छेदो द्वितीयः।

## अथ शेपलकाराः कर्तरि नीयन्ते।

भू इति स्थिते—लिङ्लेडाशिषीति लिङ् ङकारः एदितो-

लुगिति विशेषणार्थः । इकारः सट्सूथीयां लिङ इति विशेषणार्थः । पूर्ववत् तिबादयः । एङ्क्तिो लुगित्यादि पूर्ववत् ङ्याद् क्यासडिति क्यासडागमः ककारः अक्डिदिति विशेषणार्थः टकारो देशविध्यर्थः अकार उच्चारणार्थः । लेलेरिति झेर्जुस् । तिप्सिपोः पदस्येति लोपस्यापवादः । संयोगस्यादिः स्कोर्लुगिति सकारस्य लुक् । भूयात्, भूयास्ताम्, भूयासुः । भूयाः, भूयास्तम् , भूयास्त । भूयासम् , भूयास्व, भूयास्म । तङ्क्षु—टीय् इति टीय् ।

६३९ । सट्सूथीयां लिङ. । १ । ४ । ११२ । लिङादेशस्य तकारथकारयोः टीयश्च सडागमो भवति । लुग्व्योर्वल्काविति यकारस्य लुक् ।

६४० । वलादेरिडत्रवधुणादेः । ४ । २ । १३४ । धातोर्वलादेः स्यइत्प्रत्ययस्य इडागमो भवति न चेदसौ त्रः वधादिः उणादिर्वा भवति । ओत्वावादेशौ शास्वसीत्यादिना षिः । ष्ठौ ष्ट इति तथयोः ष्टुत्वम् , रन्झेलोरिति रन् अकारश्च ।

६४१ । वेड्ध्वेः । १ । २ । ८२ । इवः परस्मात् इटो निटश्च परेषां लिङो लिटो लुङश्च धकारस्य ढकारो वा भवति । इति पक्षे ध्वमो ढः । व्यतिभविषीष्ट, व्यतिभविषीयास्ताम् , व्यतिभविषीरन् । व्यतिभविषीष्ठाः, व्यतिभविषीयास्थाम् , व्यतिभविषीध्वम् व्यतिभविषीढ्वम् । व्यतिभविषीय, व्यतिभविषीवहि, व्यतिभविषीमहि । एधिषीष्ट, एधिषीयास्ताम्, एधिषीरन् । एधिषीष्ठाः, एधिषीयास्थाम्, एधिषीध्वम्।

एधिषीय, एधिषीवहि, एधिषीमहि । पच्यात्, पच्यास्ताम्, पच्यासुः । पच्याः, पच्यास्तं, पच्यास्त । पच्यासम्, पच्यास्व, पच्यास्म ।

६४२ । मुरिसिविपवाच्चः । ४ । २ । १७७ । मुरि-सिविपत्र इत्येतेभ्यः परो यश्चकारस्तदन्तादेकाचो धातोर्विहि-तस्येड् न भवति । इति प्रतिषेधात् इट् न भवति । पक्षीष्ट, पक्षीयास्ताम्, पक्षीरन् । पक्षीष्ठाः, पक्षीयास्थाम्, पक्षीध्वम् । क्षीय, पक्षीवहि, पक्षीमहि । नन्द्यात्, नन्द्यास्ताम्, न्द्यासुः । नन्द्याः, नन्द्यास्तम्, नन्द्यास्त । नन्द्यासम्, न्द्यास्व, नन्द्यास्म । ध्वंसिषीष्ट, ध्वंसिषीयास्ताम्, ध्वंसि-षीरन् । इत्यादि । वीयात्, वीयास्ताम्, वीयासुरित्यादि ।

६४३ । शक्प्रच्छिविन्द्धिघहन्वसिघस्यचोऽश्विश्रिशी-ङ्डीङ्रुपट्कोद्वृद्त । ४ । २ । १७६ । शकादिभ्यः अजन्तेभ्यश्च एकाज्भ्यो धातुभ्यो विहितस्य वलादिप्रत्ययस्य इड् न भवति श्विश्रिशीङ्डीङ् इत्येतान् रुपट्कमृकारान्तं वृङ्वृञौ ऋकरान्तमकारान्तं च वर्जयित्वा । इति प्रतिषेधा-दिड् न भवति । व्यासीष्ट, व्यासीयास्ताम्, व्यासीरन् इत्यादि । अयात्, अयास्ताम्, अयासुरित्यादि ।

६४४ । अक्षुनुतुस्कनूभिच्छिखिशपसहाद्: । ४ । २ । १८० । अ इत्यादिभ्यः परो यो दकारस्तदन्तादेकाचो विहित-स्येड् न भवति । व्यत्यस्मीष्ट, व्यत्यस्मीयास्ताम्, व्यत्यस्सीरन् इत्यादि । वेड्वेरिति पक्षे ढत्वम् । शयिषीष्ट, शयिषीयास्ताम्,

शयिषीरन् । शयिषीष्ठाः, शयिषीयास्थाम्, शयिषीध्वम्, शयिषीढ्वम् । शयिषीय, शयिषीवहि, शयिषीमहि । उच्यात्, उच्यास्ताम्, उच्यासुरित्यादि । सुरिसिविपवाज्ञ इति इडभाव.। वक्षीष्ट, वक्षीयास्ताम्, वक्षीरन् इत्यादि । यङ् लेङ्गित्यादिना दीर्घः । हूयात्, हूयास्ताम्, हूयासुरित्यादि ।

६४५ । इञो लिलुङां धो ढः । १ । २ । ८१ । इञः परेषां लिङो लिटो लुङश्च धकारस्य ढकारो भवति । इति धो ढः। व्यतिहोषीष्ट, व्यतिहोषीयास्ताम्, व्यतिहोषीरन् । व्यतिहोषीष्ठाः, व्यतिहोषीयास्थाम्, व्यतिहोषीढ्वम् । व्यतिहोषीय, व्यतिहोषीवहि, व्यतिहोषीमहि । हासीष्ट, हासीयास्ताम्, हासीरन् इत्यादि ।

६४६ । घुमास्थागापाहावसः । ४ । २ । ८६ । घ्वादीनां क्ङिति लिङि प्रत्यये नित्यमेकारो भवति । विधेयात् विधेयास्तां विधेयासुरित्यादि । श्रत्पूर्वः श्रद्धासीष्ट, श्रद्धासीयास्ताम्, श्रद्धासीरन् इत्यादि । दीव्यात्, दीव्यास्ताम्, दीव्यासुरित्यादि । व्यतिदेविषीष्ट, व्यतिदेविषीयास्ताम्, व्यतिदेविषीरन् इत्यादि ।

६४७ ।रधादीदिद्धूञः। ४ । २ । १३९ । रधादेरीदितः धूञश्च धातोः परस्य वलादेः स्यस्तः प्रत्ययस्य इड् वा भवतीति पक्षे इट्। इट्पक्षे वेढ्नोरिति वा ढत्वम् । प्रसविषीष्ट, प्रसविषीयास्ताम् प्रसविषीरन । प्रसविषीष्ठाः प्रसविषीयास्थाम् प्रसविषीध्वम्, प्रसविषीढ्वम् । प्रसविषीय, प्रसविषीवहि

प्रसविषीमहि । इडभावे इचोलि लुङां धो ढ इति ढः । प्रसोषीढ्, प्रसोषीयास्ताम् , प्रसोषीरन् । प्रसोषीष्ठाः, प्रसोषीयास्थाम् , प्रसोषीढ्वम् । प्रसोषीय, प्रसोषीवहि, प्रसोषीमहि । सन्नह्यात् , सन्नह्यास्ताम् , सन्नह्यासुरित्यादि ।

६४८ । नहो धः । १ । २ । ८७ । नहो हकारस्य पदान्ते जलि च परे धकारो भवति । जश्त्वचर्त्वे—

६४९ । वनमिदुरुदिलिदादूहः । ४ । २ । १८७ । वन इत्यादिभ्यः परो यो हकारः तदन्तादेकाचो विहितस्य नेड् भवति । इति इट्प्रतिषेधः । नत्सीष्ट, नत्सीयास्ताम्, नत्सीरन् इत्यादि । अभिपूयात् , अभिपूयास्ताम्, अभिपूयासुरित्यादि । रधादौदिद्भ्य सोषीष्ट सोषीयास्ताम् , सोषीरन् इत्यादि । अशिषीष्ट, अशिषीयास्ताम् , अशिषीरन् इत्यादि इति पक्षे इट् । अशिषीष्ट,

इडभावे भ्रस्जभ्रस्जेत्यादिना षः ।

६५० । षढः कस्सि । १ । २ । ६६ । षकारढकारयोः सकारे परे ककारो भवति । अक्षीष्ट, अक्षीयास्ताम् , अक्षीरन् इत्यादि । निश्चीयात्, निश्चीयास्ताम् , निश्चीयासुरित्यादि । चेषीष्ट चेषीयास्ताम् , चेषीरन् इत्यादि । क्रीतात् , क्रेषीष्ट ।

६५१ । इलभ्यां चोस्सदतङ्स्ते: । ४ । २ । १३८ ॥ धातोर्हल्भ्यां हलद्वयात् परो ग ऋकारः तदन्तात् ऋकारान्तात् वृङ्वृञ्भ्यां च परस्य सटः तङ्परस्य च सेरिड् वा भवति । वरिषीष्ट ।

६५२ । — । ४ । १ । १६२ । ऋवर्णान्तस्य धातो-

६६२ । भूव्यथोऽदित् । ४ । १ । १०७ । भूव्यथो-र्लिटि द्विर्भावे पूर्वस्योत अत अत इत इत्येतावादेशौ भवतः । इत्यूकारस्याकारः पित्सु अक्ङिदिति ओकारोऽवादेशश्च णित्याकारः अपित्सु भ्रूहलित्यादिना उव् अकारोकाराकाराणाम् ।

६६३ । लुङ्लिटि भुवः । ४ । १ । २१८ । भू इत्यस्योपान्त्यस्याचः लुङि लिटि च परे ऊकारो भवति । बभूव, बभूवतुः, बभूवुः । बभूविथ, बभूवथुः, बभूव । बभूव, बभूविव, बभूविम । तङ्क्षु—

६६४ । लिटस्तझस्यैशिरे । १ । ४ । ९८ । लिडादेशयोस्तझ इत्येतयोः यथासंख्यं एश्, इरे इत्येतावादेशौ भवतः । शकारः सर्वादेशार्थः । शेषाणां स्थितः थासः सेवह्यामो गेश् इत्येवमादि पूर्ववत्, पूर्ववच्च इट् । बभूवश्च ध्वमो धकारस्य वेड्वे इति ढः । व्यतिबभूवे, व्यतिबभूवाते, व्यतिबभूविरे, व्यतिबभूविषे, व्यतिबभूवाथे, व्यतिबभूविध्वे, व्यतिबभूविढ्वे । व्यतिबभूवे व्यतिबभूविवहे व्यतिबभूविमहे ।

६६५ । दयायास्कास्गुर्विजायनेकाचोऽनृच्छर्णोराम्कृभ्वसालिट्चानु । १ । ४ । ८३ । दयादिभ्यः गुर्विजादिर्येषां तेभ्यः अनेकाज्भ्यश्च धातुभ्यः ऋच्छत्यूर्णोतिवर्जितेभ्यः परस्य लिट आमादेशो भवति तस्य चामो लिडन्ताः कृभ्वस्तयोऽनुपश्चादनन्तरं प्रयुज्यन्ते । इत्यामादेशः ।

६६६। आमः कृञः १।४।४७। आमपरात् कृञः परस्य लकारस्य आमः प्राचः प्रकृतेः लस्येव तङो भवन्ति। इति लिटः तङः शेषं पूर्ववत्, लिटस्तझयोरेशिरे इत्यादिकार्यम्, इन्धो लिङ्डां घो ढ इति ढः किदसलिंटिरित्यादिना किद्भावादेट् न भवति। द्विर्भावरित्यादिना कृकृ इति द्विर्वचनम् आण् जभझष इत्या- ना पूर्वस्य ऋकारस्याकारः कुहोश्चुरिति चकार आस्वे इति ञ् आमि विदात् किदित्यामः किद्वद्वचनात् स्थानिवद्भावो भवतीति द्विर्वचनं न भवति आमः तस्वन्तामधण् तस्याङ्- स्वैसादिनाव्ययत्वादव्ययास्स्वौजस् इति सुः तस्य अव्यय- त्वेति इलुक् ततः स्थानिवद्भावेन पदत्वात् मम्मोहलि ताविति अनुस्वारः परस्वानुनासिको वा। एधांचक्रे, एधांचक्राते, एधांचक्रिरे। एधांचकृषे, एधांचक्राथे, एधांचकृढ्वे। एधांचक्रे, एधांचकृवहे, एधांचकृमहे। एधाम्बभूव, एधांबभूवतु, एधांबभूवुः। एधांबभूविथ, एधांबभूवथुः, एधांबभूव। एधांबभूव, एधांबभूविव, एधांबभूविम। असअस् इति- द्विर्वचने कृते—

६६७। हलोऽनादेः। ४। १। ८२। द्विर्भावे पूर्वस्य योऽनादिर्हल् तस्य लुग्भवतीति सकारस्य लुक्।

६६८। लिट्यादादेरतः। ४। १। १०५। लिटि गतोर्द्विर्भावे पूर्वस्यादेरकारस्याकारो भवति। पुनर्दीर्घः। एधामास एधामासतुः एधामासुः। एधामासिथ एधामासथुः एधामास। एधामास एधामासिव एधामासिम। ञ्णिलस्या इति दीर्घः।

६६९ । त्रप्फलिभजत्रश्रद्धकजृद्दादिददिशसिक्रुतस्यातोऽन्तर्हलोः । ४ । १ । ६२ ॥ त्रप् फलि भज् तॄ इत्येतेषयोऽकारः श्रट्कवर्गाद्यूहकारवकारादिददिशसिकृवर्जितानांद्वयोरसहाययोर्हलोरन्तर्मध्ये वर्तते तस्य इडादौ अपिति च लिटि परे एकारो भवति न च द्विः । स्मादयत्रव लिड्यनिटस्ततोऽन्येभ्यो लिट इड् भवत्येवेति नियमात् नित्यमिटि प्राप्ते थे ।

६७० । नित्यानिट्तासोऽत्वदृच्सृजदृशस्थे वाकृव्यात्तेः ४ । २ । १९० । नित्यानिट् तास् यस्यास्ति स नित्यानिट्तास् तस्मादकारवतः अजन्तात्सृज्दृशिभ्यांच विहिते थप्रत्यये इड् वा न भवति । वृङ्व्याऽत्ति इत्येतान् वर्जयित्वा । एतेभ्यो भवत्येवेत्यर्थः । चोः कुरिति कुत्वम् ।

६७१ । मिपोऽश् । १ । ४ । १०० । धातोर्लिटो मिपः अश् वा भवति णशोऽपवादः वावचनात् सोऽपि भवति । शेषं पूर्ववत् । पपाच, पेचतुः, पेचुः । पेचिथ, पपक्थ, पेचथुः, पेच पपच, पपाच, पेचिव, पेचिम । पेचे, पेचाते, पेचिरे पेचिषे, पेचाथे, पेचिध्वे । पेचे, पेचिवहे, पेचिमहे । ननन्द, ननन्दतुः, ननन्दुः, ननन्दिथ इत्यादि । दध्वंसे, दध्वंसाते, दध्वंसिरे इत्यादि ।

६७२ । इग्यत्रः साचोऽर्पाज्यम् । ४ । १ । १०८ । आज्या इत्यतो यो निर्दिश्यते धातुः तस्य लिटि द्विर्भावे पूर्वस्य साचः परेणाचा सहितस्य अरेफयकारपरस्य यत्रः स्थाने इगादेशो भवति । एचोऽच्ययवायाव् इत्यय् ञ्णित्यस्या इत्या-

ार: । अपिति किद्वल्लिटि इत्यादिना किद्वद्भाव: । इण्यादि-
यादिना यत्र इक् धातोरितकारकेत्यादिना यण्वादेश: । विव्याय
वेव्यतु: विव्यु: । विव्ययिथ विव्येथ, विव्यथु:, विव्य ।
विव्यय, विव्याय, विव्यिव, विव्यिम । विव्ये, विव्याते,
विव्यय, विव्याय, विव्यिव, विव्यिम । विव्ये, विव्याते,
विव्यिरे इत्यादि ।

६७३ । **लिटि वा** । ४ । २ । १२० । अदेर्लिटि
प्रत्यये घस्लादेशो वा भवति । ऌकार इत् द्विर्वचनम् हलो-
नादेरिति लुक् जश्त्वं च तस्य कुहोश्चुरिति जकार: । किति
द्विर्भावे कृते—

६७४ । **गमूहनूजनूखनघसोऽनङ्यचि लुक् क्ङि ।**
४ । १ । २२० । गमादीनामुपान्त्यस्याच: किति ङिति
चाङ्वर्जिते अजादौ प्रत्यये परे लुग्भवति । शास्व-
सिस्यादिना षि: चरिति चर्त्वम् । जघास, जक्षतु:,
जक्षु: । जघसिथ, जक्षथु:, जक्ष । जघस, जघास,
जक्षिव,जक्षिम । तङ्क्षु व्यतिजक्षे, व्यतिजक्षाते,व्यतिजक्षिरे।
व्यतिजक्षिषे, व्यतिजक्षाथे, व्यतिजक्षिध्वे इत्यादि । घस्ला-
देशाभावे लिट्यादादेरत इत्याकार: । आद, आदतु: आदु: ।
आदिथ, आदथु:, आद । आद, आदिव, आदिम । व्यत्यादे,
व्यत्यादाते, व्यत्यादिरे । व्यत्यादिषे इत्यादि । अतिशिश्ये,
अतिशिश्याते, अतिशिश्यिरे । अतिशिश्यिषे, अतिशिश्याथे,
अतिशिश्यिध्वे, अतिशिश्यिढ्वे । अतिशिश्ये, अतिशिश्यिवहे
अतिशिश्यिमहे । पूर्ववत् ब्रुवो वचि: साचो यत्र इक्प अतिति

इकि कृते दीर्घः । उवाच, ऊचतुः, ऊचुः । उवचिथ, उवक्थ, ऊचथु, ऊच । उवच, उवाच, ऊचिव, ऊचिम । ऊचे, ऊचाते, ऊचिरे । ऊचिषे, ऊचाथे, ऊचिध्वे । ऊचे, ऊचिवहे, ऊचिमहे । णशादिषु आदेशेषु कृतेषु पूर्वमेव द्विर्वचनम् पित्येत्वादेशौ आकारश्च क्ङिति उवादेशः । थे पक्षे इडागमः । वस्मसोः सादिनियमादिट् । जुहाव, जुहुवतुः जुहुवुः । जुहविथ, जुहोथ, जुहुवथुः, जुहुव । जुहाव, जुहव, जुहुविव, जुहुविम । तङि व्यतिजुहुवे, व्यतिजुहुवाते, व्यतिजुहुविरे । व्यतिजुहुविषे, व्यतिजुहुवाथे, व्यतिजुहुविध्वे, व्यतिजुहुविढ्वे । व्यतिजुहुवे, व्यतिजुहुविहे, व्यतिजुहुविमहे । पक्षे—

६७५ । भीन्हीभृहुवः श्लुवत् । । ४ । ८५ । भीही-भृहु इत्येतेभ्यः परस्य लिट आमादेशो भवति स च श्लुवत् ततश्चानन्तर कृभ्वस्लिट् चानुप्रयुज्यन्ते । श्लुपीवामि द्विर्वचन चुत्वजश्त्वयोः एङादेशौ कृञः फलेशे प्राप्तस्य तङः—

६७६ । न । १ । ४ । ४८ । आमः परात् कृञो ल-स्तङो न भवन्ति । इति प्रतिषेधः शेषं पूर्ववत् । जुहवाञ्चकार, जुहवाञ्चक्रतुः, जुहवाञ्चक्रुरित्यादि । व्यतिजुहवाञ्चक्रे, व्यतिजुहवाञ्चक्राते, व्यतिजुहवाञ्चक्रिरे इत्यादि ।

६७७ । इटि चातो लुक् । ४ । २ । ८४ । आकारान्तस्य धातोरिव्यजादौ क्ङिति स्यदिलप्रत्यये लुग्भवति । इति लुक् । जहे, जहाते, जहिरे इत्यादि ।

६७८ । णलेरौशातः । १ । ४ । ९९ । आकारान्ताद्धातोः लिटो णशमिपोरौशादेशो भवति । दधौ, दधतुः, दधुः । दधिथ, दधाथ, दधथुः, दध । दधौ, दधिव, दधिम । दधे, दधाते, दधिरे । दधिषे इत्यादि । द्विर्वचनादौ कृते एद् । दिदेव, दिदिवतुः, दिदिवुः । दिदेविथ, दिदिवथुः, दिदिव । दिदेव, दिदिविव, दिदिविम । व्यतिदिदिवे, व्यतिदिदिवाते, व्यतिदिदिविरे इत्यादि । सुपुवे, सुपुवाते, सुपुविरे । सुपुविषे, सुपुवाथे, सुपुविध्वे, सुपुविढ्वे । सुपुवे, सुपुविवहे, सुपुविमहे । ननाह, नेहतुः, नेहुः । नेहिथ, ननद्ध, नेहथुः, नेह । ननह, ननाह, नेहिव, नेहिम । नेहे, नेहाते, नेहिरे इत्यादि । णशादिषु कृतेषु द्विर्वचनादि पूर्ववत् शास्वसित्यादिना षत्वम् । सुषाव, सुषुवतुः, सुषुवुः । सुषविथ, सुषोथ, सुषुवथुः, सुषुव । सुषव, सुषाव, सुषुविव, सुषुविम । तङि सुषुवे, सुषुवाते, सुषुविरे । सुषुविषे, सुषुवाथे, सुषुविध्वे, सुषुविढ्वे । सुषुवे, सुषुविवहे, सुषुविमहे ।

६७९ । नक्चाश्न्वृदाद्यनेकहलः । ४ । १ । १०६ । अशौङ्लिस्य ऋकारादेरनेकहलश्च धातोर्लिटि द्विर्भावे पूर्वस्यादेः अकारस्याकारो भवति नक् चागमः । व्यानशे, व्यानशाते, व्यानशिरे इत्यादि ।

६८० । चेर्वा । ४ । १ । ७३ । चिनोतेर्धातोर्लिट्सनोः परतः द्विर्भावे पूर्वात् परस्य कुर्वा भवति । चिकाय, चिक्यतुः, चिक्युः । चिकयिथ, चिकेथ, चिक्यथुः, चिक्य ।

चिकय, चिकाय, चिक्यिव, चिक्यिम । कुत्वाभावे, चिचाय, चिच्यतुः, चिच्युः । चिचयिथ, चिचेथ, चिच्यथुः चिच्य । चिचय, चिचाय, चिच्यिव, चिच्यिम । चिक्ये, चिक्याते, चिक्यिरे इत्यादि । चिच्ये, चिच्याते, चिच्यिरे इत्यादि । थे नित्यानिट्त्वात इत्यादिना पक्षे इट् । वस्मसोः सादिनियमात् नित्यमिट् । चिक्राय, चिक्रियतुः, चिक्रियुः । चिक्रेथ, चिक्रयिथ, चिक्रियथुः, चिक्रिय । चिक्रय, चिक्राय, चिक्रियिव, चिक्रियिम । चिक्रिये चिक्रियाते, चिक्रियिरे । चिक्रियिषे, चिक्रियाथे, चिक्रियिढ्वे, चिक्रियिध्वे । चिक्रिये, चिक्रियिवहे चिक्रियिमहे । वव्रे, वव्राते, वव्रिरे । वव्रिषे, वव्राथे, ववृढ्वे । वव्रे, ववृवहे, ववृमहे । वशिव्यचिव्यधिजेरत्यादिना इक् । अनुजग्राह, अनुजगृहतुः, अनुजगृहुः । अनुजग्रहिथ इत्यादि । अनुजगृहे, अनुजगृहाते, अनुजगृहिरे इत्यादि । तुतोद, तुतुदतुः, तुतुदुः तुतोदिथ इत्यादि । तुतुदे, तुतुदाते, तुतुदिरे । तुतुदिषे इत्यादि ।

६८१ । ऋतः । ४ । २ । १९१ । ऋकारान्तात् एकाचो विहितस्य थस्येड् न भवति । ममार, मम्रतुः, मम्रुः । ममर्थ इत्यादि । मुमोच, मुमुचतुः, मुमुचुरित्यादि । मुमुचे, मुमुचाते, मुमुचिरे इत्यादि । ततान, तेनतुः, तेनुरित्यादि । तेने, तेनाते, तेनिरे । मेने, मेनाते, मेनिरे इत्यादि ।

६८२ । क्रञोऽसः । १ । २ । १९२ । असकारात्

कृञो विहितस्य थस्येड् न भवति । स्वादिनियमाच्च इडभावः चकार, चक्रतुः, चक्रुः । चकर्थ, चक्रथुः, चक्र । चकार, चकर चकृव, चकृम । चक्रे, चक्राते, चक्रिरे । चकृषे, चक्राथे, चकृढ्वे । चक्रे, चकृवहे, चकृमहे । तस्यैव संपूर्वस्य कृञः 'सङ्भूपासमवाये' इति सट् ।

६८३ । स्कृच्छृतः । ४ । २ । १२ । स्कृञ्ऋच्छोः ऋकारान्तानाञ्च धातूनामिकः लिटि अर् भवति ।

६८४ । लुक् खयि । ४ । १ । १८१ । द्विर्भावे पूर्वस्य खयि परतो लुग्भवति । सचस्कार, सचस्करतुः, संचस्करुः । सचस्करिथ, संचस्करथुः, संचस्कर । संचस्कर, सचस्कार, संचस्करिव, सचस्करिमः । सचस्करे, संचस्कराते, संचस्करिरे । संचस्करिषे, संचस्कराथे, संचस्करिढ्वे, सचस्करिध्वे । संचस्करे, संचस्करिवहे, संचस्करिमहे । स्वादिनियमादिट् । रुरोध, रुरुधतुः, रुरुधुः इत्यादि । रुरुधे, रुरुधाते, रुरुधिरे । रुरुधिषे इत्यादि । बुभुजे, बुभुजाते, बुभुजिरे इत्यादि । युयोज युयुजतुः युयुजुः इत्यादि । युयुजे युयुजाते, युयुजिरे इत्यादि । चोरयाञ्चकार, चोरयाञ्चक्रतुः, चोरयाञ्चक्रुः इत्यादि । छादयाञ्चक्रे, छादयाञ्चक्राते, छादयाञ्चक्रिरे इत्यादि । लक्षयाञ्चक्रे, लक्षयाञ्चक्राते, लक्षयाञ्चक्रिरे इत्यादि । योजयाञ्चकार, युयोज । अर्चयाञ्चकार, आनर्च । वारयाञ्चकार, ववार वव्रे इत्यादि । समपञ्चमुन्नेयम् ।

## अथ लुङ् दर्श्यते ।

भूते इति वर्तमाने—

६८५ । लुङ् । ४ । ३ । २०५ । भूतेऽर्थे वर्तमानाद्धातोर्लुङ् प्रत्ययो भवति । ङकार एङितो लुगिति विशेषणार्थः उकारः इञो लिलुङां धो ढ इति विशेषणार्थः । तत्र

६८६ । तास्स्यौ लुलृटोः । ४ । ३ । १ । लुलृ इत्येतयोः परतः यथासंख्यं मध्ये तास् स्य इत्येतौ प्रत्ययौ भवतः इति भवतस्तासोऽपवादः ।

६८७ । सिलुङि । ४ । ३ । २ । धातोर्लुङि परे मध्ये सिप्रत्ययो भवति । इकारः सावारैच इति विशेषणार्थः ।

६८८ । घुपाभूस्थेतेः श्लुक् । ४ । ' । ७३ । घुभ्यः पाभूस्थाभ्यः एतिभ्यां च परस्य सेरतङाने परे श्लुक् भवति । सि निमित्तीकृत्य स्थानिवद्भावात् सावारैच इत्यैच प्र प्तः श्लुचीगेनदिति नियमान्न भवति । लङ्लुङ्लृङ्क्ष्वमाङाट् इत्यादि । पूर्ववत् तिबादयः । एङितो लुगित्यादीनि ङिल्लकारकार्याणि तत्र पिस्सु अक्ङिदित्येङ् प्राप्तः—

६८९ । भूस्वोऽङ्रे: । ४ । २ । २० । भू सु इत्येतयोरद्विरुक्तयोः इकः लिवर्जितलादेशे परे एङ् न भवतीति प्रतिषेधात् न भवति । उवादेशे " लुङ्लिटिभुव " इत्युपान्त्यस्य ऊकारः । अभूत्, अभूताम्, अभूवन् । अभूः, अभूतम्, अभूत । अभूवम, अभूव, अभूम । तङ्क्षु सेः श्लुक् नास्ति तत्र सेरिट् ओत्वावादेशौ तक्रोऽन्त इति झकारस्य अत् ।

व्यत्यभविष्ट, व्यत्यभविषाताम्, व्यत्यभविषत । व्यत्यभविष्ठाः व्यत्यभविषाथाम् व्यत्यभविढ्वम् व्यत्यभविध्वम् । व्यत्यभविषि, व्यत्यभविष्वहि, व्यत्यभविष्महि ।

६९० । धि च । ४ । २ । ७८ । धातोर्धकारादौ प्रत्यये सकारस्य लुग्वा भवति । लुगभावे जश्त्वं दकारः । ऐधिष्ट, ऐधिषाताम्, ऐधिषत, ऐधिष्ठाः ऐधिषाथाम् ऐधिढ्ढ्वम्, ऐधिढ्वम् । ऐधिषि, ऐधिष्वहि, ऐधिष्महि ।

६९१ । हलाम् । ४ । २ । ६७ । हलन्तस्य धातोर्योऽक् तस्य अतङाने सौ आरैचो भवन्ति ।

६९२ । स्यसनेस्सोऽलः । ४ । २ । २७ । सिप्रत्यया-दन्येऽस्त्र धातोः सकारान्तात् परस्याकिङतो हलादेरलमात्रस्य ईडागमो भवति ।

६९३ । जल्हस्वाल्लुक्पस्तौ । ४ । २ । ७६ । जलन्तात् ह्रस्वान्ताच धातोः परस्य सेः सकारस्य तवर्गादौ प्रत्यये लुग्भवति । सिविद्ग्ज्ञेरभ्व इति जुम् । अपाक्षीत, अपाक्ताम्, अपाक्षुः । अपाक्षीः, अपाक्तम्, अपाक्त । अपाक्षम्, अपाक्ष्व, अपाक्ष्म । अपक्त, अपक्षाताम्, अपक्षत । अपक्थाः, अपक्षाथाम्, अपग्ध्वम् । अपक्षि, अपक्ष्वहि, अपक्ष्महि ।

६९४ । न क्षणश्वसिश्वजाग्रिदिन्मह्यश्च । ४ । २ । ७० । क्षणादीनामेदितो मह्यान्तस्य च धातोरिडादावतङानपरे सौ आरैचो न भवन्ति ।

६९५ । इटीटः । ४ । २ ।७७। इट उत्तरस्य से सकारस्य ईडादौ प्रत्यये परे लुग्भवति । दीर्घः । अनन्दीत्, अनन्दिष्टाम्, अनन्दिषुरित्यादि । अध्वंसिष्ट, अध्वसिषाताम्, अध्वंसिषत इत्यादि ।

६९६ । यमुरमुनमातां सक् च ।४।२।७२ । यम्-रम्-नमूभ्य आकारान्तेभ्यश्च धातुभ्यः परस्य सेरतङाने परे इडागमो भवति सक्चागमश्चैषाम् । अव्यासीत्, अव्यासिष्टाम्, अव्यासिषुरित्यादि । अव्यास्त, अव्यासाताम्, अव्यासत इत्यादि ।

६९७ । घस्लजघस्लुङ्सनि । ४ । २ । ११९ ॥ अदेर्धातोः अच्घञ्लुङ्सन् इत्येतेषु प्रत्ययेषु घस्लृ इत्ययमादेशो भवति । लृकारइत् ऋदितोऽतङि इत्यधिकृत्य—

६९८ । सर्तिशास्तिलिद्युत्पुष्यादेः । ४ । ३ ११ ।
सर्तिशास्तिभ्यां लृदितः द्युतादिभ्यः पुष्यादेश्च कर्तरि अतङि लुङिमध्ये अङ् नित्यं भवति । अघसत्, अघसताम्, अघसन् इत्यादि । तङि सिरेव ।

६९९ । तस्सिस्त्यदिस । ४ । २ । ८१ । धातोर्यादेशे इलवर्जिते च सकारादौ प्रत्यये सकारस्य तकारो भवति । ततस्सिलोपः । व्यत्यघत्त, व्यत्यघत्साताम्, व्यत्यघत्सत इत्यादि । अशयिष्ट, अशयिषाताम्, अशयिषत इत्यादि ।

७०० । वक्त्यख्याते: । ४ । ३ । १२ । वक्तीति वचपरिभाषणे ब्रूआदेशश्च असुक्षेपणे ख्यातीति ख्याप्रकथने

पक्षादेशश्च एतेभ्यो धातुभ्यः कर्तरि लुङि मध्ये अङ् भवति। ङकारोऽक्ङिदिति विशेषणार्थः ।

७०१ । श्वयत्यस्वचपतोऽङ्चथगुम्पम् । ४ । २ । ७ । श्वयतेः अस्यादीनां चाङि परे यथासंख्यं अन्, थट्, उम्, पम् इत्यादेशा भवन्तीति उमागमः । अवोचत्, अवोचताम्, अवोचन् इत्यादि । अवोचत, अवोचेताम्, अवोचन्त इत्यादि ।

७०२ । सावारैचः । ४ । २ । ६६ । धातोरकः अतङानपरे सौ परतः आरैचो भवन्ति। शेषं पूर्ववत्। अहौषीत्, अहौष्टाम्, अहौषु इत्यादि । व्यत्यहोष्ट, व्यत्यहोषाताम्, व्यत्यहोषत । व्यत्यहोष्ठाः, व्यत्यहोषाथाम्, व्यत्यहोढ्वम् । धि वेति यदा सकारस्य न लुक् तदा सकारस्य षकारः तस्य जपि जशिति डकारः। व्यत्यहोड्ढ्वम् । व्यत्यहोषि, व्यत्यहोष्वहि, व्यत्यहोष्महि । अहास्त, अहासाताम्, अहासत । इत्यादि । घुपेत्यादिना सेः श्लुक् ।

७०३ । आद्द्विषो झेर्जुस्वा ।१ । ४ । १०६ । आकारान्तात् द्विषश्च धातोः परस्य ङिल्लादेशस्य झेर्जुसादेशो वा भवति । अधात्, अधाताम्, अधुः अधान् । अधाः अधातम्, अधात । अधाम्, अधाव, अधाम ।

७०४ । घुस्थोरिच । ४ । १ । १६८ । घुस्थोरात इद् भवति तङि सकारादौ प्रत्यये परे किद्वच्च । जल्न्हस्वादित्यादिना सेर्लुक् । अधित, अधिषाताम्, अधिषत, अधिथाः,

अधिषाथाम्, अधिष्वम्। अधिषि, अधिष्वहि, अधिष्महि। तिपि सिपि च सेरिट् स्वस्तेस्सो ल इति ईट् च ईटीट इति लुक् ततो दीर्घ इति द्वयोर्दीर्घः। हलामित्यैच् सेर्लुचः स्थानिवद्भावेन प्राप्तः न क्षर्णशसित्यादिना प्रतिषेधात् न भवति। ह्रस्वस्य हल इत्येङ्। अदेवीत, अदेविष्टाम्, अदेविषुरित्यादि। व्यस्यदेविष्ट, व्यस्यदेविषाताम्, व्यस्यदेविषत, व्यस्यदेविष्ठाः इत्यादि। असविष्ट, असोष्ट इत्यादि। अनात्सीत्, अनाद्धाम्, अनात्सुरित्यादि। अनद्ध, अनत्साताम्, अनत्सत इत्यादि।

७०५। धूञ्सुस्तुभ्य इट। ४। २। ७१। धूञ्सुस्तुभ्यः परस्य सेरतङाने प्रे इडागमो भवति। असावीत्, असाविष्टाम्, असाविषुरित्यादि। तङि असोष्ट, असोषाताम्, असोषत इत्यादि। आशिष्ट, आशिषाताम्, आशिषत इत्यादि। इडभावे व्रश्चेत्यादिना परत्वम्। षढः कस्सीति ककारः जश्त्वष्टुत्वे। आष्ट आक्षाताम्, आक्षत। आष्ठाः, आक्षाथाम्, आड्ढ्वम्। आक्षि, आक्ष्वहि, आक्ष्महि। निरचैषीत, निरचैष्टाम्, निरचैषुः इत्यादि। समचेष्ट, समचेषाताम्, समचेषत इत्यादि। अकैषीत्, अकैषाताम्, अकैषुरित्यादि। अकैष्ट, अकैषाताम्, अकैषत इत्यादि। हल्भ्यामित्यादिना इड्विकल्पः।

७०६ ऋद्युर्वालतङ्सेः। ४। २। १३७। ऋकारान्तात् धृङ्वृञ्भ्याञ्च परस्य इटः ईड् वा भवति न चेत्स लिङि लिटि धतङ्परे सौ च भवति। अवरीष्ट, अवरी-

पाताम् इत्यादि । इट ईडभावे अवरिष्ट, अवरिषाताम् इत्यादि इडभावे एङरभावः सेश्च लुक् । अवृत, अवृषाताम्, अवृषत इत्यादि । ग्रह इत्यादिना इट ईट् न क्षणित्यादिना आरै भावः । अग्रहीत्, अग्रहीष्टाम्, अग्रहीषुरित्यादि । अग्रहीष्ट अग्रहीषाताम्, अग्रहीषतेत्यादि । अतङि हलामित्युकारस्यौकार तिप्सिपोः स्यस्तेस्सोल इति ईटि ततोडागमः दकारस्य चरि चर् ते जलन्हस्वात् लुक्सस्ताविति सकारस्य लुक् सेः स्थानिव द्भावात् ऐच् । अतौत्सीत्, अतौत्ताम् अतौत्सुः । अतौत्सीः अतौत्तम्, अतौत्त । अतौत्सम्, अतौत्स्व, अतौत्स्म । त हस्वस्य इल इत्येङ् सिलौ तङिति किद्वद्भावात् न भवति ते जल न्हस्वाल्लुक्सस्ताविति लुक् ध्वमि धि वेति पक्षे लुक् अलुकि सकारस्य जपि जशिति दकारः तस्य जरि जरः स्वे वेति लुक् अतुत्त, अतुत्साताम्, अतुत्सत । अतुत्थाः, अतुत्साथाम्, अ तुद्ध्वम्, अतुद्द्ध्वम् । अतुत्सि, अतुत्स्वहि, अतुत्स्महि अमृत, अमृषाताम्, अमृषत इत्यादि । सर्तीत्यादिनाङ् । अमु चत्, अमुचताम् इत्यादि । अमुक्त, अमुक्षाताम् इत्यादि ।

७०७ । वोर्णुश्हलादेर्लघोरिटि । ४ । २ । ६९ ।

ऊर्णुञः हलादेर्हलन्तस्य च धातोः लघोरकारस्य इडादावतङा सौ आरैचो वा भवन्ति । अतानीत्, अतानिष्टामित्यादि आकाराभावे अतनीत्, अतनिष्टामित्यादि । तङि तथासो परतः सेः ।

७०८ । तन्म्यस्थास्ते । ४ । २ । ७५ । तनादिभ्य

परस्य सेः ते थासि च प्रत्यये परे श्लुग्वा भवतीति श्लुक् श्लुचि कित्वात्—

७०९ । हन्मन्यरम्नम्गमनतितनादल्लुग्जलि । ४ । १ । २६१ । हनादीनां वनतेस्तनादीनां च धातूनां जलादौ क्ङिति प्रत्यये परे लुग्भवतीति नकारस्य लुक् । अतत अतनिष्ट, अतनिषाताम् , अतनिषत । अतथाः , अतनिष्ठाः अतनिषाथाम् , अतनिध्वम् । अतनिषि , अतनिष्वहि , अतनिष्महि । सेर्लुगादि पूर्ववत् । अमत, अमनिष्ट, अमनिषाताम् , अमनिषत । अमथाः, अमनिष्ठाः, अमनिषाथाम्, अमनिध्वम् इत्यादि । अकार्षीत्, अकार्ष्टाम्, अकार्षुरित्यादि । अकृत, अकृषातामित्यादि ।

७१० । ऋदितोऽत्वङि । ४ । ३ । १० । ऋदितो धातोः कर्तर्यतङि लुङि मध्ये अङ् वा भवति । पक्षे सिः तङि सिरेव । अतङि हलामिश्यैच् वङि सिलौ तङीति किद्भावात् एङ् न भवति । सर्वत्र सवर्गे जल् हस्वात् लुक् सस्वाविति सेर्लुक् । अरुधत्, अरुधताम् , अरुधन् । अरुधः, अरुधतम्, अरुधत । अरुधम् , अरुधाव, अरुधाम । अरौत्सीत्, अरौद्धाम् , अरौत्सुः । अरौत्सीः, अरौद्धम् , अरौद्ध । अरौत्सम् , अरौत्स्व, अरौत्स्म । अरुद्ध, अरुत्साताम् , अरुत्सत । अरुद्धाः, अरुत्साथाम् , अरुद्ध्वम् । अरुत्सि, अरुत्स्वहि, अरुत्स्महि । अभुक्त, अभुक्षाताम् , अभुक्षत इत्यादि । अयुजत् , अयुजतामित्यादि । अङभावे अयौक्षीत्

अयौक्तामित्यादि । प्रायुक्त, प्रायुक्षातामित्यादि। लुङि सेरपवादः।

७११ । कंश्रिद्रुश्रुणेर्ङः कर्तरि । ४ । ३ । ७ । कमादेर्ण्यन्ताच्च कर्तरि लुङि परे मध्ये ङो भवति । ङकारः द्विर्धातुः स्लुब्लिड्ङे इति विशेषणार्थः ।

७१२ । ङेऽशास्वग्नाश्यृदितः । ४ । १ । २११ । शासू अको नाशो निवृत्तिर्यस्यास्ति सोऽग्नाशी, ऋकार इयस्य सऋदित् एतद्वर्जितस्य धातोर्योऽच् तस्य ङपरे णौ परतः पूर्वभागोपान्त्यस्य ह्रस्वो भवति। ततो द्विर्धातुरित्यादिना द्विर्वचनम् ।

७१३ । आद्येकाच् । ४ । १ । ४४ । योऽनेकाच् धातुस्तस्यादिरेकाच्कोऽवयवः लिड्ङे द्विर्भवति हलोऽनादेरिति लुक् ।

७१४ । लघोर्दीर्घोऽनजादेः । ४ । १ । १०१ । ङपरेऽनग्लुचि णावनजादेर्धातोः द्विर्भावे पूर्वस्य लघोर्लघौ धात्वक्षरे परे दीर्घो भवति । णेरिक्तेत्यादिना णिलुक् अडागमः । अचूचुरत, अचूचुरताम्, अचूचुरन् । अचूचुरः, अचूचुरतम्, अचूचुरत । अचूचुरम्, अचूचुराव, अचूचुराम ।

७१५ । सन्वल्लघौ ङेऽनग्लुचि । ४ । १ । १०० । न विद्यते अकोलुग्यस्मिन् तस्मिन् णौ ङपरे द्विर्भावे पूर्वस्य लघौ धात्वक्षरे सनि द्विर्भावे पूर्वस्य यथा तथा कार्यं भवति। इति ।

७१६ । सन्यतः । ४ । १ । ९६ । धातोः सनि परे द्विर्भावे पूर्वस्याकारस्य इकारो भवतीति इत्वम् । लघोर्दीर्घोऽ

नजादेरिति दीर्घादन्तरङ्गत्वात् अजाङ्माङ इति छकारस्य द्वित्वम्। पुनर्लघुत्वाभावात् दीर्घो न भवति।

७१७। खरश्चर्। ४। १। ७९। द्विर्भावे पूर्वस्य यः खर् तस्य चरादेशो भवति। अचिच्छदत, अचिच्छदेताम् इत्यादि। अललक्षत, अललक्षतामित्यादि। अललक्षत, अललक्षेतामित्यादि। अयूयुजत, अयूयुजतामित्यादि। अयौक्षीत् अयौक्ताम् अयौक्षुरित्यादि।

७१८। ततः। ४। १। ४८। अनेकाचो धातोः अजादेः सन्यङन्तस्य लिङ्डेः पूर्वस्य चादेरचः पर एकाच् द्विर्भवति। आदेः द्विर्वचनापवादः।

७१९। न बन्द्रा वाचि। ४। १। ४९। आदेरचः परे बनदरेफाः वत्परा: सन्यङन्तस्य लिङ्डे परतः पूर्वस्य च न द्विर्भवन्ति। आर्चिचत्, आर्चिचताम् इत्यादि। आर्चिष्ट, आर्चिष्टामित्यादि। प्रावीवरत, प्रावीवरतामित्यादि। प्रावारीत्, प्रावारिष्टाम्, प्रावारिषुरित्यादि। प्रावृत, प्रावरिष्ट, प्राव-रीष्ट इत्यादि सप्रपंचमालक्ष्यम्।

---

## अथ लुडदाह्नियते।

गम्यादिर्वर्त्स्यतीति प्रस्तुत्य—

७२०। परिदेवनानद्यतने लुद्। ४। २। २८३। परिदेवने अनद्यतनेच भविष्यदर्थे वर्तमानाद्धातोर्लुड् भवति। ऌटोऽपवादः। परिदेवनमनुशोचनम् पश्चात्ताप इत्यर्थः।

टकार एटित इति विशेषणार्थः । उकारः लोराड्ढारौरस् इति विशेषणार्थः तास्यौलुलृरोरिति मध्ये तास् तस्य वलादेरित्यादिनेट् ततस्तिबादयः—

७२१ । ड्ढेः । १ । ४ । ९७ । टितो लकारस्य लुटः तिप तस् झि इत्येतेषां यथाक्रमं डारौरस् इत्येते आदेशा भवन्ति । षष्ठ्याः स्थानेऽन्तेऽल इति तिप इकारस्य डादेशे डित्यन्त्याजादेरिति आस्त इत्यस्य रूपस्य लोपः ।

७२२ । तासस्त्योः स्लि । ४ । २ । ७९ । तास् इत्येतस्य प्रत्ययस्य अस्तेश्च धातोः सकारस्य सकारादौ रेफादौ च प्रत्यये लुग्भवति ओत्वावादेशौ च । भविता, भवितारौ, भवितारः । भवितासि, भवितास्थः, भवितास्थ । भवितास्मि, भवितास्वः भवितास्मः । तङि—

७२३ । लोराड्ढारौरस् । १ । ४ । ९६ । लुट आदेशानां त आताम् झ इत्येतेषां यथाक्रमं डा रौ रस् इत्येते आदेशा भवन्ति । एटितः वहामो गेश् थास से पूर्ववत् ओत्वादि । डारौरसां स्थानिवद्भावात् एत्वं न भवति । थासःसे इत्येकारोच्चारणात् धि वेति पक्षे सकारस्य लुक् पक्षे जश्त्वम् ।

७२४ । एवि हः । ४ । २ । ८० । तासस्त्योः सकारस्य एकारादौ प्रत्यये हकारादेशो भवति । व्यतिभविता व्यतिभवितारौ व्यतिभवितारः । व्यतिभवितासे, व्यतिभवितासाथे, व्यतिभविताध्वे । व्यतिभविताहे, व्यतिभवितास्वहे, व्यतिभवितास्महे । एधिता, एधितारौ, एधितारः एधिता-

से इत्यादि । पक्ता । प्रनन्दिता । प्रध्वंसिता, संव्याता, अत्ता अविशयिता, वक्ता, होता, हाता, प्रनिपूर्वत्वम् ।

७२५ । नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु । ४ । २ । २४० । अदुरः उपसर्गादन्तरश्च परस्य नेः घुसंज्ञे मादिषु च परतो णो भवति । प्रणिधाता, देविता, सविता, सोता । हिनुमीनेत्यादिना णत्वम् परिणद्धा, अभिपोता, अशिता, अष्टा, चेता, क्रेता, वरिता, वरीता, ग्रहीता, तोत्ता, मर्ता, मोक्ता, तनिता, मनिता, अधिकर्ता, रोद्धा, भोक्ता, योक्ता, चोरयिता, छादयिता, लक्षयिता, योजयिता, योक्ता, अर्चयिता, अर्चिता, वारयिता, वरिता, वरीता इत्यादि सर्वमुन्नेयम् ।

## अथ लङुच्यते ।

७२६ । लिङ्निमित्ते लृङ् क्रियातिपत्तौ भूते च लृङ् । ४ । ४ । १०८ । लिङो निमित्तं कारणं सामग्री लिङ्निमित्तं, नास्य वृत्तिः निष्पत्तिरस्तीत्यवृत्तिरतिपत्तिमान् लिङ्निमित्ते, अवृत्तौ भूते वर्त्स्यति चार्थे वर्तमानाद्धातोः लृङ् प्रत्ययो भवति । ङकारः पङ्क्तितो लुगित्येवमर्थः । ऋकारः तारयौ लुङ्लोरिति सामान्यग्रहणार्थः मध्ये स्यप्रत्ययः इडोत्वावादेशाः अडागमः पूर्ववत्तिबादयः एङितो लुगित्यादीनि च ङिङ्गादेशकार्याणि अभविष्यत्, अभविष्यताम्, अभविष्यन् । अभविष्यः, अभविष्यतम्, अभविष्यत, अभविष्यम्, अभविष्याव,

अभविष्याम । पूर्ववत् तङ्क्षु व्यत्यभविष्यत, व्यत्यभविष्येताम्, व्यत्यभविष्यन्त । व्यत्यभविष्यथाः, व्यत्यभविष्येथाम्, व्यत्यभविष्यध्वम् । व्यत्यभविष्ये, व्यत्यभविष्यावहि व्यत्यभविष्यामहि । ऐधिष्यत, ऐधिष्येताम्, ऐधिष्यन्त इत्यादि । सर्वमुन्नेयम् ।

## अथ लृडुदाह्रियते ।

गम्यादिर्वत्स्यतीति प्रस्तुत्य—

७२७ । लृट् । ४ । ३ । २८२ । वत्स्यति भविष्यत्यर्थे वर्तमानाद्धातोः लृट् प्रत्ययो भवति । टकार एटित इत्येवमर्थः ऋकारस्तास्यौ लुलोरिति सामान्यग्रहणार्थः मध्ये स्यप्रत्ययः इडोत्वावादेशाः पूर्ववत् लस्य तिबादयः । भविष्यति, भविष्यतः भविष्यन्ति, भविष्यसि, भविष्यथः, भविष्यथ । भविष्यामि, भविष्यावः, भविष्यामः । व्यतिभविष्यते, व्यतिभविष्येते, व्यतिभविष्यन्ते । व्यतिभविष्यसे, व्यतिभविष्येथे, व्यतिभविष्यध्वे । व्यतिभविष्ये, व्यतिभविष्यावहे, व्यतिभविष्यामहे । एधिष्यते, एधिष्येते, एधिष्यन्ते, एधिष्यसे, एधिष्येथे, एधिष्यध्वे । एधिष्ये, एधिष्यावहे, एधिष्यामहे । पक्ष्यति, पक्ष्यते । नन्दिष्यति, ध्वंसिष्यते, व्यास्यति, व्यास्यते । अस्यति, व्यत्यस्यते, शयिष्यते, वक्ष्यति, वक्ष्यते । ह्रोष्यति, व्यतिह्रोष्यते । हास्यते, श्रद्धास्यति, श्रद्धास्यते । देविष्यति, व्यतिदेविष्यते, प्रमविष्यते, प्रसोष्यते । नत्स्यति, नत्स्यते,

अभिपोष्यति, अभिपोष्यते, अशिष्यते, अक्ष्यते। निश्चेष्यति, निश्चेष्यते। क्रेष्यति, क्रेष्यते। वरिष्यति, वरिष्यते। प्रहीष्यति, प्रहीष्यते। परितोत्स्यति, परितोत्स्यते।

७२८। ऋद्धनः स्ये। ४। २। १६६। ऋकारान्तात् हन्तेश्च परस्य स्यइलप्रत्ययस्य इडागमो स्ये परतः। मरिष्यति, मोक्ष्यति, मोक्ष्यते, तनिष्यति, तनिष्यते, मनिष्यते, करिष्यति, करिष्यते। रोत्स्यति, भोक्ष्यते, योक्ष्यति, योक्ष्यते, चोरयिष्यति, छादयिष्यते, लक्षयिष्यति, लक्षयिष्यते, योजयिष्यति, योक्ष्यति, अर्चयिष्यति, अर्चिष्यते, प्रवारयिष्यति, प्रवरिष्यति इत्यादि सर्वं सविस्तरमुन्नेयम्।

इति प्रक्रियापरिच्छेदस्तृतीयः।

---

## अथ भावकर्मकर्मकर्तृषु लिङादयः प्रयुज्यन्ते—

७२९। हनृदृशिग्रहजभ्यःसितासुस्यसटां ञिड् वा। ४। ३। १८। हनादिभ्यः अजन्तेभ्यश्च विहितानां कर्मभावविषयाणां सितासुस्यसटां ञिडागमो वा भवति। पक्षे इट् ञिटि ञिणत्यस्या इत्याकारः। भावे भाविषीष्ट, भविषीष्ट, देवदत्तेन। कर्मणि कर्मकर्तरि च अनुभाविषीष्ट, अनुभाविषीयास्ताम्, अनुभाविषीरन् इत्यादि। अनुभाविषीष्ट अनुभाविषीयास्ताम्। अनुभविषीरन् स्वयमेव इति सर्वं कर्तृतुल्यमुन्नेयम्। पृथिषीष्ट, पक्षीष्ट, नन्दिषीष्ट, ध्वंसिषीष्ट। ञिटि—

७१० । आतो यम् । ४ । १ । २३७ । आकारान्तस्य धातोः कृति ञ्णिति चीच परे यमागमो भवति । संव्यायिषीष्ट ञिडभावे संव्यासीष्ट, अत्सीष्ट, शायिषीष्ट, शायिषीष्ट, वक्षीष्ट, ह्वायिषीष्ट, ह्वोषीष्ट, ह्वायिषीष्ट, ह्वासीष्ट, धायिषीष्ट, धासीष्ट, देविषीष्ट, प्रस्ताविषीष्ट, प्रस्तविषीष्ट, प्रसोषीष्ट, नत्सीष्ट, अभिषाविषीष्ट, आभिषोषीष्ट, अशिषीष्ट, अक्षीष्ट, निश्चायिषीष्ट, निश्चेषीष्ट, कायिषीष्ट, क्रेषीष्ट, वारिषीष्ट, वरिषीष्ट, वृषीष्ट, ग्राहिषीष्ट, ग्रहीषीष्ट, तुत्सीष्ट, मारिषीष्ट मृषीष्ट, मुक्षीष्ट, तनिषीष्ट, मनिषीष्ट, कारिषीष्ट, कृषीष्ट, रुत्सीष्ट, युक्षीष्ट, चोरयिषीष्ट चोरिषीष्ट छादयिषीष्ट, छादिषीष्ट, लक्षयिषीष्ट, लक्षिषीष्ट, योजयिषीष्ट योजिषीष्ट, युक्षीष्ट, अर्चयिषीष्ट, अर्चिषीष्ट, प्रवारयिषीष्ट प्रवारिषीष्ट, प्रवरिषीष्ट, प्रवृषीष्ट, इत्यादि सर्वं प्रतिपत्तव्यम् ।

लिटि भावे बभूवे देवेन । कर्मणि कर्मकर्तरिच अनुबभूवे, अनुबभूवाते, अनुबभूविरे, इत्यादि । एधाञ्चक्रे, पेचे, ननन्दे, दध्वंसे, संविव्ये, आदे, जक्षे, शिश्ये, ऊचे, जुह्वाञ्चक्रे जुहुवे, जहे, व्यवदधे, दिदिवे, प्रसुषुवे, नेहे, अभिपुषुवे । आनशे, समुच्चिक्ये, समुच्चिचच्ये, चिक्रिये, वव्रे, जगृहे, तुतुदे, मम्रे, मुमुचे, तेने, मेने, चक्रे, रुरुधे, बुभुजे, युयुजे, चोरयाञ्चक्रे, छादयाञ्चक्रे, लक्षयाञ्चक्रे, योजयाञ्चक्रे, युयुजे, अर्चयाञ्चक्रे, आनर्चे, प्रवारयांचक्रे, प्रवव्रे, इत्यादि ।

पुरावत् लुङि भावे कर्मणि च तङि ते—

७३१ । कर्मभावे । ४ । ३ । १७ । धातोः कर्मणि भावे च लुङि तेपरे मध्ये ञिर्भवति । ञकारो ञेरिति विशेषणार्थः ।

७३२ । ञेः । ४ । २ । ३८ । धातोर्यो ञिस्ततः परस्य लिवर्जितलादेशस्य श्लुग् भवति । एडवादेशयोः कृतयोः ञ्णित्त्वया इत्याकारः अडागमश्च । अभावि देवेन । कर्मणि— अन्वभावि कम्बलो देवेन । कर्मकर्तरि— "कर्मण्यश्रुवादीनां कर्मवल्लिङ" इत्यतिदेशात् प्राप्तस्य ञेः—

७३३ । ञ्यजदुहः । ४ । ३ । ४० । अजन्तात् दुहेश्च धातोः कर्मकर्तरि ञिप्रत्ययो वा न भवतीति पक्षे ञिः पक्षे प्रतिषेधः । प्रतिषेधे सिः तस्य विकल्पेन ञिच्च ञिडभावे इट् । अन्वभावि, अन्वभाविष्ट, अन्वभविष्ट कम्बलः स्वयमेवेत्य-जन्तात् धातोस्ते कर्मकर्तरि त्रैरूप्यं द्रष्टव्यम् । आतामादौ कर्मणि कर्मकर्तरि च ञिड्भावाभावाभ्यां द्वेधा नीतिः अन्वभाविषाताम्, अन्वभाविषत । अन्वभाविष्ठाः अन्वभाविषाथाम् , अन्वभाविढ्वम् अन्वभाविध्वम् । अन्वभाविषि, अन्वभाविष्वहि, अन्वभाविष्महि । ञिडभावे सेरिट् अन्वभविषाताम् , अन्वभविषत अन्वभविष्ठाः, अन्वभविषाथाम्, अन्वभविढ्वम् , अन्वभविध्वम् । अन्वभविषि, अन्वभविष्वहि, अन्वभविष्महि । ऐधि, अपाचि, अपक्षाताम्, अनन्दि अध्वंसि, अध्वंसिषाताम् । अव्यायि, अव्यायिष्ट, अव्यास्त ।

अव्यायिषाताम् , अव्यासाताम् । अघासि, तसिसल्यइलीति तकारः । अघत्साताम्, अघत्सत । अघत्थाः । अशायि, अवाचि, अवक्षाताम् , अह्रावि, अह्राविष्ट, अह्रोष्ट, अह्राविषाताम् , अह्रोषाताम् । अह्रायि, अह्रायिष्ट, अह्रास्त, अह्रायिषाताम्, अह्रासाताम् । अधायि, अधायिष्ट अधित । अधायिषाताम् , अधिषाताम् , अदेवि, अदेविषाताम् । असावि, असाविष्ट, असविष्ट, असोष्ट । असाविषाताम्, असविषाताम् , असोषाताम् । अनाहि, अनत्साताम् । असावि, असाविष्ट, असोष्ट । असोषाताम् , असाविषाताम् । आशि, आशिषाताम् , आक्षाताम् । निरचायि, निरचायिष्ट, निरचेष्ट, निरचायिषाताम् , निरचेषाताम् । अक्रायि, अक्रायिष्ट, अक्रेष्ट । अक्रायिषाताम् , अक्रेषाताम् । अवारि, अवारिष्ट, अवरिष्ट, अवरीष्ट अवृत । अवारिषाताम्, अवरिषाताम्, अवरीषाताम्, अवृषाताम् । अग्राहि, अग्राहिषाताम् , अग्रहीषाताम् । अतोदि, अतुत्साताम् । अमारि, अमोचि, अमुक्षाताम् । अतानि, अतनिषाताम् । अमानि, अमनिषाताम् । अकारि, अकारिष्ट, अकृत । अकारिषाताम् , अकृषाताम् ।

७३४ । रुधः । ४ । ३ । ४१ । रुधेर्धातोः कर्मकर्तरि चिण्णिर्यं न भवति । इति कर्मकर्तरि चिणप्रतिषेधः । अरोधि अरुत्साताम् अरुद्ध गौः स्वयमेव । अमोजि, अभुक्षाताम् । अयोजि, अयुक्षाताम् । णिश्रिस्नुतडकर्मणः इति कर्मकर्तरि चेः प्रतिषेधः सिद् तु भवत्येव 'भूपार्थसन्दुहादीनां च णिंय-

क्' इत्यनेन चिटः प्रतिषेधो न भवति योगविभागात्, अचोरि, अचोरयिष्ट, अचोरयिषाताम् चिटि अचोरिषाताम्। अच्छादि, अच्छादयिषाताम्, अच्छादिषाताम्। अलक्षि, अलक्षयिषाताम्, अलक्षिषाताम्, अयोजि, अयोजयिषाताम् अयोजिषाताम् अयुक्षाताम्। आर्चि, आर्चयिषाताम् आर्चिषाताम्। प्रावारि, प्रावारयिषाताम्, प्रावारिषाताम् प्रावरिषाताम् प्रावरीषाताम्, प्रावृषाताम्, इत्यादि सर्वमालक्ष्यम्। लुटि—तासः पक्षे चिट्, पक्षे इट् पश्चादोत्वावादेशौ चिट्याकारः भाविता, भविता। कर्मणि कर्मकर्तरि च चिट् भावाभावाभ्या द्वैरूप्यम्। अनुभविता, अनुभाविता, एधिता, पक्ता, नन्दिता, ध्वसिता, संध्यायिता, संध्याता, अत्ता, शायिता, शयिता, वक्ता, हाविता, होता हायिता, हाता, परिधायिता, परिधाता, देविता, साविता सविता, सोता, परिणद्धा, स्नाविता, सोता, अशिता अष्टा, चायिता, चेता, क्रायिता, क्रेता, वारिता वरिता, वरीता, ग्राहिता, ग्रहीता, तोत्ता, मारिता, मर्ता, मोक्ता, तनिता, मनिता, कारिता, कर्त्ता, रोद्धा, भोक्ता, योक्ता, चोरयिता, चोरिता, छादयिता, छादिता, लक्षयिता, लक्षिता योजयिता, योजिता, योक्ता, अर्चयिता, अर्चिता, प्रवारयिता, प्रवारिता, प्रवरीता, प्रवरिता इत्यादि समालोच्यम्। लृङि—चिडभावाभावाभ्या द्विधा नीतिः अभाविष्यत, अभविष्यत देवेन। कर्मणि कर्मकर्तरि च अन्वभाविष्यत, अन्वभविष्यत। ऐधिष्यत, अपक्ष्यत इत्यादि लृट्तुल्यम् लृटि तु—भाविष्यत,

भविष्यते देवेन। कर्मणि कर्मकर्तरि च अनुभाविष्यते, अनुभविष्यते, एधिष्यते, पक्ष्यते, नन्दिष्यते, ध्वंसिष्यते, ध्यायिष्यते, ध्यास्यते, अस्यते, अतिशायिष्यते, अतिशयिष्यते, वक्ष्यते, ह्वायिष्यते, ह्वेष्यते, हायिष्यते, हास्यते, विधायिष्यते, विधास्यते, देविष्यते, साविष्यते, सविष्यते, सोष्यते, नत्स्यते, अभिषाविष्यते, अभिषोष्यते, अशिष्यते, अक्ष्यते, निश्चायिष्यते, निश्चेष्यते, क्रायिष्यते, क्रेष्यते, वारिष्यते, वरिष्यते, वरीष्यते, ग्राहिष्यते, ग्रहीष्यते, तोत्स्यते, मारिष्यते, मरिष्यते, मोक्ष्यते, तनिष्यते, मनिष्यते, कारिष्यते, करिष्यते, रोत्स्यते, भोक्ष्यते, योक्ष्यते, चोरयिष्यते, चोरिष्यते, छादयिष्यते, छादिष्यते, लक्षयिष्यते, लक्षिष्यते, योजयिष्यते, योजिष्यते, योक्ष्यते, अर्चयिष्यते, अर्चिष्यते, प्रवारयिष्यते, प्रवारिष्यते, प्रवरिष्यते प्रवरीष्यते इत्यादि सर्वं सप्रपञ्चमालोचनीयम्। इति भ्वादिपरिच्छेदश्चतुर्थः।

एवं परमप्रकृतेर्लकारा उदाहृताः प्रत्ययान्तादुदाह्रियन्ते। भृशमभीक्ष्णं वा भवतीति विग्रहे—

७३५। अट्याद्येकाज्हलादिभ्योऽरुचिशुभिभ्यां भृशाभीक्ष्ण्ये यङ्। ४। १। ४५। अप्रधानक्रियाणां साकल्येन संप्राप्तिः फलातिरेको वा भृशत्वम्। प्रधानक्रियायाः पौनःपुन्यमाभीक्ष्ण्यम्। अट्यादिभ्यः एकाज् यो हलादिर्धातुः तस्माच्च रुचिशुभिवर्जितात् भृशे आभीक्ष्ण्ये वा अर्थे यङ् प्रत्ययो वा भवति। ङकारो ङित्कार्यार्थः।

७३६ । सन्यङश्च । ४ । १ । ४५ । सनन्तस्य यङ-न्तस्य च धातोः अवयव आद्येकाच् द्विर्भवतीति भूय् इत्यस्य द्विरुक्तिः । हलोऽनादेरिति यकारस्य लुक् आण्जश्रञ्झपः इति भकारस्य बकारः ऊकारस्य चोकारः।

७३७ । ऐङ्गमिदाहाकोः । ४ । १ । ८६ । यङन्तस्य द्विर्भावे पूर्वस्यामितः अमिद्धाविनः आकारान्तस्य हाग्वर्जि-तस्य च आकारः एङादेशश्च भवति । ततः पूर्ववत् लडादयः तातांक्षेत्यादिना तङ् पूर्ववदेत्यादि । बोभू-यते, बोभूयेते, बोभूयन्ते । भावादौ यकि—

७३८ । अतः । ४ । २ । १०० । अदन्तस्य धातोः त्यदिलप्रत्यये लुग्भवति । इति अकारस्य लुक् । भावे बोभू-य्यते । कर्मणि कर्मकर्तरि च अनुबोभूय्यते, अनुबोभूय्येते । लङि—अबोभूयत अबोभूयेतामित्यादि । भावे अबोभूय्यत देवेन । कर्मणि कर्मकर्तरि च अन्वबोभूय्यत, अन्वबोभूय्येता-मित्यादि । लेटि—बोभूयताम्, बोभूयेताम् इति । भावे बोभूय्यतां देवेन । कर्मणि कर्मकर्तरि च अनुबोभूय्यताम्, अनुबोभूय्येताम् इति । लेङि--बोभूयेत, बोभूयेयाताम् इति भावे—बोभूय्येत देवेन । कर्मणि कर्मकर्तरि च अनुबोभूय्येत, अनुबोभूय्येयाताम् । लिङि बोभूयिषीष्ट, बोभूयिषीयास्ताम् इति । भावे--बोभूयिषीष्ट देवेन । कर्मणि कर्मकर्तरि च अनु-बोभूयिषीष्ट, अनुबोभूयिषीयास्ताम् इति । लिटि – दयायासि-त्यादिना लिट आमादेशः तस्यानन्तरं लिट्पराः कृभ्वस्त-

यश्च प्रयुज्यन्ते । शेषं पूर्ववत् । बोभूयांचक्रे, बोभूयाञ्चक्राते इति । बोभूयांबभूव, बोभूयांबभूवतुरिति । बोभूयामास, बोभूयामासतुरिति । भावे बोभूयांबभूवे देवेन अनुबोभूयांबभूवे, अनुबोभूयांबभूवाते इति । लुङि— अबोभूयिष्ट, अबोभूयिषाताम् । भावे अबोभूयि देवेन कर्मणि कर्मकर्तरिच अन्वबोभूयि, अन्वबोभूयिष्ट वा अन्वबोभूयिषाताम् इति । लुटि—बोभूयिता, बोभूयितारौ इति । भावे–बोभूयिता देवेन कर्मणिकर्मकर्तरि च अनुबोभूयिता, अनुबोभूयितारावित्ति । अत्र चिड्भावाभावकृतो विशेषो नास्ति स्यसिलकारादेशप्रत्यये विषयभूते अत इति लुचा भवितव्यम् । अत्राजन्तता नास्तीति चिट् न भवतीति इट् । भावेऽप्यतो लुचा भवितव्यम् तत्र चिडिटोः नास्ति विशेषः । लृङि–अबोभूयिष्यत, अबोभूयिष्येतामिति । भावे अबोभूयिष्यत । कर्मणि कर्मकर्तरिच अन्वबोभूयिष्यत अन्वबोभूयिष्येतामिति । लृटि बोभूयिष्यते इति । भावे बोभूयिष्यते । कर्मणि कर्मकर्तरिच अनुबोभूयिष्यते इति । एवं पापच्यते यकि अत इति अलुक् ।

७३९ । हलो यः । ४ । २ । ९८ । हलन्ताद्धातोः परस्य यकारस्य स्यसिलप्रत्यये विषये नित्यं लुग्भवति पापच्यते देवेन । अपापच्यत, पापच्यताम् , पापच्येत, पापचिषीष्ट, पापचाञ्चक्रे, अपापचिष्ट, अपापचि देवेन, पापचिता, अपापचिष्यत, पापचिष्यते । नानर्थते इति हलो नोऽनर्थेत्यादिना लुक् ।

७४० । वन्चस्रन्सध्वन्सभ्रन्सकस्पत्पदिस्कन्दामीम् । ४ । १ । ८७ । वन्चादीनां यङन्तानां द्विर्भावे पूर्वस्य नीमागमो भवति । दनीध्वस्यते ।

७४१ । स्वब्ज्यास्यमः । ४ । १ । ११९ । स्वप्-ब्ज्यास्यम् इत्येतेषां यकि प्रत्यये साचोऽर्यपरस्य वयइक् भवति संवेवीयते । ग्ययित्यत्र शाशय्यते यङः क्ङे इत्यादिना दीर्घः ।

७४२ । यङोऽकवतेः । ४ । १ । ८५ । यङन्तस्य द्विर्भावे पूर्वस्य कुहयोश्चुर्भवति न कवतेः । जोहूयते ।

७४३ । गृलुप्सद्दहजब्मचर्दशगत्यर्थाभ्यां गर्हाकुटिलयोः । ४ । १ । ११ । गृइत्येवमादिभ्यः गत्यर्थेभ्यश्च धातुभ्यो यथासंख्यं गर्हे कुटिले चार्थे यङ् प्रत्ययो भवति । जाहायते । ईहत्यप्ये इतीकारः अभिदेधीयते, देदीव्यते, देदीव्येते इत्यादि । भावे यकि तस्मिन् "अत" इति "हलो य" इति च लुक् । देदीव्यते देवेन । लिट्यामादेशे धातोर्म्नीगित्यादिना दीर्घस्य परस्मिन् असत्त्वात् देदिव् य आम् इत्यवस्थिते "अतः" इति "हलो यः" इति च लुक्, अत इति लुगादेशस्य परेऽचः प्राच इति स्थानिवद्भावात् एङ् न भवति देदिवाञ्चक्रे, सोपूयते, नानद्यते, चेचीयते, चेक्रीयते यङ्लेढित्यादिना री इत्यादेशः । चेक्रीयते । वशिव्यचीत्यादिना इक्—

७४४ । रीमृत्वताम् । ४ । १ । ९३ । ऋकारवतो धातोर्यङन्तस्य द्विर्भावे पूर्वस्य रीमागमो भवति । जरीगृह्यते,

तोतुद्यते, अतोतुद्यत, तोतुद्यताम्, तोतुद्येत, तोतुदिषीष्ट, तोतुदाञ्चक्रे, अतोतुदिष्ट, तोतुदिता, अतोतुदिष्यत, तोतुदिष्यते यङ्लेङ्लित्यादिना री इत्यादेशः मेम्रीयते मोमुच्यते।

७४५। अतोऽनुनासिकस्य मम्। ४। १। ८८। अकारात् परो योऽनुनासिकस्तदन्तस्य धातोर्यङन्तस्य द्विर्भावे पूर्वस्य ममागमो भवति। तस्य मम्मोहलितावित्यनुस्वारः परसवो वा तन्तन्यते, मम्मन्यते, चेक्रीयते, रोरुध्यते, बोभुज्यते, योयुज्यते इत्यादि सर्वं प्रागिव नेतव्यम्। अपि च।

७४६। श्लुग्बहुलम्। ४। १। १२। यङः श्लुग्बहुलं भवति पुनः स्थानिवद्भावेन द्विर्वचनादि ततो लडादयः। चर्करीतञ्चेत्यदादिषु पाठात् यङश्लुगन्तस्यादादित्वम् तेन शपः श्लुर्भवति। डिञ्चीदित इति च तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च। यत्रैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्श्लुचि ॥ १ ॥ इति च यङो ङित्वेन स्थानिवद्भावेन तङ् न भवति। लोऽन्त्येत्यादिना तिबादयः पित्सु ब्रुव ईडित्यधिकृत्य—

७४७। यङ्तुरुस्तोर्बहुलम्। ४। २। २६। यङन्तात् तुरुस्तुभ्यश्च धातुभ्यः परस्याकिङतो हलादेर्लिवर्जितलादेशस्य बहुलमीडागमो भवति। अकिङदित्येङ् अपिनि श्लयलाविति ङिद्वद्भावात् एङ् न भवति। द्युक्तिजक्षपञ्चतोऽत् इति झकारस्य अत। बोभवीति, बोभोति, बोभूतः, बोभुवति। बोभवीषि, बोभोषि, बोभूथः, बोभूथ। बोभवीमि, बोभोमि, बोभूवः, बोभूमः। अबोभवीत, अबोभोत. अबोभ-

ताम् । सिविदञ्झेरभ्व इति झेर्जुस्, जुस्यक्येडरित्योत्वमवादेशः अबोभवुः । अबोभवीः, अबोभूः, अबोभूतम्, अबोभूत, अबोभवम्, अबोभूव, अबोभूम। बोभोतु, बोभूतात् तादादेशे च हिचाविरयपित्वादेङिटौ न स्तः बोभवीतु वा, बोभूताम्, बोभुवतु । बोभूहि, बोभूताद्वा, बोभूतम्, बोभूत । बोभवानि, बोभवाव, बोभवाम । बोभूयात्, बोभूयाताम्, बोभूयुः इति । बोभूयते देवेनेत्यादि। बोभूयात्, बोभूयास्ताम्, बोभूयासुः इति ।

लिटः प्रकृतेरतङ्भावात् करोतेरप्यतङ एव बोभवाञ्चकार, बोभवांचक्रतुः, बोभवाञ्चक्रुः इति । सेरिट् स्यस्तेस्सोल इति ईट् ईटीटः इति सेर्लुक् सावारैच इति औकारः आवादेशो अडागमश्च,' सिविदञ्झेरभ्व इति झेर्जुस्, अबोभावीत्, अबोभाविष्टाम्, अबोभाविषुः अबोभावीरिति प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति क्वचिन्न सर्वत्र विज्ञायते इति घुपाभूस्थैतेः श्लुगिति श्लुक् न भवति—

" धातोः प्रतिपदोक्तानि सानुबन्धकृतानि च ।
यङ्लुगन्तस्य नेष्टानि संख्यागणकृतानि च ॥ १ ॥ "

इतीह केचित् पठन्ति अपरे पुनरत्र भवत्येव श्लुक् अबोभूत्, अबोभूताम्, अबोभवुरित्याहुः । बोभविता, बोभवितारौ इति । अबोभविष्यत्, अबोभविष्यताम्, अबोभविष्यन् इति । बोभविष्यति, बोभविष्यतः, बोभविष्यन्ति । ईडादि च पापचीति पापक्ति वा, पापक्तः, पापचति। पापचीषि पापक्षि वा पापक्थः, पापक्थ । पापचीमि, पापच्मि, पापच्वः,

पापच्मः। इति यथासंभवमुन्नेयम्। तथा नानन्दीति, नानन्ति वा, नानन्तः इति। दनीध्वसीति, जोहोति, जोहवीति वा। जोहुतः। केचित् प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति ह्विणोऽचीकः श्लेले यण् इति यणमाहुः। जोह्वति। केचित्तु धातोः प्रतिपदोक्तानि सानुबन्धकृतानि च यङ्लुगन्तस्य नेष्टानि इति यणादेशो न भवत्युवादेश एव भवतीत्याहुः। जोहुवति। एवं लेटि सिपि जल्होर्हीधिरिति धित्वम् दर्शन-भेदेन जोहुधि जोहुहि इति च भवति।

७४८। ह्युक्तेर्नाचिल्पलौ। ४। १। १९। द्विरुक्तस्य हलन्तस्य, धातोरिकः अजादौ लिवर्जितलादेशे परे एङरौ न भवतः। देदिवीति। इडभावे न्दृस्वस्य हल इत्येडि सति लुग्व्योर्वल्काविति वकारस्य लुक्। देदेति। शूच्छ्वोऽनुनासिके चेत्यत्र क्विजलिक्ङिल्यनुनासिक इत्यतः क्विजलि इत्येवा-नुवर्तयन्ति न ङ्किति ततोऽत्राप्येडि यन्चि कृते दद्योतीति भवतीत्याहुः। देदेवाञ्चकार। विदात किद्वचनादामि किरकार्यं नेत्यलाविति च वचनात् ह्युक्तेनाचीति प्रतिषेधात् नेत्येह् भवत्येव सोषोति, सोषवीति, चेकेति, चेक्रयीति, चेक्रीतः, चेक्रियति इति।

७४९। रमुरिम् च श्लुचि। ४। १। ९३। ऋत्वतो धातोर्यङ श्लुचि सत्यां द्विर्भावे पूर्वस्य रम् रिम् रीम् च आगमा भवन्ति। जर्गृहीति, जरिगृहीति, जरीगृहीति। ईडभावे "हः" इति ढकारः अध इति धकारः ष्टुत्वम् ढ्रेढ्रि इति लुक्। जर्गाढि,

जरिगर्ढि, जरीगर्ढि इति। तोतोत्ति, तोतुदीति ईटि ह्रस्वस्य हल इत्वेडः द्व्युक्तेर्नाचित्यलाविति प्रतिषेधः । तोतुत्तः, तोतुदति, अतोतोत्। तिपः ला इति लुक् । अतोतुदीत्, अतोतुत्ताम्, अतोतुदुः इति सिविदञ्जेरभ्व इति जुस्। सिपि अतोतोत् अतोतोः ला इति सिपो लुचि सिपि दश्च वेति पक्षे रिः विसर्जनीयश्च अतोतुदीरिति । तोतोत्तु, तोतुदीतु इति । तोतुद्यात् तोतुद्याताम्, तोतुद्युः इति । तोतुद्यात्, तोतुद्यास्ताम्, तोतुद्यासुः इति। तोतोदाञ्चकार अतोतोदीत् अतोतोदिष्टाम् अतोतोदिषुरिति । तोतोदिता, अतोतोदिष्यत्, तोतोदिष्यति, मर्मर्ति, मरीमर्ति, मरिमर्ति, मर्मरीति, मरिमरीति, मरीमरीति । तन्तनीति, तन्तन्ति, तन्तान्तः क्विजलिक्ङिरयनुनासिके इति दीर्घः हन्मन्यंरंगम्नम्वनतितनादेर्लुक् जलीति लुक् यङ्श्लुचि न भवति—तिपा शपानुबन्धेनेत्यादीह पठन्ति। तथा, धातोः प्रतिपदोक्तानि सानुबन्धकृतानिच । यङ्लुगन्तस्य नेष्टानि संख्यागणकृतानि चेति । तन्तनति, तन्तनीषि, तन्तान्थः, तन्तान्थ, तन्तनीमि, तन्तन्मि, तन्तन्वः, तन्तन्मः । एवमन्यदपि नेयम् । सौ वोर्णुमृहलादेर्घोरिटीति पक्षे आकारे अतन्तनीत्, अतन्तानीत् इति । चर्करीति, चरिकरीति, चरीकरीति, चर्कर्ति, चरिकर्ति, चरीकर्ति । वर्वर्ति, वरिवर्ति, वरीवर्ति । गृधू अभिकांक्षायां जर्गर्धि, जर्गृधीति, ति । लङि अजर्गृधीत्। ईडभावे ह्रस्वस्य हल इत्यर् ला इति द्नि भष्भावः अजर्धर्त्, अजर्गृद्धाम्, अजर्गृधुः । अजर्गृधीः

इडभावे ह्रस्वस्य हल इति अर् भष्भावः ततो धकारस्य जश्त्वे सिपि दश्च वेति रिः पूर्वस्य रेफस्य ढ्रोढ्रीति लुक् ढ्रलुच्यण इति दीर्घः । अजर्धाः अजर्धर्त्, अजर्गृद्धम्, अजर्गृद्ध इति । रोरोद्धि, रोरुधीति, रोरुद्धः, रोरुद्ध । रोरुधीपि, रोरोत्सि, रोरुद्धः रोरुद्ध । रोरोध्मि रोरुधीमि, रोरुध्वः, रोरुध्मः इत्यादि सर्वं प्रयोगमनुसृत्य प्रयोक्तव्यम् ।

॥ इति यङ्प्रकरणम् ॥

भवति कश्चित् तं भवन्तं भवेति तद्भवनं वा प्रयोजयतीति विग्रहे—

७५० । प्रयुज्याप्यार्थाण्णिञ्। ४ । १ । १५ । प्रयुज्याप्यार्थाद्धातोः प्रयुज्येर्थे णिञ् वा भवति । प्रयोगः प्रवृत्तिकरणं प्रेरणम् । णकारो ञ्णिन्त्यस्या इति विशेषणार्थः ञकारो णेरिति सामान्यग्रहणार्थः अकिडदित्योकारः ततोऽयादेशे ञ्णिन्त्यस्या इत्याकारः ततः क्रियार्थो धातुरिति धातुत्वे पूर्ववल्लडादयः तत्र शप्येङयादेशौ । भावयति, भावयतः, भावयन्ति । फलेशे कर्तरि विवक्षिते—

७५१ । धेट्पाद्मायमायस्परिमुहरुचिनृतिवद्वस्यच - ल्यर्थेङ् प्रु द्रु स्रु बुध युध नशजनः फलेशे पदाद्प्रते तु वा १ । ४ । ६५ । धेट् पा अद् दम् आयम् आयस् परिमुहरुचिनृतिवद्वस् इत्येतेभ्यः चल्यर्थेङ् प्रुद्रुस्रु बुध युध नश्जनवर्जितेभ्यश्च धातुभ्यः परस्य णिनः फलेशे कर्तरि वर्तमानस्य लकारस्य स्थाने पूर्ववत्तङो भवन्ति । पदान्तरात्तु प्रतीते फले-

शत्वे वा भवन्ति । भावयते, भावयेते, भावयन्ते इति । भावे यकि णेरनिटीत्यादिना णेर्लोपः । भाव्यते देवेन । कर्मणि भाव्यते कम्बलो देवेन । भाव्येते भाव्यन्ते इति । कर्मकर्तरि ।

७५२ । भूषार्थसन्नन्तकिरादीनां च चिण्यकौ । ४ । ३ । ४४ । भूषार्थानां सन्नन्तानां दुहादीनां ण्यन्तानां श्रिन्तु इत्येतयोः तद्वत्कर्मणाञ्च धातूनां कर्मकर्तरि चिः चिट् यक् च प्रत्ययौ न भवतीति यकः प्रतिषेधात् ण्यन्तात् शवेव भावयते स्वयमेव, भावयेते, भावयन्ते इति । अभावयत, अभावयताम्, अभावयन् इति । अभावयत, अभावयेताम्, अभावयन्त इति । भावे अभाव्यत देवेन । कर्मणि अभाव्यत अभाव्येताम् अभाव्यन्त इति । कर्मकर्तरि अभावयत, अभावयेताम्, अभावयन्त स्वयमेव इति । लेटि—भावयतु भावयतात् वा भावयताम्, भावयन्तु । भावयताम्, भावयेताम्, भावयन्ताम् इति । भावे भाव्यताम् देवेन । कर्मणि भाव्यताम्, भाव्येताम् इति । कर्मकर्तरि भावयतां कम्बलः स्वयमेव भावयेताम् भावयन्ताम् इति । लेटि--भावयेत् भावयेताम् भावयेयुः इति । भावयेत, भावयेयाताम्, भावयेरन् इति । भावे भाव्येत देवेन । कर्मणि भाव्येत, भाव्येयाताम् इति । कर्मकर्तरि भावयेत, भावयेयातां स्वयमेवेति । लिङि यकासति णेर्लुक् भाव्यात्, भाव्यास्ताम्, भाव्यासुरिति टीय् सति इट्णेः एद् अपादितः भावयिषीष्ट, भावयिषीयास्ताम्, भावयिषीरन् इति । भावाशो यदा चिट तदा णेर्लुक् अन्यत्र णेरेक्या-

देशश्च । भावे भाविषीष्ट, भावयिषीष्ट देवेन । कर्मणि कर्मकर्तरि च भाविषीष्ट, भाविषीयास्ताम्, भाविषीरन् इति । भावयिषीष्ट, भावयिषीयास्ताम्, भावयिषीरन् इति । लिटि— लिट आमादेशे भावयाञ्चकार, भावयाञ्चक्रतुः, भावयाञ्चक्रुः इति । भावयांचक्रे, भावयांचक्राते, भावयांचक्रिरे इति । भावे भावयाञ्चक्रे देवेन । कर्मणि कर्मकर्तरि च भावयांचक्रे, भावयाञ्चक्राते, भावयांचक्रिरे इति । भ्वस्त्योः भावयाम्बभूव, भावयामास इत्यतङ् एव कर्तरि । भावे—भावयांबभूवे, भावयामाहे देवेन । एतिह इति हकारः । कर्मणि कर्मकर्तरि च भावयांबभूवे, भावयांबभूवाते इति । भावयामाहे भावयामासाते इति । लुङि —कंश्रिद्रुस्रुणेर्ङः कर्तरि इति । ङप्रत्ययः । ङकारः द्विधातुः श्लुवूलिङ्ङे इति विशेषणार्थः भावि अत् इतिस्थिते अत्र दीर्घ इति प्राप्तस्तदपवादोऽस्वे इति यत्रादेशः प्राप्तः तदपवादो भूहलुइनोश्चेयुवाविति 'इयादेशः प्राप्तः तदपवादः प्रत्ययेऽसुधीण इति यत्रादेशः प्राप्तः तदपवादो णेर्लोपः प्राप्तः एवं प्राप्तौ द्विर्धातुरित्यादिनापि प्राग्वचनात् पूर्वमेव द्विर्वचनम् । ततो णेर्लुक् तत्र "ओः पुयञ्ज्ये" इत्यवर्णपरेषु पवर्गयञ्जिद्विर्भावे पूर्वस्योवर्णस्येत्वशासनात् णौ कृतस्यात्र स्थानिवत्त्वे स्थानिरूपस्य भूभू इति द्विर्वचनम् ततो णौ ओत्वादि आणुजश्रज्झप इत्युकारवकारौ, ङेऽशास्वग्नाद्यृदित इत्युपान्त्यस्य ह्रस्वशासनात् णेर्लुक् स्थानिवद्भावः तत्र बुभाव इतिस्थिते ङेऽशास्वग्नाद्यृदित इति ह्रस्वः ततः

सन्वल्लघौ ङ्ङनग्लुचीति सन्वद्भावात्—

७५३। ओः पुयण्ज्ये। ४। १। ९७। सनि परे द्विर्भावे पूर्वस्य उवर्णस्य पवर्गे यञि जकारे अवर्णपरे इकारादेशो भवतीति इकारः। लघोर्दीर्घोऽनजादेरिति दीर्घः। अडागमश्च। अबीभवत, अबीभवताम्, अबीभवन्। अबीभवः, अबीभवतम्, अबीभवत। अबीभवम्, अबीभवाव, अबीभवाम। अबीभवत, अबीभवेताम्, अबीभवन्त इति। भावे कर्मणि च ते "कर्मभावे" इति ञिः आतामादौ सिङ्कीति सिः तत्र ञिङ्भावाभावाभ्यां द्वैरूप्यं भावे अभावि देवेन। कर्मणि अभावि, अभाविषाताम्, अभाविषत। अभाविष्ठाः, अभाविषाथाम्, अभाविढ्ढ्वम्, अभाविड्वम्। अभाविषि, अभाविष्वहि, अभाविष्महि इति ञिटि। ञिङभावे अभावयिषाताम्, अभावयिषत। अभावयिष्ठाः इति। कर्मकर्तरि ङ एव भवति। अबीभवत कटः स्वयमेव। अबीभवेताम्, अबीभवन्त। लुटि— भावयिता, भावयितारौ, भावयितारः। भावयितासि इति। भावयिता, भावयितारौ, भावयितारः भावयितासे इति। भावे भाविता, भावयिता देवेन। कर्मकर्तरि णिश्रिस्नुतङ्कर्मणः इति ञेः पृथक्प्रतिषेधात् भूषार्थसन्दुहादीनां च नियमिति प्रतिषेधे णिश्रिस्नुतङ्कर्मणां ञिप्रतिषेधो न भवति। ञिञिटः प्रतिषेधो न भवतीत्यर्थः यक एव प्रतिषेधः इति ञिट् भवत्येव। लृङि—अभावयिष्यत्, अभावयिष्यताम्, अभावयिष्यन्। अभावयिष्यत, अभावे-

यिष्येताम्, अभावयिष्यन्त इति। भावकर्मकर्मकर्तृषु जिङ्भावाभावाभ्यां द्विधा नीतिः अभाविष्यत, अभावयिष्यत देवेन। अभावयिष्यत, अभावयिष्येताम्, अभावयिष्यन्त इति। भावयिष्यति, भावयिष्यतः, भावयिष्यन्ति इति। भावयिष्यते, भावयिष्येते, भावयिष्यन्ते इति। भावे कर्मणि कर्मकर्तरि च जिड्भावाभावाभ्यां द्विधा नीतिः भाविष्यते, भावयिष्यते देवेन। कर्मणि कर्मकर्तरि च भाविष्यते, भाविष्येते, भाविष्यन्ते इति। भावयिष्यते, भावयिष्येते, भावयिष्यन्ते इति। तथा एधयति, एधयते, ऐदिधत्। पाचयति, अपीपचत्। नन्दयति, अननन्दत्। प्रध्वंसयति, प्राद्ध्वंसत।

७५४। वेञ्यापाह्वशाच्छासो यिक्। ४। १। २००। वेञादीनां णौ यिगागमो भवति। संव्याययति। समविव्यत्। अदन्तं प्रयोजयति इति णिच्। आदयति, आदयते। भावादौ आद्यते। आदयतु, आदयत, आदयेत्, आद्यात् आदयांचकार आदयांचक्रे। कश्रिद्रुसुणिङः कर्तरीति ङः तत्र ओण्यादिऋदित्करणात् सत्यपि प्राक्स्वच्यच इत्यस्मिन् द्विर्धातुरित्यादिना द्विर्वचनात् प्रागेव ङेऽशास्वग्लाद्यृदित इत्युपान्त्यस्याकारस्य ह्रस्वः अन्यथा माङ्योगे माभवानदीदत् इति न स्यात्। तत्र ह्रस्वे कृते दिदि इति द्विर्वचनं ततो णेलुर्क् आरैजाद्यच इत्याकारः। आदिदत्, आदिदताम्, आदिदन् इत्यादि। आदिदत, आदिदेताम्, आदिदन्त इति। कर्मकर्तर्यपि एतान्येव रूपाणि। भावे

आदि देवेन । कर्मणि आदिवाताम्, आदयिषाताम् इति । आदयिता, आदयिष्यत्, आदयिष्यत इति। भावे आदिष्यत, आदयिष्यत इति । कर्मकर्मकर्त्रोः आदयिष्यत, आदिष्यत, आदिष्येताम्, आदयिष्येताम् इति । आदयिष्यति, आदयिष्यते। अतिशाययति, अशशीशयत् । वाचयति, अवीवचत् । ह्वाययति, अजूहवत ।

७५५ । न्हीव्लीरीक्नूयीक्ष्माय्यत्वीतां पक् । ४ । १ । २०१ । न्हियादेरादन्तस्य च पक् भवति । ह्रापयति, अजीह्रपत्, श्रद्धापयति, अददीपत्, देवयति । लुङि—देवि अत् इति स्थिते ङेऽशास्वग्नाद्यृदितः इत्येकारस्य इकारः । ततो दिव् दिव् इति द्विर्वचनम् हलोऽनादेरिति लुक् लघोर्दीर्घोऽनजादेरिति दीर्घः णेर्लुगडागमः । अदीदिवत् । भावे अदेवि देवेन कर्मणि अदेवि, अदेविषाताम् अदेविषत इति । कर्मकर्तरि अदीदिवत अक्षः स्वयमेव, अदीदिवेताम्, अदीदिवन्त इति । सावयति, असूषुवत् । सन्नाहयति, ससनीनहत्, सावयति, असूषवत्, आशयति, आशिशत् ।

७५६ । चिस्फुरोर्वा । ४ । १ । १९३ । चिस्फुरोर्धात्वोः एचः णौ आकारो वा भवति ततः पक् । निश्चापयति, निश्चाययति, निरचीचपत् निरचीचयत् ।

७५७ । क्रीङ्जेः । ४ । १ । १८९ । क्रीङ्जीनां णौ परे आकारो भवति । ततः पक् क्रापयति, अक्रापयत, क्रापयाञ्चकार क्रापयांचक्रे । लुङि—ङेऽशास्वग्नाद्यश्वित

इत्यकारः ततो द्विर्वचनम् हलोऽनादेरिति लुक् चुत्वम् । सन्वल्लघौ ङेऽनग्लुचीति सन्वद्भावात् सन्यत इतीत्वम् णेर्लुगडागमः अचिक्रपत्, अचिक्रपत । लृङि अक्रापयिष्यत्, अक्रापयिष्यत । वारयति, अवीवरत् । ग्राहयति, अजिग्रहत । तोदयति, तोदयते । लुङि ओकारस्य उकारे कृते द्विर्वचनमुकारस्य ऊकारः अतूतुदत् अतूतुदत । मारयति, अमीमरत् । मोचयति, अमूमुचत् । वितानयति, व्यतीतनत्, मानयति, अमीमनत्, कारयति, अचीकरत् । रोधयति, अरूरुधत् । भोजयति, अबूभुजत् । प्रयोजयति, प्रायूयुजत् । चोरि इत्यतः णिञ्णिचः णेरित्क्वेत्यादिना लुक् चोरयति, चोरयते, अचूचुरत् । छादयति, अचिच्छदत् । लक्षयति, अललक्षत् । योजयति, अयूयुजत्, अर्चयति आर्चिचत् । वारयति, अवीवरत् इत्यादि ज्ञेयम् ।

७१८। घटादिकगेवनूजनैज्रूष्क्नसुरञ्जयमोऽकमिचम्यम्यपपरिस्खद उपान्त्यस्याचोऽणमुञ्णौ तु दीर्घो वा । ४ । १ । २०२ । अपपरिपूर्वस्खदवर्जितानां घटादीनां कगेवनूजनैज्रूष्क्नसुरञ्जिइत्येतेषां कमिचम्यमिवर्जितानाञ्चामन्तानां धातूनामुपान्त्यस्याचो णौ अण् ह्रस्वो भवति अमुञ्णिपरे तु णौ अस्याचः स्थाने दीर्घो वा भवति । घटिष् चेष्टायां घटयति, अघटि, अघाटि । व्यथिष् भयचलनयोः व्यथयति,अव्यथि, अव्याथि । कगे इति सौत्रो धातुः कगयति, अकगि, अकागि । वनूङ् याचने तनादिः उपवनयति, उपावनि, उपावानि । जनैङ् प्रादु-

मोवे। जनयति, अजनि, अजानि । जृष्जृ वयोहानौ जरयति, अजरि, अजारि । क्नसू हरणदीप्त्योः । एते दिवादयः । क्नसयति अक्नसि, अक्नासि । रंजि रागे ।

७५९ । णौ मृगरमणे । ४ । १ । २२६ ॥ रंजेरुपान्त्यस्य नकारस्य णौ परतः मृगाणां क्रीडायामर्थे लुग्भवति । रजयति मृगान् व्याधः अरजि, अराजि । गमु गतौ, गमयति, अगमि, अगामि । शमू दमू उपशमे दमयति, अदमि, अदामि । अकम्यादेरिति किम ? कमुङ् कान्तौ कमृतेर्णिङीयङ् इति णिङि कामयते। चमू अदने आचामयति। अमू रोगे अमयति । स्खद खनने अपस्खादयति, परिस्खादयति ।

७६० । शमोऽदर्दने । ४ । १ । २०३ । शमः अदर्शने वर्तमानस्योपान्त्यस्य च णौ ह्रस्वो भवति अम्ञिपरे तु दीर्घो वा शमयति रोगान् शमयति श्लोकान अशमि, अशामि । दर्शने निशामयति । शमः दर्शने इत्येके । शासु अनुशिष्टौ अनुशासयति अन्वशासत् । चाटृङ् रोदने चादयति, अचचादत् । डुयाचृञ् याचने याचयति, अययाचत् । सेकृङ्, स्रेकृङ्, ढौकृङ्, त्रौकृङ् गतौ । सेकयति, असिसेकत् । स्रेकयति, असिस्रेकत् । ढौकयति, अडुढौकत् । त्रौकयति, अतुत्रौकत् । ष्ठा गतिनिवृत्तौ सत्वं प्रस्थापयति षत्वाभावे ष्टुत्वनिवृत्तिः ।

७६१ । तिष्ठतेः । ४ । १ । २१५ । स्थाइत्येतस्योपान्त्यस्याचः ञ्परे णौ परत इकारो नित्यं भवति ।

७६२ । लुक् खयि । ४ । १ । ८१ । द्विर्भावे पूर्वस्य खरः

ण्यि परे लुग्भवति । अनादिलुचोऽपवादः । प्रातिष्ठपन् इत्यादि सर्वमुन्नेयम् ।

इति णिच्प्रकरणम् ।

---

भवितुमिच्छतीति विग्रहे —

७६३ । धात्मेककर्तृकात् सन्नतरसनः । ४ । १ । १६ कर्मेराप्याद्धातोः कर्मैककर्तृकात् कम्यर्थे इच्छायां सन् प्रत्ययो भवति न चेत्स कर्मि यो विहितः सन् तदन्तो भवति। नकारः सन्यङश्चेति विशेषणार्थः ।

७६४ । न किदाद्युग्ग्रहगुहः । ४ । २ । १६५ । किदादिभ्य उगन्तात् ग्रहगुहाभ्यां च सनि इड् न भवति ।

७६५ । सीकः । ४ । १ । १६० । इगन्तस्य धातोः सकारादौ सनि परे कित्कार्यं भवतीति अक्डिदित्येड् न भवति । सन्यङश्चेति द्विर्भावः हलोऽनादेरिति सकारस्य लुक् आणजश्चज्झप इत्यूकारस्य उकारः भकारस्य च बकारः शास्वसीत्यादिना षिः बुभूष इति स्थिते क्रियार्थो धातुरिति धातुसंज्ञायां सत्य पूर्ववल्लडादयः शपि एदे इति लुक् । बुभूषति, बुभूषतः, बुभूषन्ति । बुभूषसि, बुभूषथः, बुभूषथ । बुभूषामि, बुभूषावः, बुभूषामः । व्यतिहृतेः पूर्ववत् तङः व्यतिबुभूषते, व्यतिबुभूषेते व्यतिबुभूषन्ते । व्यतिबुभूषसे, व्यतिबुभूषेथे, व्यतिबुभूषध्वे । व्यतिबुभूषे, व्यतिबुभूषावहे, व्यतिबुभूषामहे। भावे यकि अत इत्यकारस्य लुक् बुभूष्यते देवदत्तेन ।

कर्मणि—अनुबुभूष्यते, अनुबुभूष्येते, अनुबुभूष्यन्ते, इति कर्मकर्तरि-भूषार्थसनूदुहादीनां च यिगिति यकि प्रतिषिद्धे शबेव भवति तङ् पुनरतिदेशात् भवत्येव। अनुबुभूषते कम्बलः स्वयमेव अनुबुभूषेते अनुबुभूषन्ते इति। लङि—अबुभूषत्, अबुभूषतामिति। व्यत्यबुभूषत, व्यत्यबुभूषेताम्। भावे अबुभूष्यत देवदत्तेन। कर्मणि—अन्वबुभूष्यत, अन्वबुभूष्येताम् इति। कर्मकर्तरि यको निषेधः अन्वबुभूषत, अन्वबुभूषेताम् इति। लेटि—बुभूषतु बुभूषताद्वा, बुभूषताम्, बुभूषन्तु। बुभूष बुभूषताद्वा बुभूषतम्, बुभूषत। बुभूषाणि, बुभूषाव, बुभूषाम। व्यतिबुभूषताम्, व्यतिबुभूषेताम्, व्यतिबुभूषन्ताम् इति। भावे बुभूष्यताम् देवेन। कर्मणि अन्वबुभूष्यताम्, अन्वबुभूष्येताम् इति। कर्मकर्तरि यकः प्रतिषेधः अनुबुभूषताम् कम्बलः स्वयमेव। अनुबुभूषेतामिति। लेङि—बुभूषेत, बुभूषेताम् बुभूषेयुः इति। व्यतिबुभूषेत, व्यतिबुभूषेयाताम् इति। भावे बुभूष्येत देवेन। कर्मणि अनुबुभूष्येत कम्बलो देवेन अनुबुभूष्येयाताम् इति। कर्मकर्तरि यगभावः अनुबुभूषेत कम्बलः स्वयमेव अनुबुभूषेयाताम् इति। लिङि—अत इत्यकारस्य लुक् बुभूष्यात, बुभूष्यास्ताम्, बुभूष्यासुः इति। व्यतिबुभूषिषीष्ट, व्यतिबुभूषिषीयास्ताम्, व्यतिबुभूषिषीरन्। भावे—बुभूषिषीष्ट देवेन। कर्मणि कर्मकर्तरि च अनुबुभूषिषीष्ट, अनुबुभूषिषीयास्ताम् इनि। लिटि—बुभूषांचकार बुभूषांचक्रतुरिति। व्यतिबुभूषांचक्रे, व्यतिबुभूषांचक्राते इति। भावे-बुभूषांचक्रे देवेन। कर्मणि कर्मकर्तरि च

अनुबुभूषांचक्रे, अनुबुभूषांचक्राते इति । लुङि स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च इति । लुङि स्यरांतेस्सोलः इतीटि ईटीट इति सेः लुक् अबुभूषीत अबुभूषिष्टाम्, अबुभूषिषुः इति । व्यत्यबुभूषिष्ट, व्यत्यबुभूषिषातामिति । भावे अन्वबुभूषि देवेन । कर्मणि अन्वबुभूषि कम्बलो देवेन अन्वबुभूषिषाताम्, अन्वबुभूषिषत इति । कर्मकर्तरि ञिटः प्रतिषेधः सिरेव अन्वबुभूषिष्ट कटः स्वयमेव अन्वबुभूषिषातामिति । लुटि —बुभूषिता, बुभूषिताराविति, व्यतिबुभूषिता, व्यतिबुभूषिताराविति । भावे बुभूषिता देवेन । कर्मणि कर्मकर्तरिच अनुबुभूषिता,अनुबुभूषितारावि ति । लङि–अबुभूषिष्यत् , अबुभूषिष्यताम् इति । व्यत्यबुभूषिष्यत, व्यत्यबुभूषिष्येतामिति । भावे अबुभूषिष्यत देवेन । कर्मणि कर्मकर्तरिच अन्वबुभूषिष्यत, अन्वबुभूषिष्येतामिति । लृटि–बुभूषिष्यति, बुभूषिष्यतः इति । व्यतिबुभूषिष्यते, व्यतिबुभूषिष्येते इति । भावे—बुभूषिष्यते देवेन । कर्मणि कर्मकर्तरिच अनुबुभूषिष्यते, अनुबुभूषिष्येते इति द्विर्वचनं ।

७६६ । प्राग्वत् । सनः प्राचः प्रकृतेर्लकारस्य यथा तङो भवन्ति तथा सनन्तादपि लस्तङो भवन्ति । एदिधिषते, एदिधिषेते, एदिधिषन्ते इति । सन्यत इतीत्वम् पिपक्षति, पिपक्षते । निनन्दिषति, दिध्वंसिषते, विव्यासति, विव्यासते । घस्लृजुबुघजुलुङ्सनीति अदेर्घस्लृ इत्यादेशः तद्सिस्य-स्लीति सकारस्य तकारः द्विर्वचनादि सन्यत इतीत्वम् जिघत्सति, जिघत्सतः, जिघत्सन्ति इति । व्यतिजिघत्सते, व्यति-

जिघत्सेते, व्यतिजिघत्सन्ते इति । भावादौ जिघत्स्यते देवेन, जिघत्स्यते ओदनः स्वयमेव । एवं सर्वलकारेषु योज्यम् । शिशयिषते, विवक्षति, विवक्षते ।

७६७ । सनि । ४ । १ । १३७ । अजन्तस्य धातोर्झलादौ सनि परे दीर्घो भवति जुहूषतीति नेयम् जिहासते ।

७६८ । घुमीमारभलभशक्पतपदामिस् । ४ । १ । ६० घुसंज्ञकानां मी इत्यादीनां चाचः सकारादौ सनि परतः इसादेशो भवति । एषामेकाचवनद्विः तस्सिलयङ्लीति तकारः धित्सति, धित्सते । दिव् स इति स्थिते—

७६९ । भ्रस्जघदन्भतनसनपतिज्ञपिश्रियूर्णुभरस्वृभिवृतः सनि । ४ । २ । १६३ । भ्रस्जादिभ्यः इवृइत्येवमन्तेभ्यः ऋकारान्तेभ्यश्च धातुभ्यः परस्य वलादेः लयहलयप्रत्ययस्य सनि इट् वा भवति । यदेट् तदा न्हृस्वस्य हल इत्येङ् दिदेविषति । यदा नेट् तदा—

७७० । हलि । ४ । १ । १६१ । सकारादौ सनि परे यो हल् तस्मिन् परे य इक् तस्य कित्कार्यं भवतीति एङ् न भवति । छ्वोःऽनुनासिके चेति वकारस्योचि अस्वे इति यण् ततो द्विर्वचनादि शास्वसीत्यादिना षिः । दुद्यूषति, दुद्यूषतः, दुद्यूषन्ति इति । पुरावत् इडभावः कित्वं च—

७७१ । न खिदिस्वदिसहिणिस्तोः । ४ । १ । ७५ । स्विदि स्वदि सहि इत्येतेषां ण्यन्तस्तौनिवर्जितानां च धातूनां [illegible] सति सनि द्विर्भावे पूर्वात्परस्य षिर्न भवति । प्रसुसूषते,

निनत्सति, निनत्सते । सुञः स्यसनीति पिर्न भवति सुसूपति, सुसूपते—

७७२ । कादृगृपूङ्स्म्यञ्जशः । ४ । २ । १६४ । कृ विक्षेपण इत्येवमादिभ्यः पञ्चभ्यः ऋपूङ्स्मि अञ्जि अशश्च सनः इट्नित्यं भवति । पुनर्द्विवचनं अशिशिपते, निश्चिकीपति, निश्चिकीपति, निश्चिचीपते, निश्चिकीपते, चिकीपति, चिकीपते। भृस्जुधेत्यादिना विकल्पेनेट् तस्य ऋदृवुर्व्वीत्यादिना विकल्पेन ईट् सन्यत इतीत्वम् विवरीपते, विवरिपते । इडभावे सनीति दीर्घः ।

७७३ । पुवादुर् । ४ । १ । १७० । पवर्गाद् वकाराश्च धात्ववयवात् परस्यान्त्यस्योपान्त्यस्य च ऋकारस्य उरादेशो भवति धातो त्रीगित्यादिना दीर्घः बुबूर्पते । न किदित्यादिनेट्प्रतिषेधः ।

७७४ । रुद्विन्मुषिग्रहिस्वप्प्रच्छां सनि च । ४ । १ । १५९ । रुदादीनां सनि चकारात् क्त्वाप्रत्यये च किद्वत्कार्यं भवति वशिव्यचीत्यादिना साचो यस्य इक् पठ कस्सीति ककारः वशो वशो भषित्यादीनि द्विर्वचनादीनि च जिघृक्षति जिघृक्षते। हलीति किद्वद्भावादेड् न भवति, सुतुत्सति । सनीति दीर्घः पुवादुरित्युर् धातोत्रीगित्यादिना दीर्घः ततो द्विर्वचनादि मुमूर्पति मुमुक्षति, मुमुक्षते । कर्मकर्तरि—

७७५ । वीन्मुचोऽनाप्येऽचः । ४ । १ । ५९ । मुचेर्धातोः मकारादौ मनि परे अचः ओकारादेशो वा भवति न

चास्य द्विः न चेदार्थं कर्म विवक्ष्यते, भूपार्थेत्यादिना यकः प्रतिषेधः मोक्षते, मुमुक्षते वत्सः स्वयमेव । भृस्जृघेत्यादिना पक्षे इट् तितनिषति, तितनिषते । इडभावे—

७७६ । तनो वा । ४ । १ । १३९ । तनुञः धातोर्योऽच् तस्य जलादौ सनि परे दीर्घो वा भवति । तितांसति, तितंसति, तितांसते, तितंसते । मिमनिषते सनीति दीर्घः अन्त्योपान्त्यत्तोमिरिति इट् ततो द्विर्वचनादि चिकीर्षति, चिकीर्षतः । हलीति किद्वद्भावादेङ् न भवति । रुरुत्सति, रुरुत्सते, बुभुक्षति, बुभुक्षते, युयुक्षति युयुक्षते । चुचोरयिषति, चिच्छादयिषते, लिलक्षयिषति, लिलक्षयिषते, युयोजयिषति, युयुक्षति, अर्चिचयिषति, अर्चिचिषते, विवारयिषति, वुवूर्षति, विवरिषति, विवरीषति इत्यादि सर्वं दशलकारेषु प्रागिव कर्तरि कर्मभावयो कर्मकर्तरि च यथासंभवमुन्नेयम ।

इति यङ्यङ्लुक्णिञ्सनन्ताश्चतस्र प्रकृतय उदाहृताः ।

---

पुनस्ताभ्यो णिजुदाह्रियते— बोभूयते कश्चित् तमन्यः प्रयुङ्क्ते बोभूयश्चेति यङन्तात् प्रयुजि णिञ् 'अत' इत्यलुक् पूर्ववत् लडादयः बोभूययति, बोभूययतः, बोभूययन्ति इति बोभूययते, बोभूययेते, बोभूययन्ते इति। भावे बोभूय्यते देवेन। कर्मणि अनुबोभूय्यते, अनुबोभूय्येते इति । कर्मकर्तरि यकः प्रतिषेधः शवेव अनुबोभूययते, अनुबोभूययेते । अबोभूययत्, अबोभूययनामिति । अबोभूययत, अबोभूययेताम इति

भावे अबोभूय्यत देवेन। कर्मणि अन्वबोभूय्यत, अन्वबोभूय्येतामिति। कर्मकर्तरि अन्वबोभूययत. अन्वबोभूययेताम् इति। लेटि बोभूययतु, बोभूययताद्वा, बोभूययताम् इति। बोभूययताम्, बोभूययेताम् इति। भावे बोभूय्यतां देवेन। कर्मणि अनुबोभूय्यताम्, अनुबोभूय्येतामिति। कर्मकर्तरि अनुबोभूययताम्, अनुबोभूययेताम्। लेङि-बोभूययेत्, बोभूययेताम् इति। बोभूययेत, बोभूययेताम् इति। भावे बोभूय्येत देवेन। कर्मणि अनुबोभूय्येयाताम् इति। कर्मकर्तरि यकः प्रतिषेधः अनुबोभूययेत, अनुबोभूययेयाताम् इति। लिङि बोभूय्यात्, बोभूय्यास्ताम् इति। बोभूययिषीष्ट, बोभूययिषीयास्ताम् इति। भावे बोभूयिषीष्ट देवेन। कर्मकर्मकर्त्रोः बोभूयिषीष्ट बोभूयिषीयास्ताम् इति बोभूययिषीष्ट, बोभूययिषीयास्ताम् इति। लिटि-बोभूययांचकार बोभूययांचक्रे इति। भावे बोभूययांचक्रे देवेन। कर्मणि कर्मकर्तरिच अनुबोभूययांचक्रे अनुबोभूययांचक्राते इति। लुङि-कंश्रिद्रुस्रुगेर्ङः कर्तरि इति ङः द्विर्भावः। हलोऽनादेरिति पूर्वमकारस्य लुक् आञ्जश्वञ्झष इति ओकारस्य उकारः। णेलुगडागमः अबुबोभूयत् द्विरेकेषामिति एकेषां द्विर्वचनं न भवति तदा अबोभूयदित्येव नेयम्। भावे अबोभूयि देवेन। कर्मकर्मकर्त्रोः अन्वबोभूयि, अन्वबोभूयिष्ट वा। लुटि बोभूययिता, बोभूययिताराविति। बोभूययिता, बोभूययितारौ, बोभूययितारः बोभूययितासे इति। भावे-बोभूयिता, बोभूययिता देवेन। कर्मणि कर्मकर्तरिच अनुबोभूययिता, अनुबोभूययितारौ, अनुबोभूययितारः अनुबो-

भूययितासे वा। लृङि—अबोभूययिष्यत्, अबोभूययिष्यत इति। भावकर्मकर्मकर्तृषु चिण्वद्भावाभावाभ्यां द्विरूप्यम् अबोभूयिष्यत, अबोभूययिष्यत इति। लृटि—बोभूययिष्यति, बोभूययिष्यते इति। भावे बोभूययिष्यते, बोभूयिष्यते देवेन। कर्मणि कर्मकर्तरि च अनुबोभूयिष्यते, अनुबोभूययिष्यते इति। यङ्लुगन्तात् णिचि बोभावयति, बोभावयते, बोभाव्यते देवेन। पापाचयति। लिटि बोभावयाञ्चकार, बोभावयाञ्चक्रे इत्यादि। भावयति कश्चित् तमन्यः प्रयुंक्ते इति णिजन्तात् णिज् पूर्ववत् णेर्लुक् भावयति, भावयतः, भावयन्तीति, अबीभवत्, एधयति, ऐदिधत्, पाचयति, अपीपचत्। बुभूषति कश्चित् तमन्यः प्रयुंक्ते इति सन्नन्तात् णिचि बुभूषयति, बुभूषयाञ्चकार इति चतसृभ्यः प्रकृतिभ्यो णिच् दर्शितः ताभ्यः सन् उदाह्रियते तत्र च सनन्तात् सन् नास्ति अतत्सन इति निषेधात्। णिजन्तणिजन्तात् सन् नोदाह्रियते णिजन्तादविशेषात्। सनन्तणिजन्ताच्च सन् नोदाह्रियते आचार्याणां विसंवादात्। अवशिष्टाभ्यः पंचभ्यः प्रकृतिभ्य उदाह्रियते। बोभूयितुमिच्छतीति यङन्तात् सन् तस्य वलादेरित्यादिनेट् अत इत्यकारस्य लुक् सन्यङश्चेत्येकाचो द्विर्वचनम्। प्राग्वदिति तङ् बुबोभूयिषते, बुबोभूयिषाचक्रे। द्विर्वचनाभावे बोभूयिषते, बोभूयिषांचक्रे, बुबोभूयिषीष्ट। पापचिषते, पापचिषीष्ट। यङ्लुगन्तात् सनि बुबोभविषति, बुबोभविषांचकार, बोभविषति, बोभविषां-

चकार। णिजन्तात् सनि भूभूइति द्विर्वचने ओःपुयण्ज्ये इतीत्वम् बिभावयिषति, बिभावयिषते, बिभावयिषांचकार। एवंदिधयिषति, पिपाचयिषति। सनन्तात् बुभूषितुमिच्छति इति वाक्यमेव भवति यङन्तणिजन्तात् सनि द्वित्वे बुबोभूययिषते, बुबोभूययिषयते बुबोभूययिषति। अद्वित्वे बोभूययिषति, बोभूययिषते। यङ्लुगन्तणिजन्तात सनि द्वित्वे बुबोभावयिषति, बुबोभावयिषते। अद्वित्वे बोभावयिषति, बोभावयिषते, इति पञ्चभ्यः प्रकृतिभ्यः सन् उदाहृतः। एताभ्यः प्रकृतिभ्यः पुनरपि णिजुदाह्रियते। यङन्तसनन्तात् णिचि बुबोभूयिषयति, बुबोभूयिषयते बुबोभूयिषयांचकार, बुबोभूयिषयांचक्रे। लुङि ङे द्वित्वे अबुबुबोभूयिषत्। अद्वित्वे अबोभूयिषत्। सनि द्वित्वाभावे बोभूयिषयति बोभूयिषयांचकार। लुटि—बुबोभूयिषयिता, बोभूयिषयिता। लुङि ङे अबुबोभूयिषत् अबोभूयिषत्। यङ्लुगन्तसनन्तात् णिचि—बुबोभविषयति, बुबोभविषयांचकार। लुङि ङे द्वित्वे अबुबुबोभविषत् बोभविषि इत्यस्य बोभविषयति, बोभविषयांचकार। लुङि ङे अबुबोभविषत्, अबोभविषत्। णिजन्तसनन्तात् णिचि—बिभावयिषयति, बिभावयिषयते, बिभावयिषयांचकार। लुङि ङे द्वित्वे अबिबिभावयिषत, अद्वित्वे अबिभावयिषत्। यङन्तणिजन्तसनन्तात् णिचि द्वित्वे बुबोभूययिषयति अद्वित्वे बोभूययिषयति। यङ्लुगन्तणिजन्तसनन्तात् णिचि बुबोभावयिषयति, बोभावयिषयति इति। पञ्च प्रकृतय उदाहृताः

इत्यादि सर्वं यथासंभवं समीक्ष्य समुन्नेयम्। अत्र संग्रहार्थं पूर्वाचार्याः पठन्ति -

परमप्रकृतिर्यङ् यङ्लुक् णिच् सन् णिच् ततोऽसनरसंज्ञ।
तस्माण्णिजिति प्रकृतिः विज्ञेयैकान्नविंशतिधा ॥ १ ॥

एवं सर्वधातूनां एकान्नविंशतिप्रकृतय उदाहार्याः।

कण्डूञ् गात्रविकर्षणे ञकार इत्।

७७७। धातोः कण्ड्वादेर्यक्। ४। १। ६। कण्डूञ् इत्येवमादिभ्यः धातुभ्यः यक्प्रत्ययो भवति। ककार गुण-भावार्थः। क्रियार्थत्वात् धातुसंज्ञायां पूर्ववल्लडादयः कण्डूयति, कण्डूयतः, कण्डूयन्ति इति। कण्डूयते, कण्डूयेते, कण्डूयन्ते इति। भावादौ यकि अत इति लुक् कण्डूयते, कण्डूय्येते इति। लङि अकण्डूयत्, अकण्डूयत। भावादौ अकण्डूय्यत। लोटि–कण्डूयतु, कण्डूयताम्। भावादौ कण्डूय्यताम्। लेङि–कण्डूयेत्, कण्डूयेत। भावादौ कण्डूय्येत। लिङि–कण्डूय्यात्, कण्डूयिषीष्ट। लिटि–कण्डूयांचकार, कण्डूयांचक्रे। लुङि–अकण्डूयीत्, अकण्डूयिष्टाम् इति। अकण्डूयिष्ट, अकण्डूयिषाताम् इति। कर्मणि अकण्डूयि अकण्डूयिषाताम् इति। लुटि–कण्डूयिता। लृटि–अकण्डूयिष्यत्, अकण्डूयिष्येत। लृटि–कण्डूयिष्यति, कण्डूयिष्यते। णिचि–कण्डूययति, कण्डूययते, अकण्डूययत्, अकण्डूययत, कण्डूययतु कण्डूययताम्, कण्डूययेत्, कण्डूययेत, कण्डूयय्यात् कण्डूययिषीष्ट। भावादौ कण्डूयिषीष्ट, कण्डूययिषीष्ट। लिटि—कण्डू-

ययांचकार, अचकण्डूयत् ।

७७८ । यकस्तृतीयः । ४ । १ । ५१ । यगन्तस्य कण्ड्वादेः धातोः सन्यङन्तस्य लिङ्ङेऽपि पूर्वस्य तत आदेरचः तृतीय एकाज् वा द्विर्भवति। इत्यत्र द्विर्वचनं न भवति। तत इत्यस्याभावात्, केषांचित् तत इति नानुवर्तते तद्दर्शने यिथि इतिद्विर्वचने अकण्डूयियत् इति भवति। भावादौ अकण्डूयि। लुटि-कण्डूयिता। भावादौ कण्डूयिता, कण्डूयिता। लङि-अकण्डूयिष्यत्, अकण्डूयिष्यत। भावादौ अकण्डूयिष्यत, अकण्डूयिष्यत। लृटि-कण्डूयिष्यति, कण्डूयिष्यते। सनि-कण्डूयिष इति स्थिते सन्यङश्चेत्यादिरेकाच् द्विर्भवतीत्येके तेषां चिकण्डूयिषति। अन्येषां यकः तृतीय इत्यत्र तत इत्यजपेक्षा नानुवर्तते तत आदेरनादेश्चाचः तृतीय एकाच् द्विर्भवतीति कण्डूयियिषति, कण्डूयियिषते इति। एवं मन्तु रोषे वैमनस्ये च। मन्तूयति, मन्तूयतः, मन्तूयन्तीति। वल्गु माधुर्ये च वल्गूयति, वल्गूयतः, वल्गूयन्तीति। असु मानसउपतापे असूयति, असूयतः, असूयन्तीति। णिचि आसूययत्, आसूययत। सनि असूयियिषति, महीङ् वृद्धौ पूजायां च महीयते, महीयेते, महीयन्ते इति। सुख दुःख तत्क्रियायां अत इत्यलुक् सुख्यति, सुख्यतः, सुख्यन्ति इति। णिचि-सुखयति, केषांचित् कोयो वेति पाठः ककारस्य सम्बन्धिनो यकारस्य लुग्भवतीति सुखयतीति भवति। इति कण्ड्वादयो नेतव्याः।

—०—

## अथ सुबन्तप्रकृतिकानां,

प्रकृतिमुदाहरिष्यामः। पुत्र अम् इति स्थिते आत्मनः पुत्रं कामयते इति विग्रहे—

७७९। सुपः कर्तुः काम्यः।४।१।१७। सुबन्तात् कर्म्याख्यात् कर्तुरात्मनः कामयितुरेव सम्बन्धिनः कर्म्यर्थे काम्यः प्रत्ययो वा भवति। प्रत्ययस्य च सुपः इलुगिति अम इलुक् क्रियार्थो धातुरिति धातुसंज्ञायां पूर्ववत् लडादयः। पुत्रकाम्यति, एवं वस्त्रकाम्यति, राजकाम्यति यलादित्वात् पदसंज्ञाया न इति नलुक्। मालाकाम्यति, कविकाम्यति, इदंकाम्यति, स्वःकाम्यति, तरकाम्यतीति। लङि—अपुत्रकाम्यत्, पुत्रकाम्यतु पुत्रकाम्येत् पुत्रकाम्यात् पुत्रकाम्यात। हलो यमि यमो वेति पक्षे यकारस्य लुक् पुत्रकाम्याचकार, अपुत्रकाम्यीत्। हलोय इति हलन्तात् धातोर्यः इलुगुच्यते तेनेह न भवति, पुत्रकाम्यिता, अपुत्रकाम्यिष्यत, पुत्रकाम्यिष्यतीति णिचि पुत्रकाम्ययति। लुङि डे—

७८०। सुपः। ४।१।४६। सुबवयवस्य धातोः सन्यङन्तस्य लिड्डेच परतः पूर्वस्य च यः कश्चिदेकाजवयवस्तस्य द्विर्वा भवति। तत्र चातूरूप्य भवति अपुपुत्रकाम्यत्, अपुतत्रकाम्यत्, अपुत्रचकाम्यत्, अपुत्रकामिम्यत्। णावतो लोपात अनग्लुचीति वचनात् सन्वद्भावो नास्ति। सन्यप्येव द्वित्वे चातूरूप्यम्—पुपुत्रकाम्यिषति, पुतित्रकाम्यिषति पुत्रचिकाम्यिषति, पत्रकामिम्यिषति, पुत्रकाम्यिपिषति। एवं वस्त्रकाम्यादिषु

नेयम्। एवं पुत्रअमिति स्थिते, आत्मनः पुत्रमिच्छतीति विग्रहे।

७८१। **क्यच्चामान्ययात्**। ४। १। १८। सुबन्तात् कम्याप्याद्आत्मनः कामयितुरेव सम्बन्धिनः काम्यर्थे क्यच् प्रत्ययो भवति काम्यश्च यद्यसौ सुप् मकारान्तादव्ययाच्च परो न भवति। ककार क्यच् क्य इति सामान्यग्रहणार्थः। चकारः सामान्यग्रहणविघातार्थः।

७८२। **च्वौ चास्यानव्ययस्य**। २। ३। ४०। अवर्णस्यानव्ययस्य च्वौ क्यचि च परे ईकारो भवति। पूर्ववल्लडादय पुत्रीयति, मालीयति।

७८३। **नङ्क्ये**। १। १। ६३। नकारान्त शब्दरूप क्ये प्रत्यये परतः पदसंज्ञं भवति। क्य इति क्यङ्क्यषक्यचा विशेषकराननुबन्धानुत्सृज्य सामान्यग्रहणं। पुनः न इति नलुक् तत ईत्वम् राजीयति, शर्मीयति, यङ्लेङित्यादिना दीर्घे। कवीयति, शिखीयति, दन्तीयति, तरुणीयति, दन्तिनीयति, पुत्रिणीयति, इक्षूयति, वधूयति, यङ्लेङित्यादिना री पित्रीयति, कर्त्रीयति।

७८४। **ओदोताऽवाव्यि**। २। ३। ३६। ओकारौकारयोः स्थाने यकारादौ प्रत्यय अव् आव् इत्येतौ क्रमेणादेशौ भवतः। गव्यति, नाव्यति, वाच्यति, स्रुच्यति, सद्स्यति, युष्मद्यति, अस्मद्यति। "त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्" इति त्वमौ भवत· त्वद्यति, मद्यति। धातोर्त्रीगित्यादिना दीर्घ

गीर्यति, दीव्यति, पयस्यति, अदस्यति उपानह्यतीति ।
आत्मनःवाचमैषीत् इति विग्रहे–

७८५ । क्यो वा । ४ । २ । । धातोर्हल उत्तरस्य क्यच्क्यङोर्यकारस्य ल्यहिलप्रत्यये परे लुग्भवति वा । अवाचीत, अवाच्यीत् इति । सनि पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति, पुत्रीयिषिषति ।

७८६ । नाद्यच् । ४ । १ । ४७ । सुब्धातोरादिरच् न द्विरुच्यते । अशिश्वीयिषति, अश्वीयियिषति, अश्वीयिषिषति । प्रासादे इवाचरतीति विग्रहे—

७८७ । गौणाद्‌धाराच्चाचरि । ४ । १ । १९ । गौणात्सुबन्तात् अमाव्ययादाचरेराध्यादाधाराच्चाचर्येऽर्थे क्यज् वा भवति । पूर्ववड्डायदः प्रासादीयति कुट्याम्, पर्यङ्कीयति मंचके, अश्वीयति वृषभे इति । पुत्रमिवाचरतीति पुत्रीयति छात्रमाचार्यः, राजीयति सेवकम्, मालीयति किसलयमिति । अश्व इवाचरतीति विग्रहे अश्वस् इति स्थिते–

७८८ । कर्तुःक्विप् । ४ । १ । २० । गौणादाचरेः कर्तुः सुप आचर्येऽर्थे क्विप् प्रत्ययो वा भवति । ससर्वोऽप्रयोगीत् सुपः इलुक् क्रियार्थत्वात् धातुसंज्ञायां लडादयः । अश्वति गर्दभः, गर्दभत्यश्वः, हंसति काक इति । गल्भ इवाचरतीति विग्रहे गल्भस् इति स्थिते—

७८९ । गल्भक्लीबहोडाण्डित् । ४ । १ । २१ । गल्भादिभ्यो गणेभ्यः आचर्येऽर्थे क्विप् ङिद्भवति । ङित्वात्

सह् । गल्भते, क्लीबते, होढते । श्येन इवाचरतीति विग्रहे-श्येनस् इति स्थिते—

७९० । क्यङ् । ४ । १ । २२ । गौणादाचरेः कर्तुः सुपः आचर्येऽर्थे क्यङ् भवति । ककारः पुंवद्भावार्थः ककारो नङ्क्ये इति सामान्यग्रहणार्थः, ङकारस्तङर्थः यङ्लेङ्गि-त्यादिना दीर्घः । धातुसंज्ञायां लडादयः श्येनायते काकः, अश्वायते गर्दभः, पित्वादतद्धितेऽपि पिति तद्धित इति पुंवद्भावः एनीवाचरति एतायते, श्येनीव श्येतायते, कुमारीव कुमारायते वृद्धा, तरुणीव तरुणायते जीर्णा, तन्यते, यद्यते, स्वध्नने, मद्यते इति ।

७९१ । सो वा लुक् च । ४ । १ । २४ । सकारान्तस्य गौणस्य कर्तुः सुपः आचर्येऽर्थे क्यङ् भवति सलोपश्च वा पयायते पयस्यते ।

७९२ । अप्सरसः । ४ । १ । २५ । अप्सरस क्यङ्-सन्नियोगे नित्य लुग्भवति । अप्सरायते ।

७९३ । भृशादेश्च्व्यर्थे । ४ । १ । २६ । भृशादेः सुबन्तात् कर्तुश्च्व्यर्थे प्रागतत्तद्भावे क्यङ् वा भवति तत्सन्नि-योगे सकारतकारान्तस्य लुग्भवति । अभृशो भृशो भवतीति भृशायते, शीघ्रायते, उन्मनस्—उन्मनायते, वेहत् वेहायते, अनिद्रो निद्रावान् भवतीति विग्रहे निद्राम् इति स्थिते —

७९४ । निद्रादिदाश्यो धर्मिणि क्यष । ४ । १ ..

निद्राविभ्यो डाजन्तेभ्यश्च धर्मिणि वर्तमानेभ्यः कर्तृवाचिभ्यः च्व्यर्थे क्यष् भवति ।

७९५ । क्यषो वा । १ । ४ । १७। क्यषन्तात्लस्तङो वा भवन्ति । निद्रायति, निद्रायते, करुणायति, करुणायते, चर्मायति, चर्मायते इति । पटत् करोतीति पटदित्यत्र:—

अनेकाचोऽव्यक्तानुकरणात् कृभ्वस्तिभ्यां द्विश्चेति डाच् द्विर्भावश्च । डाजन्तात् क्यष्विधानादेव कृभ्वस्तियोगश्च क्यष्यपि डाच् विज्ञायते ।

७९६ । डाच्यादौ । १ । १ । १३१ । द्विरुक्तेरादौ पूर्व. स्यामुक्तौ अतो यस्तकारस्तस्य डाचि परतो नित्यं लुग् भवति । पटपटायति, सिमसिमायति, सिमसिमायते इति । सूत्रं करोतीति विग्रहे सूत्र अम् इति स्थिते—

७९७। णिज् बहुल कृञादिषु । ४ । १ । २८ । सुब. न्तात् कृञादीना धातूनामर्थे बहुलं णिज् भवति । णकारो णेरि- डुक्तानिडामिति सामान्यग्रहणार्थः चकारस्तद्विघातार्थः । सुपः इलुक् ध्यन्त्याजादेरित्यन्त्याजादेर्लुक् धातुसञ्ज्ञायां लडादयः सूत्रयति व्याकरण्, मुण्डयति माणवकम्, मिश्रयत्योदनम्, श्लक्ष्णयति वस्त्रम्, लवणयति सूपम्, व्रतं करोति व्रतयति पय एव भुङ्क्ते इत्यर्थः । सावद्य व्रतयति सावद्य न भुङ्क्ते इत्यर्थः । कृत गृह्णाति कृतयति, सूतानि विहन्ति वितूस्तयति केशान् विजटीकरोतीत्यर्थः । उपसर्गसहित एव णिच् केशभ्रंश- नाद्यर्थमाचष्टे इति व्याद्युपसर्गप्रयोगः । पाशं विमोचयति

विपाशयति, रूपं दर्शयति रूपयति, लोमान्यनुमार्ष्टि अनुलोमयति अन्वलुलोमत, पटुमाचष्टे पटयति, अपीपटत्, वृक्षमाचष्टे वृक्षयति, मालामाचष्टे मालयति अममालत् । बहिष्प्रापणे ततः क्तक्तवतविति क्तः इत्यादिः रत्वञ्च: कितीति साचो यत्र इक् " ह " इति हकारः " अधः " इति तकारस्य धकारः तस्य ष्टुत्वम् ढकारः ढो ढीति लुक् ढ्लुच्यण इति दीर्घः ऊढामाचष्टे इति णिच् ज्यन्त्याजादेरिति लुक् ऊढयति । लुङि–ङे द्विर्वचनं प्रति ढत्वादेरसत्वात् " ततः " इति रिह् रिह् इति द्विर्वचनम्, हलोऽनादेरिति लुक् कुहोश्चुरिति झकारः आणुजश्चज्झप इति जकारः आरैजाञ्च इति औकारः णेर्लुक् ततो ढत्वादि पूर्ववत् ढ्लुच्यण इति दीर्घः आणुजश्चज्झप इति जकारः गुश्चापिन्यसन्नित्यत्र अअसन् इत्यकारप्रश्लेषात् क्वचिदसत्वाभावाधिकारे कर्तव्ये ढकारादीनामसत्वं न भवति औजिढत् औडिढत् । तृणान्युत्पुल्य शातयति उत्तृणयति, वस्त्रेण समाच्छादयति संवस्त्रयति, वीणया उपगायति उपवीणयति, तूलैरनुमापयति अनुतूलयति, श्लोकैरुपस्तौति उपश्लोकयति, सेनया अभियाति अभिषेणयति, स्थासेनिषेधसिचसञ्जां द्वयटीति षिः । वर्मणा संनह्यति संवर्मयति, चूर्णैरवकिरति अवध्वंसयति वा अवचूर्णयति, वास्या छिनत्ति वासयति, अश्वेनातिक्रामति अत्यश्वयति, अतिहस्तयति । आख्यानमाचष्टे इत्यत्र बहुलवचनात् न भवति । हस्तं निरस्यतीति विग्रहे हस्त अमिति स्थिते—

७९८ । निरस्यङ्गेभ्यः कर्मणो णिङ् । ४ । १ । ३२ ।
अंगवाचिनः कर्मणो निरस्यत्यर्थे णिङ् भवति । णङ्गावितौ णिचोऽपवादः । हस्तयते, पादयते । सत्रं चिकीर्षतीति विग्रहे ।

७९९ । सत्रकक्षकष्टकृच्छ्रगहनात् पापे चिकीर्षौ क्यङ् ४ । १ । ३५ । सत्रादिभ्यः कर्मभ्यः पापे वर्तमानेभ्यः चिकीर्षत्यर्थे क्यङ् भवति । सत्रायते पापं कर्तुमिच्छतीत्यर्थः । एवं कक्षायते, कष्टायते, कृच्छ्रायते, गहनायते । ककारो यङोऽस्य भेदार्थः ।

८०० । नमोवरिवस्तपसः क्यच् । ४ । १ । ४० । नमसादिभ्यः कृञर्थे क्यच् भवति । नमस्करोतीति नमस्यति देवान्, वरिवस्यति गुरून पूजयतीत्यर्थः, तपस्यति तपश्चरतीत्यर्थः ।

८०१ । चित्रङो विस्मये । ४ । १ । ४१ । चित्रङित्येतस्मात् कर्मणो विस्मये वर्तमानात् कृञर्थे क्यच् भवति । ङकारस्तदर्थः चित्रं करोतीति चित्रीयते विस्मयं करोतीत्यर्थः । इत्यादि समस्त सविस्तरं योजनीयम् ।

। इति यङादिप्रत्ययान्तपरिच्छेदः पञ्चमः ।

—+—

## अथ शत्रादयः कर्तृभावकर्मकर्मकर्तृषु प्रदर्श्यन्ते ।

सतीतिधातोर्विहितस्य लटो यत्र विषये तिबादयोऽतङो भवन्ति तत्र शतृ इत्यादेशः यत्र तादिस्तङ् भवति तत्र आनश् इत्यादेशः । शकारौ तृप्तार्थाऽव्ययनिर्धार्येढचऽत्रानश्मति

पूजाधारकैरितिविशेषणार्थौ । ऋकार उगित्कार्यार्थः । शबोत्वादि पूर्ववत् । भवत् इति स्थिते स्वादयः शत्रादन्ता आश्रयलिङ्गत्वात् त्रिष्वपि लिङ्गेषु योज्याः । पुंसि-भवन्, भवन्तौ, भवन्तः इति । स्त्रियां भवन्ती, भवन्त्यौ, भवन्त्यः इति । नपि—भवत्, भवती, भवन्ति इति । आनशि व्यतिभू आन इति स्थिते शबोत्वावादेशेषु कृतेषु ।

८०२ । मगाने । ४ । २ । ४४ । धातोर्विहिते आने परतः अकारस्य मगागमो भवति । अकारककारावितौ व्यतिभवमान इति स्थिते पूर्ववन्नीतिः । व्यतिभवमानः, व्यतिभवमानौ, व्यतिभवमानाः इति । व्यतिभवमाना, व्यतिभवमाने, व्यतिभवमानाः । व्यतिभवमान, व्यतिभवमाने, व्यतिभवमानानि इति । भावे आनशि यकि मगागम । अस्य भावस्यैकत्वात् सर्वत्रैकवचनानि भवन्ति । भावानभावे इति नपुंसकत्वम् । भूयमानम् । कर्मणि कर्मकर्तरि च अनुभूयमानः, त्रिष्वपि लिङ्गेषु नेयम् । एवमेधमानः, एध्यमानम् , पचन् , पचमानः, नन्दन्, नन्द्यमानः, ध्वंसमानः, ध्वस्यमानः व्ययन्, व्ययमानः, अदन् , व्यत्यदानः । अद्यमानः, शयानः, शय्यमानम् , ब्रुवन्, ब्रुवाणः , उच्यमानः । न नमिति नमःप्रतिषेधः । जुह्वत्, जुह्वती, जुह्वत् शौ अज्झेश्शतुरिति वा नम् जुह्वन्ति, जुह्वति, व्यतिजुह्वानः , हूयमानम् , हूयमानः लज्जिहान , हायमानः, दधत् , अभिदधानः विधीयमानः, दीव्यन् , व्यतिदीव्यमानः , दीव्यमानम् , दीव्यमानः, प्रसूयमानः, नह्यन् ,

नह्यमानः, सुन्वन, सुन्वानः सूयमानम् , सूयमानः, अश्नुवानः: अश्यमानः, चिन्वन, चिन्वानः, चीयमानः, क्रीणन् , क्रीणानः, क्रीयमाणम् , क्रीयमाण', घृणानः ध्रियमाणः, गृह्णन् , गृह्णानः, गृह्यमाणः. तुदन् , तुदमानः, तुद्यमानः, म्रियमाणः मुञ्चन् , मुञ्चमानः, मुच्यमानः, तन्वन् , तन्वानः , तायमानः तन्यमानः, कुर्वन् , कुर्वाणः, क्रियमाणः, मन्वानः, मन्यमानः, रुन्धन, रुन्धानः, रुध्यमानः, भुञ्जानः भुज्यमानः, प्रयुञ्जन् , प्रयुञ्जानः, प्रयुज्यमानः, चोरयन् , चोर्यमाणः, छादयमानः, छाद्यमानः, लक्षयन्, लक्षयमाणः, लक्ष्यमाणः, योजयन् , योज्यमानः, योजन् , युज्यमानः, अर्चयन् , अर्चमाणः, अर्च्यमाणः, वारयन् , वार्यमाणः, वरन् वरमाणः, व्रियमाणः इत्यादि नेयम् । कण्डूयन् , कण्डूयमान', कण्डूय्यमानः । बोभूयमानः, बोभूय्यमानम् , अनुबोभूय्यमानः, बोभुवत् , भावयन् , भावयमानः भाव्यमानम् , भाव्यमानः, भावयमानः स्वयमेव । आदयन् , आदयमानः आद्यमानः, तोदयन् तोदयमानः, तोद्यमान , बोभूययन् , बोभूययमानः, बोभूययमानम् , बोभूययमानः स्वयमेव । बोभावयन् । बोभावयमानः, बोभाव्यमानम् , बोभाव्यमानः, बुभूषयन् , व्यतिबुभूषयमाणः, बुभूष्यमाणम् अनुबुभूष्यमाणः, अनुबुभूष्यमाणः स्वयमेव । जिघत्सन् , व्यतिजिघत्समानः, जिघत्स्यमानम् , जिघत्स्यमानः स्वयमेव । सहृद्यत्स्यँल्ल-

टो वाऽनि ताविति लृट शत्रादेशः भविष्यन्, व्यतिभविष्यमाणम् अनुभविष्यमाण.। एधिष्यमाणम्, पक्ष्यन्, पक्ष्यमाणः, नन्दिष्यन्, अत्स्यन्, व्यत्यत्स्यमानः शयिष्यमाणम्, शायिष्यमाणम्, अतिशयिष्यमाणः, अतिशायिष्यमाणः, सोष्यन् सोष्यमाणः, बोभूयिष्यमाणः, बोभूयिष्यमाणम्, अनुबोभूयिष्यमाणः बोभविष्यन्, आदयिष्यन्, आदयिष्यमाण', बुभूषिष्यन्, व्यतिबुभूषिष्यमाणः, बुभूषिष्यमाणम्, बुभूषिष्यमाणः। बोभूययिष्यन्, बोभूययिष्यमाणः, बोभूयिष्यमाणम्, बोभूयिष्यमाणः। कण्डूयिष्यन्, कण्डूयिष्यमाणः इत्यादि नेयम्।

८०३। लिटः कसुकानौ। ३।४।७९। लिटः स्थाने अतङ्तङ्वत् कसुकानौ इत्यादेशौ भवत। ककारः कित्कार्यार्थः उकार उगित्कार्यार्थः। कसौ स्नादिनियमात् प्राप्तस्येटः क्वस्येकाज्घस इति क्वस्येकाज्घस एव वलादेरिट् नान्यतः इति नियमान्निवृत्तिः नित्यत्वात् द्विवचने कृते सति अनेकाच्त्वम् ततः स्वादयः। बभूवान्, बभूवांसौ, बभूवांसः। हे बभूवन्, हे बभूवांसौ, हे बभूवांसः। बभूवांसम्, बभूवांसौ। शसादावजादौ 'क्वस उस्' इत्युस्युवादेशे च कृते लुङ्लिटि भुवः, इत्येषां तस्योकारः। बभूवुषः, बभूवुषा, बभूवद्भ्यामिति। बभूवुषी, बभूवत् काने—व्यतिबभूवानः, बभूवानम्, अनुबभूवानः अन्फलीत्यादिनेत्वम् द्वित्वाभावश्च, तत एकाच्त्वादिट् पेचिवान्,

वलादित्वाभावे सर्वत्रेटभावः पेचुषी, पेचिवत्, पेचानः । ननन्द्वान्, ननन्दुषी, ननन्द्वत् । एवं संविविवान, संविव्युषी, संविविवत्, संविव्यानः । जक्षिवान्, जक्षुषी, जक्षिवत् व्यतिजक्षाणः, जक्षाणम्, जक्षाणः । घस्लादेशाभावे दीर्घे च कृते एकाच्त्वादिट् आदिवान्, आदुषी, आदिवत्, व्यत्यादानः, आदानम्, आदानः । कृतयणिकः द्विर्वचने कृते दीर्घेच कृते एकाच्त्वादिट् ऊचिवान् ऊचुषी, ऊचिवत्, ऊचानम्, ऊचानः । जुहुवान्, जुहुवुषी, जुहुवत्, व्यतिजुहुवानः, जुहवाञ्चकृवान्, जुहवाञ्चकृषी, जुहवांचकृवत्, जुहवांचक्राणः । इटि धातो लुगिति लुक् अभिदधिवान्, अभिदधुषी, अभिदधिवत्, अभिदधानम् । ष्ठा गतिनिवृत्तौ तस्थिवान्, तस्थुषी, तस्थिवत्, दिदिवान्, दिदिवुषी, दिदिवत्, दिदिवानः । सस्नेहिवान्, सस्नेहुषी, सस्नेहिवत्, सस्नेहिवानः, सुपुवान्, सुपुवुषी, सुपुवत्, सुपुवाणः । निश्चिचिवान्, निश्चिकिवान्, निश्चिच्युषी, निश्चिक्युषी, निश्चिचिवत्, निश्चिकिवत्, निश्चिच्यानः, निश्चिक्यानः । चिक्रीवान्, चिक्रियुषी, चिक्रीवत्, चिक्रियाणः, तुतुद्वान्, तुतुदुषी, तुतुद्वत्, तुतुदानः, तेनिवान्, तेनुषी, तेनिवत्, तनानः, रुरुध्वान्, रुरुधुषी, रुरुध्वत्, रुरुधानः, चोरयाञ्चकृवान्, चोरयाञ्चकृषी, चोरयाञ्चकृवत्, चोरयाञ्चक्राणः, अनुबोभूयाञ्चक्राणः, बोभवाञ्चकृवान्, भावयाञ्चक्राण, भावयांचक्राणम्, भावयांचक्राणः, आदयाञ्चकृवान्, आदयांचक्राणः, ज्ञापयांच-

कृवान्, कारयांचकाणः, बुभूषांचकाणः, कण्डूयाञ्चकृवान्, कण्डूयाञ्चकाणः। इत्यादि चाशेषमालक्ष्यम्।

इति शन्नादिपरिच्छेदः षष्ठः।

—०—

## अथ कृत्संग्रहः।

अथ कृत्प्रत्ययान्ताः प्रदर्श्यन्ते साध्यानाप्यादित्यादिना लक्ष्यप्रख्यार्थाः अकर्मकात् भावे भवन्ति सकर्मकात् कर्मणि भवन्ति, अविवक्षितकर्मकोऽकर्मक इति सकर्मकात् कर्माविवक्षायां भावेऽपि भवन्ति—

८०४। कृद् बहुलम् ४। ३। ५८। कृत्प्रत्ययो निर्दिष्टार्थादन्यत्राप्यर्थे बहुलं भवति।

८०५। प्राक्क्त्रि प्राप्तोऽसमः। ४। ३। ५८। इत ऊर्ध्वं क्रियांक्तिन्नित्यतः प्राक् यो विषयः तस्मिन् प्राप्तश्चासमः औत्सर्गिकश्चासरूपः प्रत्ययो भवति। अपवादेन बाधितयोत्सर्गस्यापवादविषयेऽनेन सूत्रेण समावेशः क्रियते।

८०६। घ्यण्। ४। ३। ६०। धातोर्घ्यण् प्रत्ययो भवति। कृहृइत्येताभ्यां घ्यण्। घकारः "क्तेनिट् चजः कुर्घितीति" कुत्वार्थः। णकारो "ञ्णित्यस्या" इत्याकारार्थः अक्टिदल्लुधेताविस्याकारः ततः स्वादयः। कार्यम्, हार्यम्।

पच्युजुमुज्भ्यः घ्यण्—

८०७ क्तेनिट्चजः कुर्घिति। ४। १। १७१। क्तेऽ

धातोश्चजान्तस्य कवर्गादेशो भवति घिति प्रत्यये परतः शेषं पूर्ववत्। वाक्यम्, योग्यम्, भोग्यम्। पच् इत्यतो घ्यण्।

८०८। वाक्यार्योनिदाघावदाघं नाम्नि।४।१।१७२। वाक्यादयः शब्दाः कृतकुत्वादयो नाम्नि निपात्यन्ते। वाक्यम् अन्यत्र वाच्यम्। पच्सिच् इत्यतो घ्यण्।

८०९। घ्यण्यावश्यके। ४। १। १७६। आवश्यके घ्यणि कुत्वं न भवति। अवश्यस्य भाव आवश्यकम्। मयूरव्यंसकादय इति समासः। लुम्पेदवश्यम इति मलोपः। अवश्यपाच्यम्, अवश्यसेच्यम्।

८१०। निप्राद्युजः शकि। ४। १। १७७। निप्राभ्यां परस्य युजः शक्यर्थे गम्यमाने घ्यणि कुत्वं न भवति। नियोज्यः, प्रयोज्यः, शकीति किम्? नियोग्यः, प्रयोग्यः।

८११। भुजोऽदौ। ४। १। १७८। भुजोऽद्यर्थे घ्यणि कुत्वं न भवति। भोज्य ओदनः। अदाविति किम्? भोग्यः कम्बलः।

८१२। त्यजयजः। ४। १। १७९। त्यज्यजोः घ्यणि कुत्वं न भवति। त्याज्यम्, योज्यम्। लूञ् छेदने, पूञ् पवने, भू इत्यतः—

८१३। ओरावश्यके। ४। ३। ६२। उवर्णान्ताद्धातोरवश्यंभावे द्योत्ये घ्यण् भवतीति घ्यण्। ओदौतोऽवाव्यीति अवादेशः पश्चादाकारः। लाव्यम्, पाव्यम्, भाव्यम्, लाव्यमवश्यम्, पाव्यमवश्यम्, भाव्यमवश्यम्, अवश्यला-

व्यम्, अवश्यपाव्यम्, अवश्यभाव्यम्। पूर्ववत्समासः मलोपश्च।

८१४। तव्यानीयौ । ४ । ३ । ६७ । धातोस्तव्यानीयप्रत्ययौ भवतः। भवितव्यम्, भवनीयम् पुंसा, एधितव्यम्, एधनीयम्, विद्वद्भिरित्यादि। अभिभवितव्यः, अभिभवनीयः शत्रुः। कर्तव्यः, करणीयः कटः। भर्तव्या, भरणीया भूः। दातव्यम्, दानीयं धनम्। अत्तव्यम्, अदनीयम् फलम्। अतिशयितव्यः, अतिशयनीयः परः। वक्तव्यम्, वचनीयम् हितमित्यादि। स्नाति तेनेति स्नानीयं चूर्णम्। दीयतेऽस्मै इति दानीयोऽतिथिः। समावर्ततेऽस्मादिति समावर्तनीयो गुरुः। उद्वेजनीयो राजा। मोहयत्यात्मानं मुह्यत्यनेनात्मेति वा मोहनीयं कर्म। अवश्यलवितव्यम्, अवश्यलवनीयम्, अवश्यजेतव्यम्, अवश्यजयनीयम्। पूजयितव्यः, पूजनीयः, श्रोतव्यः, श्रवणीयः, स्तोतव्यम्, स्तवनीयमित्यादि।

८१५। पवर्गान्तशकिशकशसियत्सहियजोऽयवासुवपरपलपापत्रपडिपदभचमुर्यः। ४। ३। ६८। पवर्गान्तादजन्ताच्च तादिभ्यश्च धातुभ्यो यः प्रत्ययो भवति ण्यादीन् ऋवर्णान्तांश्च वर्जयित्वा। शपि आक्रोशे शप्यम्। डुलभष् प्राप्तौ लभ्यम्, रमु क्रीडायाम् रम्यम्। डुदाञ् दाने—

८१६। ये। ४।२।८८। आकारान्तस्य धातोः ये प्रत्यये परे ईकारो भवति। पुनरक्ङित्येङ् देयम्। डुधाञ् धारणे च धेयम्। माङ् माने अनुमेयम्। आस्थेयम्। ज्ञा अवबोधने विज्ञेय-

म । प्रहेयम् । ओदौतोर्वाऽऽव्यीति अव्, भव्यम्, हव्यम्, श्रव्यम्, लव्यम्, पव्यमित्यादि । चतेङ् चदेङ् याचने चत्यम् । तक सहने तक्यम् । शक्लृ शकौ शक्यम् । शसु हिंसायां शस्यम् । यतङ् प्रयत्ने यत्यम् । षहि मर्षणे सत्वे सह्यम् । यजि देवपूजादौ यज्यम् यजादिप्रतिषेधः किम् ? यु मिश्रणे घ्यण् याव्यम्, आङ्पूर्वस्य पुञ् अभिषवे इत्यस्य आसाव्यम् । डुवपि बीजसन्ताने वाप्यम् । रप लप व्यक्तायां वाचि राप्यम्, लाप्यम् । त्रपूषि लज्जायाम् अपपूर्वः अपत्राप्यम् । डिप क्षेपे डेप्यम् । दभ इति धातुरपठितः दाभ्यम् । चमू छमू जमू झमू अदने आङ्पूर्वः आचाम्यम् । कृ—कार्यम् । तृ तार्यम् ।

८१७ । गदमदयमोऽनुपसर्गात् । ४ । ३ । ६९ । गद व्यक्तायां वाचि मदी हर्षे यम उपरमे इत्येतेभ्योऽनुपसर्गेभ्यो यो भवति । गद्यम्, मद्यम्, यम्यम् । अन्यत्र घ्यण् निगाद्यम्, प्रमाद्यम्, आयाम्यम् ।

८१८ । चरः । ४ । ३ । ७० । चरेरनुपसर्गात् यो भवति । चर्यम् ।

८१९ आङोऽगुरौ । ४ । ३ । ७१ । आङःपरात् चरेःयो भवति अगुरौ । आचर्यो देशः । गुरौ घ्यण् आचार्यो भट्टाकलङ्कः ।

८२० । वदः सुपः क्यप् च । ४ । ३ । ७४ । अनुपसर्गात् सुपः परात् वदतेः क्यप् चकाराद्यश्च । ककारोऽक्ङिदिति विशेषणार्थः । पकारस्तगर्थः क्यपिङ्ग्यादित्व-

वचः किलीति इक् स्वकृतास्युक्तमिति समासः ब्रह्मवदि-
व्यम् ब्रह्मणा वा वदितव्यम् इति । कर्मणि भावे वा प्रत्ययः
ह्मोद्यम्, ब्रह्मवद्यम्, सत्यमुद्यते इति सत्योद्यम, सत्यवद्यम् ।

८२१ । हत्याभूयं भावे । ४ । ३ । ७५ । अनुपसर्गात्
ुबन्तात् परं हत्याभूय इति भावे क्यबन्तं निपात्यते । निपा-
नात् नकारस्य तकारः । हन्तेः स्त्रीभावे ब्रम्हणो हतिः ब्रम्ह-
त्या । पूर्ववत् समासः । एवं अश्वहत्या । भवतेर्नपुंसकभावे
म्हणो भावे भवनमिति ब्रम्हभूयंगतः एवं देवभूयंगतः ।

८२२ । शास्वृञ्टजुषस्त्वेत्यृदुपान्त्यादनृचकृपचृतः ।
। ३ । ७९ । शासादिभ्यः ऋच–कृपि–चृति–वर्जितेभ्यश्च
ृकारोपान्त्येभ्यः क्यप् भवति । शासू अनुशिष्टौ ।

८२३ । शासः विङत्यङ्हलोत् । ४ । १ । २४० ।
ासोधातोः अङि क्ङिति प्रत्यये च उपान्त्यस्य इकारो भवति
ास्वसीत्यादिना षत्वम् । शिष्यम् । वृञ् वरणे आङ्पूर्वः ।

८२४ । न्हस्वस्य तक् पिति कृति । ४ । १ । ४२ ।
ह्रस्वस्य पिति कृति परे तगागमो भवति । प्रावृत्यम् । दृङ्
ादरे आदृत्यम् । जुषैङ् प्रीतिसेवनयोः जुष्यम् । ष्टुञ् स्तुतौ
ुत्यम् । इण् गतौ इत्यम् । इक् स्मरणे अधि-
वेः अधीत्यम् । एतीत्युभयोरपि ग्रहणम् । वृतूत् वर्तने वृत्यम् ।
ृधूत् श्रधूत् शब्दकुत्सायाम् ऋध्यम् श्रध्यम् । अनृचक्लृपचृत
ति किम ? ऋचः अर्च्यम् । क्लपौङ् सामर्थ्ये आरादेशे च
पौ कृपिटादेर्विति लत्वम् । कल्प्यम् । चृतै हिंसाग्रन्थनयोः

चर्य्यमिति ण्यणेव । इत्यादि ण्यवजन्तमुदाहरणीयम् । ण्वुत्र-ञ्लिहादिभ्यश्च इति ण्वु तृच् अच् इत्येते प्रत्यया भवन्ति । ते च कुल्लोतुंत्वामिति कर्तरि भवन्ति । णकारो ञ्णित्यस्या इत्याकारार्थः चकारः अचीति विशेषणार्थः ।

८२५ । वोस्कः । २ । ३ । ३४ । वु इत्येतस्य प्रत्ययस्य अक इत्यादेशो भवति । एङ्गादेशे कृते आकारः भावकः, भविता, भवः । कारकः, कर्ता, करः । नायकः नेता नयः । लिह आस्वादने लेढा लेहकः लेहः । श्लेपकः श्लेष्टा श्लेष. इत्यादि ।

८२६ । स्याऽयदाद्यतः । । । । स्यप्रत्ययान्तस्य यदादिवर्जितस्य च योऽकारः तस्यानितप्रत्ययावयवे ककारे आङ्परे परतः नित्यमिकारो भवति न चेत्स आङ् सुपः परो भवति । भाविका, भवित्री, नायिका, नेत्री, भावकम्, भवितृ, कारकम्, कर्तृ, हारकः हर्ता हरः । शकप्रच्छीत्यादिना इट्-प्रतिषेधः । शक्लृ शक्तौ, प्रच्छ ज्ञीप्सायां व्रश्चभ्रस्जेत्यादिना ष-त्वं ष्टुत्वंच । प्रष्टा । विदि विचारणे, विदि सत्तायां, विद्लृ लाभे इत्येतेषां वेत्ता । हन हिंसागत्योः हन्ता । वस निवासे वस्ता । घस्लृ अदने अदादेशः घस्ता, पाता, जेता, स्तोता इत्यादीनां वलादेरिट् भवत्येव । टुओश्वि गतिवृद्ध्योः श्वयिता । श्रिञ् सेवायां श्रयिता । डीङ् विहायसागतौ डयिता । कु रु टु क्षु शब्दे रविता क्षविता । क्ष्णु तेजने क्ष्णविता । स्नु स्रवणे प्रस्नविता । नु स्तुतौ नविता । यु मिश्रणे यविता । ऊत्-लविता, पविता ।

वृ वरिता, वरीता, प्रावरिता, प्रावरीता। ऋत्-तरिता, तरीता। मुरिसिविपवाच्च इति इट्प्रतिषेधः। मुच्लृ मोक्षणे मोचकः मोक्ता। रिचृर् विरेचने रेचकः, रेक्ता। षिचि क्षरणे सेक्ता, सेचकः। विचृर् पृथग्भावे, विवेक्ता। डुपचिष् पाके पाचकः, पक्ता। वच् परिभाषणे ब्रूआदेशो वा, वाचकः वक्ता। भ्रस्जसृयुय-विनिलमुरुभाज्जः इति इट्प्रतिषेधः भस्जी पाके,

८२७। भ्रस्जसोऽर्। ४।२।९५। भ्रस्जि इत्येतस्य यो रसितिभागः तस्य स्यङ्लिप्रत्यये विषये अरादेशो वा भवति भर्जकः, भ्रज्जकः। संयोगस्यादिस्कोर्लुगिति सकारस्य लुक् भ्रश्चेत्यादिना षत्वं ष्टुत्वंच भ्रष्टा, भर्ष्टा। टुमस्जो शुद्धौ नश्मस्ज-सोर्नेमिति सकारस्य नकारः मङ्क्ता। सृजि विसर्गे इति दिवादितुदाद्योर्ग्रहणम्। सृजृदृशां जल्यकित्यम् स्रष्टा। युजि समाधौ, युजुर् योगे इत्युभयोरपि ग्रहणम् योक्ता। यजि देवपूजादौ व्रश्चेत्यादिना षत्वम् यष्टा। विजृइ् पृथग्भावे विवेक्ता। णिजृर् शौचपोषणयोः नेक्ता। त्यज हानौ त्यक्ता। मुजो कौटिल्ये भुज पालनाभ्यवहारयोरपि ग्रहणम् भोक्ता। रुजो भङ्गे रोक्ता। भजि सेवायाम् भक्ता रभसस्वान्ज इतीट्प्रतिषेधः। रंजि रागे रङ्क्ता। भञ्जो आमर्दने भङ्क्ता। षन्ज संगे सङ्क्ता। ष्वंजि सङ्गे स्वङ्क्ता।

८२८। अक्षुनुतुस्कनृभिन्छिखिशपसहादः। ४।२।१८०। इतीट्प्रतिषेधः। अद भक्षणे अत्ता। क्षुद्र् संपेषे क्षोत्ता। णुद क्षेपे नोत्ता। तुदि व्यथने तोत्ता। स्कन्द गतिशोषणयोः

स्कन्ता । भिदिर् विदारणे भेत्ता । शदॢ शातने शत्ता । पदि गतौ प्रतिपत्ता । पदॢ विशरणगत्यवसादनेषु सत्ता । हदि पुरीषोत्सर्गे हत्ता । सत्रासाद्युबुक्कुशुरुक्षुञ्याद्धः इति इट्-प्रतिषेधः । बन्ध बन्धने बन्धा । जश्त्वेन दकारः । राध वृद्धावेव, राध साध संसिद्धौ इत्युभयोरपि ग्रहणम्, राद्धा, साद्धा । युधि संप्रहारे योद्धा । बुध अवगमने बोद्धा । बुधी मनी ज्ञाने इत्युभयोरपि ग्रहणं बोद्धा । क्रुध कोपे, क्रोद्धा । शुध शोके शोद्धा । रुधृञ् आवरणे रोद्धा । क्षुध बुभुक्षायाम् क्षोद्धा । व्यध ताडने व्यद्धा । आवलिलुक्षिच्छुरत्त्स्वतिशतारयः इति प्रतिषेधः । आप्ॢ व्याप्तौ आप्ॢ लम्भने इत्युभयोरपि ग्रहणम् आप्ता । डुवपि बीजसन्ताने वप्ता । लिपि उपदेहे लेप्ता । लुप्ॢञ् छेदने लोप्ता । क्षिप प्रेरणे क्षिपि प्रेरणे इति दिवादितुदाद्यो-र्ग्रहणम् क्षेप्ता । छुप स्पृश स्पर्शने छोप्ता । गम्ॢ सृप्ॢ गतौ ।

८२९ । वृप्तृप्स्तुपक्रुपिस्पृशमृशो वा । ४ । २ । १९५ ।
दृप्, तृप्, सृप्, कृप्, स्पृश्, मृश् इत्येतेषां किति जलादौ प्रत्यये अमागमो वा भवति । इति पक्षे अमागमः । स्रप्ता, सर्प्ता । ञिष्वप् शये स्वप्ता । तिपृङ् टिपृङ् क्षरणे तेप्ता । शपि आक्रोशे शप्ता । धूप तप सन्तापे यरलाद्ध इतीट्प्रतिषेधः यभ मैथुने यब्धा । रभि राभस्ये, आरब्धा । डुलभष् प्राप्तौ लब्धा रयनगान्मः इतीट्प्रतिषेधः । रमि क्रीडायाम् रन्ता । यम उ-परमे यन्ता । णम प्रह्वत्व नन्ता । 'दन्दहलिविस्पृमृदिरुक्रुरेः शः इतीट्प्रतिषेधः । दंश दशने दंष्टा, दृश् प्रेक्षणे द्रष्टा । लिश लिप गतौ

लेष्टा। विश प्रवेशने प्रवेष्टा। छुप, स्पृश स्पर्शने स्प्रष्टा, स्पर्ष्टा। मृश आमर्शने, आम्रष्टा, आमर्ष्टा। दिशि अतिसर्जने देष्टा। रुश, रिश हिंसायाम् रेष्टा, रोष्टा। क्रुश आह्वानरोदनयोः क्रोष्टा। शिशुद्विषिकृषितुशोः ष इति इट्प्रतिषेधः। शिष्लृ विशेषणे शेष्टा। शुष शोषणे शोष्टा। द्विष अप्रीतौ द्वेष्टा। त्विषि दीप्तौ त्वेष्टा। कृषि विलेखने इत्युभयोरपि ग्रहणम् क्रष्टा, कर्ष्टा। पिष्लृ संचूर्णने पेष्टा। शिषृ, विषृ, मिषृ, पृषु, वृषु, उक्ष सेचने, विष्लृ व्याप्तौ, विष प्रयोगे इति त्रयाणां ग्रहणम्। वेष्टा। तुष तुष्टौ, तोष्टा। दुष वैकृत्ये दोष्टा। घनगिदुहदिहिलिहाद् ढः इति इट्प्रतिषेधः वहि प्रापणे अतः ढः इति ढकारः। अध इति तकारस्य धकारः। ष्टुत्वेन तस्य ढकारः। ढोढ्रीति पूर्वढकारस्य लुकि सहिवहोरोरित्यकारस्य ओकारः वोढा। णहि बन्धने, नहो ध इति हकारस्य धकारः तत भष्त्वादि नद्धा। मिह सेचने मेढा। दुहि प्रपूरणे दादेर्धातोर्घः इति घकारः ततः भष्त्वादि दोग्धा। रुह बीजजन्मनि प्रादुर्भावे आरोढा। दिहि उपदेहे देग्धा। लिहि आस्वादने लेढा। दह भस्मीकरणे दग्धा। स्विद्यन्मिधिक्लिषिपुषः श्यात् इतीट्प्रतिषेधः। स्विधा गात्रप्रक्षरणे स्वेत्ता। बुधि मनि ज्ञाने मन्ता। विधू संराद्धौ सेद्धा। श्लिष आलिङ्गने आश्लेष्टा। पुष पुष्टौ पोष्टा।

८३०। गाङ्कुटादिभ्योऽञ्णिन्ङित्। ४। १। १४४। गाङ् इत्येतस्य कुटादीनां च धातूनां ञ्णिति प्रत्यये ङिद्वत् ङित्कार्यं भवति। संकुटिता, संकोटकः, उत्पुटिता, उत्पोटकः।

८३१ । इटि विजः । ४ । १ । १४५ । विजेर्धातो-रिडादौ प्रत्यये ङित्कार्यं भवति । उद्विजिता ।

८३२ । हनोनस्तोऽञिणे । ४ । १ । २३८ । हन्तेः ञिणशुवर्जिते ञ्णिति नकारस्य तकारो भवति ।

८३३ । हो घः । ४ । १ ।२३९। हन्तेर्ञ्णिति हकारस्य घकारो भवति । घातक , हन्ता । आतोयमिति यम् दायकः, दाता । विधायकः, विधाता, अवसायकः, अवसाता, गायकः, गाता ।

८३४ । मजन्मघोऽयंरंनंगंवंकंचमः कृञ्ञौ । ४ । १ । २३६ । मान्तस्य यमादिवर्जितस्य धातोः जनिवध्यो-श्चोपान्त्याकारस्य कृति ञौच ञ्णिति आकारो न भवति । शमकः शमिता, दमक. दमिता, जनकः, जनिता, बधकः बधिता ।

८३५ । जभोऽचि । ४ । २ । १९९ । जभो धातो-रजादौ प्रत्यये नम् भवति । जंभकः, जंभिता ।

८३६ । रधः । ४ । २ । २०० । रधो धातोरजादौ प्रत्यथे नम् भवति । रधादौविद्भ्व इति पक्षे इट् ।

८३७ । नेटघलिटि । ४ । २ । २०१ । रधः इडा-दावलिटि नम् न भवति । रधिता ।

८३८ । रभः । ४ । २ । २०२ । रभो लिड्वर्जितेऽ-जादौ प्रत्यये नम् भवति । आरंभकः ।

८३९ । लभः । ४ । २ । २०३ । लभो लिड्वर्जितेऽ-

जादौ प्रत्यये नुम् भवति । लंभकः ।

८४० । सहलुभेच्छरुषरिषस्ति । ४ । २ । १६२ । सहादिभ्यस्तकारे परे वलादेरार्धधातुकस्य इड् वा भवति । सहिता, लोभिता, एषिता, रोषिता रेषिता । इडभावे सोढा इत्यादि पूर्ववत् ।

८४१ मृजुः । ४ । १ । २३२ । मृजेर्धातोः ऋवर्णस्य स्थाने योऽकारस्तस्य आकारो भवति । सम्मार्ष्टा, सम्मार्जिता, सम्मार्जक इत्यादि । बोभूयकः बोभूयिता, पापचकः, पापचिता । णिलुक् भावकः भावयिता, कारकः, कारयिता, बुभूषकः, बुभूषिता इत्यादि । कृद्बहुलमिति । पादाभ्यां ह्रियते इति पादहारकः । गले चुप्यते इति गलेचोपकः । हलतः सप्तम्याः इति सुपोऽस्लुक् । इत्यादि नेयम् ।

८४२ । नन्द्यादिभ्योऽनः । ४ । ३ । ८६ । नन्द्यादिभ्यः अन् प्रत्ययो भवति नन्दयतीति नन्दनः णिलुक् नाशनः मदनः । घटादिः "ऊद्दुषोणौ" इत्यूकारः दूषणः, साधनः, वर्द्धनः, शोभनः, रोचनः, अत्र ण्यन्तेभ्योऽनः सहनः, तपनः इत्यादि ।

८४३ । ग्रहादिभ्यो णिन् ।४ । ३ । ८७ । ग्रहादिभ्यः णिन् प्रत्ययो भवति गृह्णातीति ग्राही, उद्भासते इत्युद्भासी, तिष्ठतीति स्थायी, मन्त्रयतीति मन्त्री, सम्मर्दतीति सम्मर्दी इत्यादि ।

८४४ । ज्ञाकॄगॄप्रीगुपान्त्यात् कः । ४।३।९४ । ज्ञादि-

भ्य इगुपान्त्येभ्यश्च धातुभ्यः कप्रत्ययो भवति । इटि चातो लुगित्याकारस्य लुक् जानातीति ज्ञः । कॄ विक्षेपणे अन्त्योपान्त्यर्ताभिरिति इर् किरः । गॄ निगरणे—

८४५ । ग्रोऽचि । ४ । २ । २५७ । गॄ इत्यस्य धातोः विहितेऽजादौ प्रत्यये परे रेफस्य लो वा भवति । गिरतीति गिरः, तिगिलः । प्रीञ् तर्पणे प्रीणातीति प्रियः, लिख अक्षरविन्यासे विलिखः, बुधः, युधः इत्यादि ।

८४६ । उपसर्गादातोऽनिक् । ४ । ३ । ९५ । उपसर्गात्परादाकारान्ताद्धातोः कप्रत्ययो भवति इक् चात्र न भवति । प्रस्थः, ग्लै हर्षक्षये सुग्लः, म्लै गात्रक्षये सुम्लः । अनिगिति किम् ? ह्वेञ् स्पर्धायां वा प्रह्वः । ह्वयादित्यादिना इग् न भवति । ज्या वयोहानौ प्रज्यः । तत्रवशिव्यचीत्यादिना इक् न भवति ।

८४७ । सहादिग्रहाद्वा । ४।३।९९ । सहादिभ्यः ग्रहेश्च धातोरनुपसर्गात् णो वा भवति । सहः साहः पक्षे अच् । रमः रामः, बुधः, बोधः, ज्वल, ज्वाल, चलः, चालः, ग्रहः, ग्राहः ।

८४८ । श्यात्त्व्यधास्रुसंस्रवसावन्हतीणश्वस । ४ । ३ । १०० । श्यैङ आदन्तात् तनादिभ्यश्च णो भवति । श्यैङ् गतौ आतो यमिति यम् अवश्यायः, प्रतिश्यायः, दायः, ग्लायः, म्लायः, तानः, उत्तानः, व्याधः । स्रु गतौ आस्रावः, संस्रावः, षो अन्तकर्मणि अवसायः, अवहारः, अत्यायः, श्वासः ।

८४९ । आशिषि वुन् । ४ । ३ । १०७ । अभीष्टस्य

प्रार्थना आशीः तस्यां धातोर्वुन् भवति जीवतादित्याशास्यमानो जीवकः, नन्दकः, भवकः। नकारः इच्चापुंसोसीत् क्याद्यसुपः इति पर्युदासार्थः तेन त्यायदाद्यतः इतीत्वं न भवति। जीवका, नन्दका, भवका। कर्मणोऽणित्यण् कुंभं करोतीति कुम्भकारः, नगरकारः, काण्डलावः, वेदाध्यायः, चर्चापाठः, छत्रधारः, द्वारपालः इत्यादि। कुम्भकारी, नगरकारी इत्याद्यपि।

८५०। आतोऽह्वावामोऽड्। ४। ३। ११३। कर्मणः परात् ह्वावामावर्जितादाकारान्तात् अनुपसर्गाद्धातोः ड्इकारप्रत्ययो भवति। अणोऽपवादः। गोदः कम्बलदः, तनुत्रम्, सर्वज्ञः, क्षितिपः, ब्रह्मज्यः, अह्वावामा इति किम्? स्वर्गह्वायः, तन्तुवायः, धान्यमायः। अनुपसर्गादिति किम्? गोसन्धायः।

८५१। आशिषि घ्नः। ४। ३। ११८। आशिषि गम्यमानायां कर्मणः परात् हन्तेरड् भवति। तिमिं बध्यादित्याशंसितः तिमिहः, शत्रुहः, पापहः।

८५२। अमनुष्ये टक्। ४। ३। ११९। कर्मणः परात् हन्तेरमनुष्ये कर्तरि टग् भवति। वातं हन्ति शमयतीति वातघ्नमाविकं क्षीरम्। "गमहनजनखनघसोऽनङ्यचि लुक् क्ङि" इति अल्लुक्। पित्तघ्नं माहिषं पयः। श्लेष्मघ्नः कटुकः। शशं हन्ति मारयतीति शशघ्नी शकुनिः। टित्वाद् ङी जायां हन्तीति जायाघ्नः तिलकालकादिः, पतिघ्नी पाणिरेखा।

८५३। जायापतेर्लक्षणे। ४। ३। १२०। जा—

तिर्भ्यां कर्मभ्यां परात् हन्तेर्लक्षणवति कर्तरि मनुष्ये टक् प्रत्ययो भवति । लक्षणं शुभाशुभसूचकं शरीरस्थं किञ्चित्तिलकालकादि । जायाघ्नः ब्राह्मणः येन तिलकालकादिना लक्षणेन जायां हन्ति तद्युक्त इत्यर्थः । एवं पतिघ्नी कन्या ।

८५४ । हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात् । ४ । ३ । १३३ । हेतुरैकान्तिकं कारणम्, तच्छीलः तत्स्वभावः अनुकूलः आराध्यचित्तानुवर्ती शब्दादिवर्जितात् कर्मणः परात् कृञो हेत्वादिषु कर्तृषु टो भवति । यश एव एकान्तेन करोतीति यशस्करी विद्या, शोककरी कन्या, कुलकरं धनम्, तच्छीलेषु पूजाकरः, श्रद्धाकरः, अनुकूले प्रेषणकरः, वचनकरः । शब्दादिप्रतिषेध. किम् ? शब्दकारः, श्लोककारः, कलहकारः, गाथाकारः, वैरकारः, चाटुकारः, सूत्रकारः मन्त्रकारः, पदकारः ।

८५५ । कर्तुः खश् । ४ । ३ । १४६ । कर्मणः परात् मन्यतेः खशो भवति, प्रत्ययार्थः कर्तैव चेत् कर्म भवति । शित्वात् दिवादिभ्यः श्य इति श्यः, खित्वात् मम्, पण्डितमात्मानं मन्यते इति पण्डितंमन्यः, सर्वज्ञंमन्यः ।

८५६ । गमः खखड्डाः । ४ । ३ । १५९ । सुबन्तात् परात् गमेः खखड्डाः प्रत्यया भवन्ति बहुलम् ।

८५७ । खित्यरुर्द्विषतश्चानव्ययस्य २ । २ । ७८ । अनव्ययस्याजन्तस्य अरुस्द्विषतोश्च खिदन्त उत्तरपदे मम भवति । सुतं गच्छतीति सुतंगमः, तुरंगमः, भुजेन भुज इव

गच्छतीति वा भुजंगम , प्लवंगमः, मितंगमः, अमितंगमा हस्तिनी, हृदयंगमा वाचः । खड् तुरंगः, प्लवंगः, भुजंगः, पतंगः, अन्तंगः, अत्यन्तंगः अध्वंगः, दूरंगः, पारंगः, सर्वंगः, प्लवगः, पतगः, अन्तगः, अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, सर्वत्रगः, पन्नगः, ग्रामगः, स्त्र्यगारगः, गुरुतल्पगः । बहुलाधिकारात् यथाप्रयोगदर्शनं व्यवस्था ।

८५८ । विहायसो विहश्च । ४ । ३ । १६० । विहायसः सुबन्तात् परात् गमेः खलड्डा भवन्ति विहायसश्च विहादेशः । विहायसं गच्छतीति विहंगमः, विहंगः, विहगः ।

८५९ । उरगः । ४ । ३ । १६१ । उरस्शब्दात्त गमेः डः सलुक्च निपात्यते, उरसा गच्छतीति उरगः ।

८६० । सुगदुर्गमाधारे । ४ । ३ । १६२ । सुग दुर्ग इत्याधारे डप्रत्ययान्तौ निपात्येते । सुखेन गम्यते तस्मिन्निति सुगो देशः, दुःखेन गम्यते तस्मिन्निति दुर्गो देशः ।

८६१ । स्थः कः । ४ । ३ । १७१ । सुबन्तात परात् तिष्ठतेः को भवति । समे तिष्ठतीति समस्थः, विषमस्थः ।

८६२ । गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निमञ्जिपुञ्जिशेकुशङ्कुकङ्ग्वङ्गुबर्हिर्दिविपरमेः ष्ठः । २ । २ । १४५ । गवादिभ्यः परस्य स्थ इत्युत्तरपदस्य ष्ठ इति विनिपात्यते । गोष्ठम्, अम्बाष्ठः, अम्बष्ठः, सव्यष्ठः, अपष्ठः, द्विष्ठः, त्रिष्ठः, भूमिष्ठ, अग्निष्ठः, मञ्जिष्ठः, पुञ्जिष्ठः, शेकुष्ठः, शंकुष्ठः, कुष्ठः, अंगुष्ठः, बर्हिष्ठः, दिविष्ठः, परमेष्ठः । अत एव निपातनादश्लुक् ।

८६३ । मूलविभुजादयः । ४ । ३ । १७४ । मूलविभुजादयोऽनियतार्थधातूपपदाः कप्रत्ययान्ता यथाशिष्टप्रयोगं साधवो वेदितव्याः । मूलानि विभुजतीति मूलविभुजो रथः । नखान् मुञ्चन्तीति नखमुचानि धनूंषि । काकेभ्यो गूहितव्याः काकगुहास्तिलाः । कौ मोदते इति कुमुदम् । द्वाभ्यां पिबतीति द्विपः, अनेकपः, कच्छपः, पादपः । धर्माय प्रददातीति धर्मप्रदः, कामप्रदः, स्वर्गप्रदः, शास्त्रं प्रजानातीति शास्त्रप्रज्ञः, आगमप्रज्ञः इत्यादि ।

८६४ । विण् भजः । ४ । ३ । १७५ । सुबन्तात् परात् भजेः विण् प्रत्ययो भवति । णकारो णित्कार्यार्थः इकार उच्चारणार्थः । वकारः विण्क्विपोः साम्यार्थः । तेनेह क्विप् न भवति अर्द्धं भजतीति अर्द्धभाक्, पादभाक्, प्रभाक् ।

८६५ । स्पृशोऽनुदकात् क्विप् । ४ । ३ । १७६ । सुपः स्पृशः क्विप् भवति नोदकात् । स सर्वोऽप्रयोगी कित्वादरेऽभावः, पकारस्तगर्थः, इकार उच्चारणार्थः, वकारो विण्क्विपोः साम्यार्थः । घृतं स्पृशतीति घृतस्पृक् । अनुडुदित्यादिना कुत्वम् । मन्त्रेण स्पृशतीति मन्त्रस्पृग् मन्वन्क्वनिब्विच्च दृश्यते इति मनादयः प्रत्यया भवन्ति । सुष्ठु शृणातीति सुशर्मा, न्यगिति दीर्घः न लुक् । सुष्ठु तरतीति सुतर्मा, शृणाति दुःखमिति शर्म सुखम । वृणाति शरीरमिति वर्म तनुत्रम्, हिनोति व्यवहारमिति हेम सुवर्णम्, ददातीति दाम । दृशिग्रहणात् निरुपपदादपि प्रत्ययः, विजायते इति विजावा

"वन्यनुनासिकस्याः" इति नकारस्याकारः। एवमग्रे गच्छतीति अग्रेगावा । तत्पुरुषे कृति बहुलमिति अलुक् । कनिप्-पकारस्तगर्थः, कित्वादेङभावः, इकार उच्चारणार्थः प्रातरेतीति प्रातरित्वा, करोतीति कृत्वा, ध्यायतीति धीवा, प्यायते इति पीवा। ध्यै चिन्तायाम् । स्वायैङ् ओप्यायैङ् वृद्धावित्यनयोः दृशिग्रहणात् साचो यत्र इक् "दीर्घोचोवः" इति दीर्घः। विच् विशतीति वेट् सर्वोऽप्रयोगी, इकार उच्चारणार्थः चकार पूर्ववत चकारः पूर्वाचार्यानुबन्धः, तस्येहोपादानं तत्संबन्धि किञ्चिदिहाश्रीयते इति सूचनार्थः एडि पत्वजश्त्वे वेट् रिशित्यस्य रेट्, जागर्तेर्जागः। शुभमित्यम् पूर्वस्य शुभं यातीति शुभंया, कीलाल पिबतीति कीलालपाः, क्विप् अन्तरिक्षं सीदतीति अन्तरिक्षसत्। एव प्रसत्, उपसत्। षूङ् प्राणिगर्भ-विमोचने अण्ड सूते इत्यण्डसूः, शतसूः, प्रसूः, मित्रं द्वेष्टीति मित्रद्विट्, जश्त्वेन डकारः, प्रद्विट्, द्विड्, मित्राय द्रुह्यतीति मित्रध्रुक्, प्रध्रुक्, गां दोग्धीति गोधुक्, कामधुक्, प्रधुक्, अश्वं युनक्ति युज्यते इति वा अश्वयुक्, युजि समाधौ प्रयुक् युजीति पूर्ववत । विद ज्ञाने विदि विचारणे तत्त्वं वेत्ति जानाति, विन्ते विचारयति वा तत्त्ववित्, प्रवित् , विदन्ति विद्यन्ते वा विदः तेषां वरः विदावरः, काष्ठं भिनत्तीति काष्ठभित्, प्रभित्, भित्, तमश्छित्, भवच्छित् शत्रु जयतीति शत्रुजित्, प्रजित्, प्रसेनजित्। तक् छिद्, विराट्, सम्राट् राजराट्, मित्रभूः, प्रतिभवतीति प्रतिभूः। यो धनिकाधमर्ण-

योरन्तरे तिष्ठति स प्रतिभूरित्युच्यते । उखास्रत् , पर्णध्वत् , प्राङ् , सम्यङ् , ऋत्विक् , दधृक् , परिव्राडिति निपातनात् द्वित्वे कुत्वे दृशिग्रहणं प्रयोगानुसरणार्थम् ।

८६६ । त्यदाद्यन्यसमानाद् गौणाद् दृशेराप्ये क्विक-टक्साः । ४ । ३ । १८० । त्यदादेरन्यशब्दात् समानशब्दाच्च गौणादुपमानवृत्तेः सुबन्तात् परात् दृशेर्धातोः आप्ये कर्मणि क्विप्–कट्–क्सा इत्येते प्रत्यया भवन्ति । त्य इव दृश्यते इति कर्मणि क्विः स सर्वोऽप्रयोगी किरवादरभावा इकार उच्चारणार्थः चकारस्साम्यार्थः स्वकृतास्युक्तमिति समासे सोः श्लुचि आयदृग्दृश इत्यादिना आकारः त्यादृक्, त्यादृशौ, त्यादृशः " टिट्ठणट्टे " इत्यादिना ङी त्यादृशी । व्रश्चभ्रज्जेत्यादिना षकारे षढः कस्सीति षकारस्य ककारः त्यादृक्षः । य इव दृश्यते इति यादृक्, यादृशः, यादृशी, यादृक्षः । स इव दृश्यत इति सादृक् , तादृशः, तादृशी, यादृक्ष इत्यादि । अन्य इव दृश्यत इति अन्यादृगित्यादि । समान इव दृश्यत इति सदृगित्यादि । सस्समानस्य धर्मादिषु चेति समानस्य स इत्यादेशः ।

८६७ । कर्तुर्णिन् । ४ । ३ । १८१ । कर्तृवाचिनो गौणात् सुबन्तात् धातोर्णिन् भवति उष्ट्र इव क्रोशतीति उष्ट्रक्रोशी, ध्वांक्षरावी, रासभरावी, गरनर्दी, सिंहनर्दी ।

८६८ । शीलेऽजातेः । ४ । ३ । १८२ । शीलेऽर्थे वर्तमानाद्धातोः सुबन्तादजातिवाचिन· परात् णिन् भवति ।

यत्र फलनिरपेक्षः स्वभावेनैव प्रवर्तते स क्रियाविशेषः शीलम् । उष्णं भुङ्क्ते तच्छीलश्चेति उष्णभोजी, शीतभोजी, उदासरन्ति तच्छीलाश्चेति उदासारिण्यः, प्रत्यासारिण्यः, प्रस्थायी, प्रतिबोधी, प्रयायी ।

८६९ । व्रताभीक्ष्ण्ये । ४ । ३ । १८३ । सुबन्तात् परात् धातोः व्रते आभीक्ष्ण्ये च गम्यमाने णिन् भवति । शास्त्रचोदितः प्रोक्तो वा नियमः प्रवृत्तिनिरोधः शयनभोजनादेः क्रियाविषयान्तरात् व्यावर्तमानं तद् व्रतम्, पुनः पुनर्यद् भवति तत् अभीक्ष्णं तस्य भावः आभीक्ष्ण्यम् । पार्श्वे एव शेते पार्श्वशायी, स्थण्डिल एव शेते स्थण्डिलशायी, अश्राद्धमेव भुङ्क्ते अश्राद्धभोजी, अलवणभोजी । आभीक्ष्ण्ये—कषायमभीक्ष्णं पिबन्तीति कषायपायिणो गान्धाराः क्षीरपायिण उशीनराः सौवीरपायिणो वाह्लीकाः ।

८७० । जनोऽनौढः । ४ । ३ । १९७ । कर्मणः परादण्यनुपूर्वाज्जनेः भूतेऽर्थे डो भवति । अणोऽपवादः । पुमांसमनुजाता पुमनुजा, स्त्र्यनुजा, अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति जनेः सकर्मकत्वम् ।

८७१ । सप्तम्याः । ४।३।१९८ । सप्तम्यन्तात् जनेः भूतेऽर्थे डो भवति । उपरसे जाता उपरसजः "हलतः सप्तम्याः" इत्यलुक् । अप्सु जातम् अप्सुजम्, सरसिजम् ।

८७२ । अजातेः पञ्चम्याः । ४ । ३ । १९९ । पञ्चम्यन्तादजातिवाचिनः जनेः डो भवति । बुद्धेर्जातः बुद्धिजः,

संस्कारजः, शोकजः, दुःखजः ।

८७३ । क्वचित् । ४ । ३ । २०० । अन्यस्मिन्नपि विषये डो भवति लक्ष्यानुसारेण। किंजातेन किंजः, अलंजातेन अलंजः द्वौ वारौ जन्मनोपनयेन च जातो द्विजः, न जातः अजः, अत्रिजः, उपजाः, परिजाः, केशजाः, प्रजाः, अनुजः, स्त्रीजमनृतम्, ब्राह्मणजः पशुवधः, क्षत्रियजं युद्धम्, अद्भ्यो जातमब्जम् । अन्यस्मादपि धातोर्भवति, वर-माहन्ति वराहः, परिखाता परिखा, आखा, उपखा, अटत्यतती-ति वा अः, कायति कौति कवति वा कः। खनति खन्यते वा खम्, भातीति भम् ।

८७४ । भस्मादयः । ४ । ३ । २०३ । भस्मप्रादि-शब्दाः मन्नादिप्रत्ययान्ता भूतेऽर्थे साधवो वेदितव्याः । भस भर्त्सनदीप्त्योः भसितं तदिति भस्म, चरितं तत्रेति चर्म, वृत्तं तत्रेति वर्म ।

८७५ । क्तक्तवतू । ४ । ३ । २०४ । धातोर्भूतेऽर्थे वर्तमानात् क्तक्तवतू प्रत्ययौ भवतः । "साप्यानाप्याल्लक्ष" इत्यादिना कर्त्रपवादेन साप्यात् कर्मणि भवत्यनाप्याद्भावे क्तः क्तवतुस्तु कर्तरि । ककारः कित्कार्यार्थः उकार उगित्कार्यार्थः । कृतः, कृतवान्, शयितम्, शयितवान्, भूतम्, भूतवान्, भू-तवती, नुतः, नुतवान्, नुतवती, णेरिक्तेत्यादिना णेर्लुक् भावि-तम्, कारितम्, पाचितम्, गमितम्, जनितम्, रक्षितम् ।

८७६ । क्तयोः । ४ । २ । १४२ । निष्कुषः क्तयोः

इड् नित्यं भवति । निष्कुपितः निष्कुपितवान् ।

८७७ । न डीयश्व्यैदिद्वेट्ऽपतः । ४ । ७ । १४३ । डीयश्वि इत्येताभ्यां ऐकारानुबन्धात् यत्र कचित विकल्पितेटश्च धातोः क्तयोरिड् न भवति पतिं वर्जयित्वा । डीङ् गतौ—

८७८ । क्तयोर्द्रश्यैदिरसूयत्यादेर्दस्य चामन्मूर्छः ।४। १ । २४६ । दकारान्तात् रेफान्तात् श्यायतेरौदितः सूयत्यादेश्च मन्मूर्छिवर्जितात् धातोः तकारायोः क्तयोरादेर्नकारो भवति तत्संनियोगे पूर्वद्कारस्य च नकारः । डीनः, डीनवान् । श्यनिर्देशादेधादेरिड् भवत्येव । डयितः, डयितवान् । टुओश्वि गतिवृद्धयोः 'श्व्यादिस्वव्यचः किति' इति साचो यस्य इक् 'दीर्घोऽचोऽवः' इति दीर्घः शूनः शूनवान् । ओलस्जैङ् व्रीडे संयोगेति लुक् लग्नः, लग्नवान् । ओविजैङ् भयचलनयोः उद्विग्नः, उद्विग्नवान् । वेटः—अपरद्धः, अपरद्धवान् । रधाद्यौदिद्भूञः इति विकल्पितेट्त्वम् , 'रयनगाम्मः' इतीड् न भवति हन्मन्यमित्यादिना लुक् रतः रतवान् । यतः, यतवान् नतः, नतवान् , गतः, गतवान्, सोढः, सोढवान् । हृषेर्लोमविस्मयप्रतिघाते इतीड् न भवति हृष्टः, हृष्टवान् । गेहनिदुवृश्विसो वा इति विकल्पितेट्त्वम् विन्नः, विन्नवान् ।

८७९ । आदितः । ४ । १ । १५१ । आदितो धातोः क्तयोरिड् न भवति । ञिमिदा स्नेहने मिन्नः, मिन्नवान् । ञिक्ष्विदा मोचने क्ष्विण्णः क्ष्विण्णवान् ।

८८० । ॠल्वादेः क्तक्तिनान्नोऽप्रः । ४ । १ । २४५ । ॠकारान्तात ल्वादिभ्यश्च परयोः क्तक्तवतोः क्तिनश्चादेर्नकारादेशो भवति पॄ इत्येतद्वर्जयित्वा । " अन्त्योपान्त्यतामिरितीर् " धातोर्भिगित्यादिना दीर्घः कीर्णः, कीर्णवान्, । कीर्णः कीर्णवान्, निशीर्णः निशीर्णवान् । " क्रित्युकृश्न्यूर्णुवः " इतीड् न भवति लूनः, लूनवान, दूनः दूनवान्

८८१ । हलो यञ आतोऽध्याख्यः । ४ । १ । २४७ । ध्याख्यावर्जितस्य धातोः हलः परात यञः परो य आकारः तस्मात् परयोस्तकारायोः नकारो भवति । संस्त्यानः, संस्त्यानवान्, निद्राणः, निद्राणवान्, म्लानः, म्लानवान्, ग्लानः, ग्लानवान् । हल इति किम् ? यातः, यातवान् । यञ इति किम् ? प्रभातम्, स्नातम्, ध्यातम् । अध्याख्य इति किम् ? ध्यातः ध्यातवान्, ख्यातवान् ।

८८२ । धादिव्यञ्चेर्नाशाजिगीषापादाने । ४ । १ । २४८ धादि वि अंचि इत्येतेभ्यः यथासंख्यं नाशे अजिगीषायां अनपादाने च धातोः क्तयोः नकारो भवति । धानाः यवाः, आद्यूनो देवदत्तः, समक्नौ शकुनेः पक्षौ । अन्यत्र धातम्, धान्यम्, द्यूतं वर्तते । उदक्तमुदकं कूपात् " शूच्छ्वोऽनुनासिके च " इति शूचौ भवतः । धाव् धौतः । भ्रश्चेत्यादिसूत्रेण पदयम् वशिव्यचीत्यादिना इक् पृष्टः पृष्टवान्, पिव् स्यूतः स्यूतवान् ।

८८३ । निर्वाणोऽवाते । ४ । १ । २५० । निर्वाण

इति निस्पूर्वात् वातेरुत्तरस्य नत्वं निपात्यते अवाते कर्तरि। निर्वाणो मुनिः, निर्वाणः प्रदीपः। अन्यत्र निर्वातो वातः निर्वातम् वातेन।

८८४। स्त्यः प्रपूर्वस्य। ४। ३। १३०। प्रपूर्वो यः स्त्या इति धातुः तस्य क्तयोः सायो यत्र इक् भवति। "दीर्घोऽचोऽवः" इति दीर्घः।

८८५। प्रस्त्यो मः। ४। १। २५५। प्रपूर्वात् स्त्यायतेः क्तयोर्मकारो वा भवति। प्रस्तीमः, प्रस्तीमवान्, प्रस्तीतः प्रस्तीतवान्।

८८६। क्षः। ४। १। २५६। क्षै क्षये इत्येतस्मात् क्तयोस्तकारस्य मकारो नित्यं भवति। क्षामः क्षामवान्।

८८७। शुष्पचः कम्। ४। १। २५७। शुष्पच्योः क्तयोः यथासंख्यं ककारवकारौ भवतः। शुष्कः, शुष्कवान् पक्वः पक्ववान्।

८८८। श्लिषशीङ्स्थासूपास्वसजनरुहारम्भात् क्तः। ४। ३। ५२। श्लिषादिभ्यः आरंभात् आदिकर्मार्थेभ्यश्च धातुभ्यः यः क्तः स कर्तरि वा भवति। आश्लिष्टः कन्यां छात्रः आश्लिष्टा कन्या छात्रेण। अतिशयितो गुरुं देवदत्तः, अतिशयितो गुरुर्देवदत्तेन, अतिशयितं देवदत्तेन।

८८९। दोसोमास्थां क्ति। ४। २। १०९॥ द्यतिस्यतिमास्थां किति तकारादौ प्रत्यये परे इकारो भवति। उपस्थितो गुरुं छात्रः उपस्थितो गुरुश्छात्रेण, शयितो गुरुर्देवदत्तेन,

अनुजीर्णो वृषली देवदत्तः, अनुजीर्णो वृषली देवदत्तेन, उपासितो गुरुं छात्रः उपासितो गुरुश्छात्रेण, उपासितं छात्रेण, अनूषितो गुरुं देवदत्तः, अनूषितो गुरुर्देवदत्तेन, अनूषितं देवदत्तेन ।

८९० । जनसनखनाम् । ४ । १ । २६७ । जनादौ क्ङिति प्रत्यये आकारो भवति । अनुजातो माणविकां माणवकः, अनुजाता माणविका माणवकेन, अनुजातं माणवकेन, आरूढो वृक्षं देवदत्तः आरूढो वृक्षो देवदत्तेन, आरूढं देवदत्तेन, प्रकृतः कटं देवदत्तः प्रकृतः कटो देवदत्तेन प्रकृतम् देवदत्तेन, प्रभुक्त ओदनं देवदत्तः प्रभुक्त ओदनो देवदत्तेन, प्रभुक्तं देवदत्तेन ।

८९१ । गत्यकर्मण्याधारे च । ४ । ३ । ५३ । गत्यकर्मकेऽर्थे वर्तमानाद्धातोः क्तः आधारे चकारात् कर्तरि च वा भवति । इदमहेस्सृप्तम् । इदं यातम्, गतं देवदत्तस्य, गतो देवदत्तो ग्रामम्, गतो देवदत्तेन ग्रामः, गतं देवदत्तेन इदमेषां शयितम्, आसितम्, आसितः शयितो देवदत्तः, आसितं, शयितं देवदत्तेन । भुक्ता ब्राह्मणाः पीता गाव इति मत्वर्थीयोऽकारः ।

८९२ । अदौ । ४ । ३ । ५४ । अभ्यवहारार्थाद्धातोः क्तः प्रत्ययः आधारे च भवति ।

८९३ ।-जग्धदः त्यंच । ४ । २ । ११८ । अदीरयस्य धातोः तकारादौ किति त्यंच प्रत्यये परे जग्धित्यादेशो

भवति । इदमेषां अशनं भुक्तं पीतम्, भुक्त ओदनः पीतमुदकं देवदत्तेन, भुक्तं, पीतं देवदत्तेन ।

८९४ । मतिपूजार्थञिच्छील्यादिभ्यः क्तः । ४ । ३ । २७९ । मत्यर्थेभ्यः पूजार्थेभ्यः ञिद्भ्यः शील्यादिभ्यश्च वर्तमानेऽर्थे क्तो भवति । मतिरिच्छा ज्ञानंच । इच्छार्थेभ्यः—राज्ञां मतः राज्ञामिष्टः । ज्ञानार्थेभ्यः— राज्ञां ज्ञातः बुद्धः विदितस्तथापि । पूजार्थेभ्यः–राज्ञां पूजितः, राज्ञामर्चित· । ञितः– ञिमिदा मिन्नः, ञिक्ष्विदा क्ष्विण्णः, ञिधृषा धृष्टः । शील्यादिभ्यः—

> शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट उद्यतः ।
> संयतश्शयितस्तुष्टो, रुष्टो रुषित आशितः ॥ १ ॥
> कान्तोऽभिव्याहृतो हृष्टो दृप्तस्तृप्तोमृतस्तथा ।
> लिप्तः स्निग्धश्च दयित इत्याद्याः सति लक्षिताः ॥ २ ॥

८९५ । नब्भावे क्तोऽश्यादिभ्यः । ४ । ३ । ८९ । अश्यादिवर्जितेभ्यो नपुंसके भावे क्तो भवति । घञाद्यपवादः हसितम्, जल्पितम् , शयितम् , आसितम् , छात्रस्य शोभनम् ।

८९६ । पूङ्यजश्शानः । ४ । ३ । २१८ । पूङो यजेश्च धातोः सत्यर्थे शानप्रत्ययो भवति । शबादि पूर्ववत् । पवमान, यजमानः । ।

८९६ । वयःशक्तिशीले । ४ । ३ । २१९ । धातोः सत्यर्थे वर्तमानात् वयसि शक्तौ शीलेच गम्यमाने शानो भवति । वयो यौवनादि, शक्तिः सामर्थ्यम् , शीलं स्वाभावि

कम्। वयसि कतीह शिखण्डं वहमानाः, कतीह कवचं पर्यस्यमानाः कतीह कण्डूं निघ्नाना यस्मिन् वयसि शिखण्ड-वहनादि भवतीति तदिह वयो गम्यते। शक्तौ-कतीह पचमानाः कतीह समश्नानाः कतीह पाके समाशे च समर्था इत्यर्थः। शीले-अंजू गतिव्यक्तिम्रक्षणेषु तस्तः शाने "रुधान्नमन्लुकृच" इति नम् नकारस्य च लुक्। कतीहाञ्जानाः, कतीह मण्डयमानाः, अंजनशीलाः मण्डनशीला इत्यर्थः।

८९७। सुञ्द्विषार्हस्सत्त्रपरिप्रशस्ये। ४। ३। २२१। सुञादिभ्यः सत्यर्थे यथासंख्यं सत्त्रादौ कर्तरि शतृप्रत्ययो भवति। सर्वे सुन्वन्तः सत्रिणः यजमाना उच्यन्ते, द्विषन् शत्रुरित्यर्थः। अर्हन् विद्याम्, अर्हन् पूजाम्, विद्यापूजार्हतया प्रशस्यते।

८९८। तृ साधुधर्मशीलेषु। ४। ३। २२२। साधौ धर्मे शीले च सत्यर्थे वर्तमानाद्धातोः तृप्रत्ययो भवति। साधु शोभनं सम्यक्, कुले देशे वा सन्तत्या समायातः। प्रवृत्तिविशेषो धर्मः। कर्ता कटं, गन्ता खेलः, साधु गच्छति, साधु करोतीत्यर्थः। धर्मे वधूमूढां मुण्डयितारः श्राविष्ठायनाः मुण्डां कुर्वन्तीति णिजन्तात् तृ। श्राद्धेऽन्नमपहर्तारः आह्वरकाः मुण्डनादि येषां तेषां कुलधर्म इत्यर्थः।

८९९। भूवृतुवृधूभ्राजसहचररुचापत्रपालङ्कृञ्-निराकृञ्प्रजनोत्पचोत्पतोत्पदोन्मदादिष्णुः। ४।३। २२३। साध्वादौ सत्यर्थे भुवादिभ्य इष्णुप्रत्ययो भवति। भविष्णुः,

वर्तिष्णुः, वर्धिष्णुः, भ्राजिष्णुः, सहिष्णुः, चरिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, अलंकरिष्णुः, निराकरिष्णुः, प्रजनिष्णुः, उत्पचिष्णुः, उत्पतिष्णुः, उन्मदिष्णुः ।

९०० । सनाशंसभिक्ष उः । ४ । ३ । २२७ । साध्वादौ सत्यर्थे सन्प्रत्ययान्तात् भिक्षादिभ्यश्च उप्रत्ययो भवति । चिकीर्षुः जिहीर्षुः भिक्षुः, आशंसुः, विन्दुः विद ज्ञाने इत्यस्य विन्दत्यत एव निपातनात् नम् । इषु इच्छायामित्यस्यात एव निपातनात् षकारस्य छकारः इच्छुः ।

९०१ । निद्रातन्द्राश्रद्धास्पृहिगृहिपतिशीङ्दयादालुः । ४ । ३ । २३० । निद्रादिभ्यः साध्वादौ सत्यर्थे आलुर्भवति । द्रै स्वप्ने निद्रालुः, तदो दकारस्यात एव निपातनान्नकारः तन्द्रालुः, श्रत्पूर्वः श्रद्धालुः । स्पृहि ईप्सायाम्, गृहि ग्रहणे, पत गतौ चेति कथादिषु पठ्यन्ते तेभ्यो णिचि "कथादिपातिस्फायोगत्वम्" इति अगागमः तत्रावः इत्यकारलोपस्य "परेऽचः प्राग्वः" इति स्थानिवद्भावात् "ह्रस्वस्य हलः" इत्यराकारौ न भवतः । स्पृहयालुः, गृहयालुः, पतयालुः, शयालुः, दयालुः ।

९०२ । रुचलार्थादकर्मकात् । ४ । ३ । २३६ । रु शब्दे चल कम्पने इत्येतदर्थेभ्योऽकर्मकेभ्यः साध्वादौ सत्यर्थे अनो भवति । रवणः, शब्दनः, आक्रोशनः, कथनः, चलनः, चोपनः ।

९०३ । हलाद्यन्ताद् ङिदितः । ४ । ३ । २३७ । क्विः

इदितश्च धातोः हलादेर्हलन्तात् अकर्मकात् साध्वादौ सत्यर्थे अनो भवति । डिवः—वर्तनः वर्द्धनः । इदितः स्पर्द्धनः, जुगुप्सनः, मीमांसनः, चेतनः ।

९०४ । शमष्टकदुषद्विषद्रुहदुहयुजत्यजरजभजाभ्याहनानुरुधो घिनञ् । ४ । ३ । २४२ । शमादिभ्योऽष्टाभ्यः दुषादिभ्यश्च साध्वादौ सत्यर्थे घिनञ् भवति । ञकार ञ्णारणार्थः घकारो घित्कार्यार्थः ञकारात् मदेङ्गित्यस्या "इत्याकारः, शेषाणां मजन्वध इति प्रतिषेधात् न भवति । शमी, दमी, तमी, श्रमी, भ्रमी, क्षमी, कलमी, मादी, प्रमादी, दोषी, द्वेषी, दोही, द्रोही, योगी, त्यागी, प्राणत्यागी, रागी, भागी, कल्याणभागी, अभ्याघाती, अनुरोधी । रजेतिपाठात नलुक् ।

९०५ । उणादयः । ४।३।२८० । धातोः सत्यर्थे वर्तमानात् उणित्येवमादयो बहुलं भवन्ति ।

९०६ । कृवापाजिमिस्वदिसाध्यशौदृशसनिजनिचरिहण्चटिभ्य उण् ।१। कृइत्यादिभ्यो धातुभ्य उण्प्रत्ययो भवति । कारुः, वायुः, पायुः, मायुः, स्वादु, साधुः, आशुः, दारुः, सानुः, जानुः, चारुः, आयुः, चाटुः । "गमेर्डो" गौः । "भ्रमेश्च डूः" भ्रूः । "इक्श्तिपौ धातुनिर्देशे" नन्दिः, भिदिः, छिदिः, अत्तिः, जुहोतिः, दीव्यतिः इत्यादयः । बहुलग्रहणात् ये येभ्यो धातुभ्यो यस्मिन्नर्थे यथा दृश्यन्ते ते तेभ्यस्तथा भवन्ति इति धात्वर्थकार्यनियमः सिद्धो भवति । यदभिधेयस्तस्याप्तं

अभिधानरत्नजातं तदशेषं उणादिसागरान्तर्गतमेव बोद्धव्यम्।

९०७ पदरुजो घञ् । ४ । ४ । १ । पदिरुजिभ्यां घञ् प्रत्ययो भवति । पूर्वं कालविशेषे प्रत्यया उक्ताः अतः सामान्येन विधानम्। पद्यतेऽसाविति पादः कर्तरि घञ् । रुजत्यसाविति रोगः क्तेऽनिट् चजः कुघिति इति कुत्वम् ।

९०८ । सुः स्थिरव्याधिमत्स्यबले । ४ । ४ । २ । सर्तेर्धातोः स्थिरव्याधिमत्स्यबलेषु कर्तृषु घञ् भवति । सरतीति सारः चन्दनस्य सारः चन्दनसारः, खदिरसारः चिरस्थायिपदार्थ उच्यते ।

९०९ । घञ्युपसर्गस्य च २ । २ । ८८ । उपसर्गस्याजन्तस्य घञ उत्तरपदे बहुलं दीर्घो भवति । अतिसरतीत्यतिसारः अतीसारो व्याधिः, सारो मत्स्यः, सारो बलम् ।

९१० । अकर्तरि ।४।४।३। भावे कर्तृवर्जिते च कारके घञ् भवति । भवनं भावः, पचनं पाकः, त्यजनं त्यागः, रंजनं रागः । " घञि भावकरणे " इति नलोपः । कारके प्रास्यते इति प्रासः, प्रतुद्यतेऽनेनेति प्रतोदः, दास्यतेऽस्मै इति दासः, आहरति तस्मादित्याहारः, भुज्यतेऽस्मिन्निति भोगः इत्यादि । कृदाद्यो भावो लिङ्गसंख्यायोगिद्रव्यवत् ।

९११ । घोः किः । ४ । ४ । १२ । घुसंज्ञकात् धातोः उपसर्गे अकर्तरि किर्भवति । प्रधानं प्रधीयते इति वा धात्रो वा किः, इटि चातो लुगित्याकारलोपः । प्रधिः, एवं विधिः, उपधिः, निधिः, समाधिः, आदीयतेस्मादिति चतुर्थो दारूपा-

णामन्यतमस्मात् किः आदिः ।

९१२ । आप्यादाधारे । ४ । ४ । १३ । कर्मणः परात् घोरकर्तर्याधारे किर्भवति । जलं धीयतेऽस्मिन्निति जलधिः, "स्वकृतास्युक्तमि" ति समासः शरधिः, इषुधिः, बालधिः ।

९१३ । ग्वृगंवश्वृरणदग्रहोऽच् । ४ । ४ । १४ । इउऋइत्येतदन्तेभ्यः गमादिभ्यश्चाकर्तरि अच् भवति । चकारो दस्लमिति विशेषणार्थः । इः—चयः, जयः, नयः, क्षयः । उः– नवः, यवः, स्तवः, लवः, पवः । ऋः– तरः, दरः, शरः, करः, गम, वशः, वरः, रणः, आदरः, ग्रहः ।

९१४ । वौ प्रथनेऽशब्दे । ४ । ४ । ४२ । स्तृञः प्रथने विस्तीर्णतायामकर्तरि घञ् भवति न चेत तत्प्रथनं शब्दविषयं भवति । विस्तारः पटस्य, विस्तारो ग्रहस्य । प्रथने इति किम् ? विस्तरस्तृणस्य छादनमित्यर्थः । अशब्द इति किम् ? अहो द्वादशाङ्गस्य विस्तरः ।

९१५ । इणोऽभ्रेषे । ४ । ४ । ५४ । इणो धातोरभ्रेष-विषये -अकर्तरि घञ् भवति । भ्रेषः स्वरूपाच्चलनम् । एषोऽत्र न्यायः एतदत्र साध्वित्यर्थः । भ्रेषे–न्ययं गतः पापः ।

९१६ । स्थादिभ्यः कः । ४ । ४ । ५६ । स्थाइत्येवमादिभ्योऽकर्तरि को भवति । प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः । "इटि चातो लुगि" त्याकारस्य लुक् । सन्तिष्ठन्तेऽस्यामिति संस्था, व्यवतिष्ठन्तेऽनयेति व्यवस्था, प्रस्नात्यस्मिन्निति प्रस्नः, प्रपिबन्त्यस्यामिति प्रपा, विध्यतेऽनेनेति विधः ।

पाशिव्यचीत्यादिना साचो यस्य इक्। आविध्यतेऽस्मिन्निति आविधः, विहन्यतेऽस्मिन्ननेनेति वा विघ्नः। आयुध्यतेऽनेनेति आयुधः।

९१७। टुड्वितोऽथुच्क्त्री। ४।४।५७। टुड्वित्येवादितो धातोर्यथासंख्यमकर्तरि अथुच्क्त्री प्रत्ययौ भवतः। टुवेपृङ् वेपथुः, टुओश्वि श्वयथुः, टुक्षु क्षवथुः, पाकेन निर्वृत्तमित्यस्वपदविग्रहे क्त्रिः। भावादिमः इति प्रस्तुत्य—

९१८। क्त्रेरिमे। ३।२।२०। क्त्रिप्रत्ययान्तं शब्दरूपमिमप्रत्ययपरमेव प्रयोक्तव्यम्। एरिति इकारस्य लुक् डुपचिष् पक्त्रिमम्, डुकृञ्–कृत्रिमम्। कित्वादेङ् न भवति। डुयाचृञ् याचित्रिमम्।

९१९। यजयतप्रच्छस्वप्रक्षो नः। ४।४।५८। यजादिभ्योऽकर्तरि नः प्रत्ययो भवति। यज्ञः, यत्नः, प्रश्नः, शूच्छ्वोऽनुनासिके चेति छकारस्य शकारः स्वप्नः, रक्ष्णः।

९२०। विच्छेर्नङ्। ४।४।५९। विच्छेरकर्तरि नङ् भवति। पूर्ववत् छकारस्य शकारः। ङित्वादेङ् न भवति। विश्नः।

९२१। स्त्रियां क्तिन्। ४।४।६१। धातोरकर्तरि स्त्रियामर्थे क्तिन् भवति। घञादेरपवादः। ककारः कित्कार्यार्थः नकारो " वेदक्तिनो ङी " ति प्रतिषेधार्थः। दृशि दृष्टिः, सृजि- सृष्टिः, चितिः, वृतिः। " किञ्जलीत्यादिना आकारः क्षान्तिः, भ्रान्तिः, शान्तिः। कीर्णिः, शीर्णिः, लूनिः, पूनिः।

९२२ । समजनिषदनिपतमनविदषुञ्शीङः । ४ । ४ । ७० । समजादिभ्योऽकर्तरि स्त्रियां क्यप् भवति नाम्नि । समजन्ति तस्यामिति समज्या, निषीदन्ति तस्यामिति निषद्या, निपतन्ते तस्यामिति निपत्या, मन्यन्ते तस्यामिति मन्या, विदन्ति तस्यां तया वा धर्मार्थकामानिति विद्या, यन्ति तस्यां तयेति वा इत्या अयनमिति या, सुन्वन्ति तस्यामिति सुत्या, शेरतेऽस्यामिति शय्या "ययू" इतीकारस्यायादेशः । मतिः, वित्तिः, समितिः, आसुतिरिति बहुलाधिकारात् ।

९२३ । सम्पदादिभ्यः क्तिन् क्विप् । ४ । ४ । ७२ । सम्पदादिभ्योऽकर्तरि स्त्रियां क्तिन्क्विपौ भवतः । संपत्तिः, विपत्तिः, आपत्तिः, प्रतिपत्तिः, संवित्तिः । संपत्, विपत्, आपत्, प्रतिपत्, संवित्, आशीः ।

९२४ । ग्लाज्याहो निः । ४ । ४ । ७४ । ग्लाज्याहाभ्योऽकर्तरि स्त्रियां निर्भवति । ग्लानिः, हानिः, ज्यानिः ।

९२५ । णिवेत्त्यासश्रन्थघट्टवन्दोनः । ४ । ४ । ७५ । ण्यन्तेभ्यो वेत्त्यादिभ्यश्चाकर्तरि स्त्रियामनो भवति । णीति णिन्णिङ्णिविणीनां विशेषकरानुबन्धव्युदासेन निर्देशः । कृह इत्यतः प्रयुजि णिन् ततोऽनः णेरिक्तेत्यादिना णेर्लुक्, कारणा, हारणा, "कमृतेर्णिङीयङ्" इति णिङ् कामना, णिच्—लक्षणा । भुवेः प्राप्ताविणिरिति इणिः पूर्वेकारतङर्थः भावना, वेदना, आसना, श्रन्थना,

घट्टना, वन्दना ।

९२६ । प्रत्ययात् । ४ । ४ । ८० । प्रत्ययान्तात् धातोरकर्तरि स्त्रियामप्रत्ययो भवति । गुपौ रक्षणे अतो गुपौधूविच्छिपन्पनेरायः इत्यायप्रत्ययः गोपाया । कित निवासे । कित्तिजुगुप्भिवञ्यादिक्षमानिन्दे सन् इति सन् द्विर्वचनादि चिकित्सा, चिकीर्षा, कण्डूया, लोलूया, पुत्रीया, पुत्रकाम्या ।

९२७ । गुरोर्हलः । ४ । ४ । ८१ । गुरुमतो हलन्तात् धातोरकर्तरि स्त्रियामप्रत्ययो भवति । कुडुङ् दाहे उप्णदेशावस्थायामेव । उदित इति नम् ष्टुत्वं च । कुण्डा । हुडुङ् संघाते हुण्डा, शिक्षा, भिक्षा, ईहा, ऊहा ।

९२८ । षिच्चिन्तिपूजिकथिकुम्भिचर्चन्तर्घोऽङ् । ४ । ४ । ८२ । षितः चित्यादिभ्यः अन्तःपूर्वाच्च धातोऽकर्तरि स्त्रियामङ् भवति । जॄभृदृशोऽरित्यरादेशः जरा । क्षिप् छित्वादेङभावे इयादेशः क्षिया । घटिप्–घटा, व्यथिप् व्यथा, प्रथिप् प्रथा । चितु चुरादिः अङि णेः लुक् चिन्ता । पूज् पूजा, कथीत्यतो णिचि कथादिपातिस्फायोग्लग्वमित्यगागमे अत इति तस्य लोपे परेऽचः प्राच इति स्थानिवद्भावात् ञ्णित्यस्या इति न भवति । कथा । कुबु कुम्बा, चर्च चर्चा, इटि घातो लुगिति लुक् अन्तर्धा ।

९२९ । उपसर्गादातः । ४ । ४ । ८३ । उपसर्गात्परादाकारान्तात् धातोरकर्तरि स्त्रियामङ् भवति । प्रज्ञा, पूर्व-

मदाकारस्य लुक्, उपधा उपदा।

९३०। करणाधारे चानट्। ४।१।९८। अभ्यादिभ्यः करणे आधारे अधिकरणे चकारात् नभावे चार्थे अनट् भवति। घञाद्यपवादः स्त्रियां ङी चयनी, वृश्च्यतेऽनेनेति वृश्चनः, इध्मानां व्रश्चनः इध्मव्रश्चनः। श्मश्रु कृत्यतेऽनेनेति श्मश्रुकर्तनः। आधारे-शेरतेऽस्मिन्निति शयनम्, आसतेऽस्मिन्निति आसनम्, अधिक्रियतेऽस्मिन्निति अधिकरणम्, दुह्यतेऽस्यामिति दोहनी। गोर्दोहनी गोदोहनी। तिलाः पीड्यन्तेऽस्यामिति तिलपीडनी, सक्तवो धीयन्तेऽस्यामिति सक्तुधानी, राजानो धीयन्तेऽस्यामिति राजधानी। नभावे-हसनम्, जल्पनम्, शयनम्, आसनम्, भुज्यन्ते इति भोजनाः राज्ञां भोजना राजभोजनाः शालयः। एवं राजाच्छादनानि वासांसि। संप्रदीयन्तेऽस्मै इति संप्रदानम्, अपादीयतेऽस्मादित्यपादानम्। इत्यादि बहुलाधिकारात् सिद्धम्।

९३१। पुन्नाम्नि घः प्रायः। ४।१।९१। धातोः करणाधारयोः पुल्लिङ्गे नाम्नि घो भवति प्रायः क्वचिन्न भवत्यपीत्यर्थः। प्रच्छाद्यतेऽनेनेति णिजन्तात् घः।

९३२। घेद्व्याद्युपसर्गस्य। ४।१।२१०। धातोरुपान्त्यस्य घप्रत्यये परे णौ परतः ह्रस्वादेशो भवति न चेदस्य द्व्याद्य उपसर्गा भवन्ति। इति उपान्त्यस्य ह्रस्वः प्रच्छदः, प्लवः, करः। अधिकरणे एत्यास्मिन् कुर्वन्तीत्याकरः, आलयः। प्राय इति किम्? दोहनः, प्रमाथनः।

९३३ । हलो घञ् । ४ । ४ । ९३ । हलन्तात् धातोः करणाधारयोः पुन्नाम्नि घञ् भवति । पाप्यादः । लिखन्ति लिख्यन्तेऽनेनेति वा लेखः, वेदः, चेष्टः, बन्धः, णिजृङ् नेगः, विचैङ् वेदः, मृजो घञ्यरादेशे "मृजु" रित्यकारस्याकारः घञ्युपसर्गस्य चेति दीर्घः, अपामार्गः, आरामः, प्रासादः, आपाकः ।

९३४ । तृस्त्रोऽवात् । ४ । ४ । ९४ । अवात् तृस्तृभ्यां करणाधारयोः पुन्नाम्नि घञ् भवति । अवतारः, समवतारः, अवस्तारः ।

९३५ । समश्च हृञः । ४।४।९५ । समवाभ्यां हृञः करणाधारयोः पुन्नाम्नि घञ् भवति । संहारः, अवहारः ।

८३६ । खनोऽडडरेकेकवकाश्च । ४ । ४ । ९८ । खनेः करणाधारयोः पुन्नाम्नि अड–डर–इक–इकवक–घञ्–प्रत्यया भवन्ति । आखनः, आख, आखरः आखनिकः, आखनिकवकः, आखानः, ।

९३७ । दुस्स्वीषतः कृच्छ्राकृच्छ्रे खः । ४ । ४ । ९९ । कृच्छ्रं दुःखं अकृच्छ्रं सुखम् कृच्छ्रार्थवृत्तेः दुरः अकृच्छ्रार्थवृत्तिभ्यां स्वीषद्भ्यां परात् धातोः खप्रत्ययो भवति । घञापवादः । दुःखेन शय्यते इति दुश्शयम्, सुखेन शय्यते इति सुशयम्, ईषच्छयम् भवता, दुष्करः, सुकरः, ईषत्करः कटो भवता, दुर्बोधं व्याकरणम्, सुबोधं वाक्यम्, ईषद्बोधं नाटकम् ।

९३८ । च्वौ कर्त्र्याप्याद् भूकृञः । ४ । ४ । १०० । कृच्छ्राकृच्छ्रार्थेभ्यः दुस्स्वीपद्भ्यः परात् कर्तृवाचिन आप्यात् कर्मवाचिनश्च च्व्यर्थे वर्तमानात् यथासंख्यं भवतेः कृञश्च खो भवति । " खित्यनव्ययस्य " इति मम् । दुः-खेनानाढ्येनाढ्येन वा भाव्यमिति विगृह्य खः । अरुयुक्तमिति जातिनिर्देशः इति दुराढ्येत्यरुयुक्तसमुदायस्य स्वकृतारुयुक्तमिति समासः । दुराढ्यभवम्, स्वाढ्यभवम्, ईषदाढ्यभव भवता, दुःखेनाढ्यः क्रियते दुराढ्यकरः, स्वाढ्यकरः, ईषदाढ्यंकरः देवदत्तो भवता ।

९३९ । आतोऽनः । ४ । ४ । १०१ । कृच्छ्राकृच्छ्रार्थेभ्यः दुस्स्वीपद्भ्यः परादाकारान्तात धातोरनप्रत्ययो भवति । खापवादः । दुःखेन ग्लायति दुर्ग्लानं, सुग्लानम्, ईषद्ग्लानम्, दुर्म्लानम्, सुम्लानम्, ईषद्म्लानम्, दुष्पानम्, सुपानम्, ईषत्पानम्, दुर्धाना ईषद्धाना गौः ।

९४० । शास्युधिदृशिधृषिमृषः । ४ । ४ । १०२ । कृच्छ्राकृच्छ्रार्थेभ्यः दुस्स्वीपद्भ्यः परेभ्यः शासादिभ्यः अनो भवति । दुश्शासनः, दुर्योधनः, दुर्दर्शनः, दुर्धर्षणः, दुर्मर्षणः । योगविभागो हि विकल्पार्थः दुर्दर्शो हि राजा ।

९४१ । निषेधेऽलंखलौ क्त्वा । ४।४।१४१ । निषेधवृत्त्योरलंखल्वोरुपपदयो धातोः क्त्वा वा भवति । अलंकृत्वा खलुकृत्वा, अलं बाले रुदित्वा रुदितेन । तद्भावे क्तः रोदनेन अलम् ।

९४२ । प्राक्काले । ४ । ४ । १४४ । अपरकालेन तुल्यकर्तृके प्राक्कालेऽर्थे वर्तमानात् धातोः क्त्वा वा भवति । भुक्त्वा व्रजति, आसित्वा भुंक्ते, स्नात्वा पीत्वा व्रजति।

९४३ । स्व्यूदितः । ४ । २ । १६१ । ऊदितो धातोः क्त्वाप्रत्यये वलादेरिड् वा भवति ।

९४४ । क्त्वि । ४ । १ । १५६ । इडादौ क्त्वाप्रत्यये परे कित्कार्यं न भवति । देवित्वा, सेवित्वा, वर्तित्वा, वर्द्धित्वा, एङ्र् भवति । स्रंसित्वा नलुग्न भवति । पक्षे—द्यूत्वा, स्यूत्वा, वृत्वा, स्रस्त्वा । इत्येव । कृत्वा, हृत्वा, इष्ट्वा क्रन्त्वा।

९४५ । यौ हलादेरलसंस्त्वोः । ४ । १ । १५२ । यौ इकारे उकारे च उपान्त्ये सति रलन्तस्य हलादेः धातोः इडादौ सनि क्त्वायां च इडादौ क्त्वाप्रत्यये कित्कार्यं वा भवति । लिखित्वा लेखित्वा । द्युतित्वा द्योतित्वा ।

९४६ । नशूजस्तित्वि न्युपान्त्ये । ४ । १ । १५० । नशो जान्तस्य च धातोः नकारे उपान्त्ये सति तकारादौ क्त्वाप्रत्यये परे कित्कार्यं वा भवति । नष्ट्वा, नंष्ट्वा, रक्त्वा, रंक्त्वा, भक्त्वा, भंक्त्वा, मक्त्वा, मंक्त्वा ।

९४७ । थफवञ्चिलुञ्च्यृतितृषिमृषिकृश इटि । ४ । १। १५१ । नकार उपान्त्ये सति थकारफकारान्तयोः वंचि लुंचि ऋति तृषि मृषि कृश इत्येतेषां च इडादौ क्त्वाप्रत्यये परे किद्वद् कार्यं वा भवति । कीतिनिषेधे विकल्पः । श्रथित्वा, श्रंथित्वा, गुफित्वा, गुंफित्वा, वचित्वा, वंचित्वा, लुचित्वा,

लुंचित्वा, ऋतित्वा, अर्तित्वा, तृपित्वा तर्पित्वा, मृपित्वा, गर्पित्वा, कृशित्वा, कर्शित्वा ।

९४८ । मृडमृदगुधकुषक्लिशवदवसः । ४ । १ । १५८ । मृडादीनामिडादौ क्त्वाप्रत्यये कित्कार्यं भवति । मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा, क्लिशित्वा, उदित्वा, उषित्वा ।

९४९ । रुदिन्मुषिग्रहिस्वप्प्रच्छां सनि च । ४ । १ । १५९ । रुदादीनां सनि क्त्वाप्रत्ययेच किद्वद् भवति । इति कित्त्वम् । रुदित्वा, मुषित्वा, गृहीत्वा । " द्योसोमास्थां किती " ति इकारः । दित्वा, सित्वा, मित्वा, स्थित्वा ।

९५० । ददघोर्दः । ४ । २ । १८२ । दाइत्येतस्य धातोर्घुसंज्ञकस्य तकारादौ किति प्रत्यये दत् इत्ययं तकारान्त आदेशो भवति । दत्त्वा ।

९५१ । धाञो हिः । ४ । २ । ११६ । धाञस्तकारादौ किति प्रत्यये परे हिरादेशो भवति । हित्वा ।

९५२ हाकस्त्वि । ४ । २ । ११७ । ओहाक् त्याग इत्येतस्य तकारादौ क्त्वाप्रत्यये परे हिर्भवति । हित्वा राज्यं वनं गतः । जग्धदः ल्ये चेति जग्ध् जग्ध्वा ।

९५३ । क्त्वोऽनञः ल्यः । २ । २ । १७१ । नञ्-वर्जितादव्ययात् पूर्वपदात् परमुत्तरपदं तदवयवस्य क्त्वाप्रत्ययस्य ल्यादेशो भवति समासे । ल्ये-अभिभूयस्थितः, आदायगतः । ह्रस्वस्य तक्पिति कृतीति तक् प्रकृत्य, प्रहृत्य, अधिकृत्य, उच्चैःकृत्य, नानाकृत्य । अनञ इति किम् ? अकृत्वा,

परमकृत्वा ।

९५४ । ल्यपि । ४।१।६२ । हनादीनां ल्यपि लुग्भवति । प्रहत्य, प्रमत्य, प्रवत्य, प्रक्षत्य ।

९५५ । मो वा । ४।१।६३ । हनादीनां मकारान्तानां ल्यपि लुग् वा भवति । नियत्य नियम्य, आगत्य आगम्य, विरत्य विरम्य ।

९५६ ल्याक्ङि । ४ । १ ।१८५ । दीङो धातोः नित्यमाकारो भवति ल्यपि अक्ङि इति च प्रत्यये विषयभूते । तेनात्वे कृते प्रत्ययो भवति । उपदाय, अवदाय ।

९५७ । मिञ्मीञोरखाचि । ४ । १ । १८६ । मिञ्मीञोर्धात्वोः खअचुवर्जिते ल्याक्ङिति विषये आकारो भवति निमायगतः, प्रमायगतः ।

९५८ । लीङ्लिनात्योर्वा । ४ । १ । १८७ । लीङ्लिनात्योर्धात्वोः खाज्वर्जिते ल्याक्ङिति विषयभूते आकारो भवति वा । विलाय, विलीय, प्रभुज्य, उपभुज्य, अनुगृह्य, अनूद्य, प्रोच्य, प्रमुच्य, अन्विज्य, समीक्ष्य, उत्तीर्य, विस्तीर्य । णेरित्येत्यादिना णिलुक् उत्तार्य, विस्तार्य, उपभोज्य, अनुभोज्य, अनुभाज्य, अध्याप्य, प्रस्थाप्य, अभिधाप्य, प्रतिपाद्य ।

९५९ । लघोर्हलः ल्येऽय् । ४ । २ । १०३ । धातोर्या लघुस्ततः परो यो हल् तस्मात् परस्य णेः ल्ये नित्यमयादेशो भवति । प्रशमय्य, प्रतमय्य, प्रकथय्य, प्रगणय्य गतः ।

" गत्वा स्नात्वा नदीतोये भुक्त्वा पीत्वाम्बु शीतलम् ।

कक्षे विहृत्य तत्तीरे यान मन्दातपे सुखम् ॥ १ ॥

९६० । पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ् । ४ । ४ । १४५ । पूर्वादिपूपपदेषु आभीक्ष्ण्येच धात्वर्थावधौ तुल्यकर्तृकेऽर्थे धातोः खमुञ् वा भवति । पूर्वभोजम्, पूर्वं भुक्त्वा, अग्रेभोजम्, अग्रेभुक्त्वा । प्रथमंभोजम्, प्रथम भुक्त्वा, आभीक्ष्ण्य—

९६१ । भृशाभीक्ष्ण्याविच्छेदे प्राग्वद्विः । २ । ३ । २ । क्रियायाः साकल्यमवयवक्रियाणां वा साकल्यं कार्त्स्न्यं भृशार्थः, पौन पुन्यमावृत्तिराभीक्ष्ण्यं सातत्यं, क्रियान्तरैरव्यवधानमविच्छेदः एतेषु द्योत्येषु यत्पदं वाक्यं वा वर्तते तत्प्रागतिशायिकादेः पूर्वमेव द्विरुच्यते । भोजंभोजम्, भुक्त्वा भुक्त्वा व्रजति । पायपायम्, पीत्वा पीत्वा व्रजति ।

ईक्षमीक्षं तदा बाले, रोदरोदं च मामनु ।
आयमायं निवृत्ताया जीवेदेकाकिनी कथम् ॥ १ ॥

९६२ । आप्यादाक्रोशे । ४ । ४ । १४८ । कर्मणः परात् तुल्यकर्तृकेऽर्थे करोतेः खमुञ् वा भवति आक्रोशे गम्यमाने । चोरंकारं, चोरकृत्वा आक्रोशति चोरोऽसीत्याक्रोशतीत्यर्थः ।

९६३ । तदर्थायां क्रियायां तुण् लट् च । ४ । ४ । १८४ । धातोः तुम् , तुण्, लट् च भवति क्रियायां तदर्थायाम् । यस्माद्धातोः स तुम् प्रत्ययो भवति तदभिधेयार्थं चेत् क्रियान्तरं गम्यते । कर्तुं व्रजति, हर्तुं व्रजति, भोक्तुं ददाति, भोजको व्रजति, भोजकं कुलं व्रजति, भोक्ष्ये इति व्रजति ।

९६४ । लेङ्तुमिच्छार्थे तुल्यकर्तृके । ४ । ४ । १८६ । धातोर्लेङ्तुमौ भवतः, तदर्थायां क्रियायां वर्तमाने इच्छार्थे तुल्यकर्तृके उपपदे, यस्माद्धातोः लेङ्तुमावुत्पद्येते तदर्थस्य चेत् कर्ता इच्छार्थस्यापि कर्ता भवति । मोक्तुमिच्छति मोक्ष-सुखमनुभवति मयि ।

॥ इति कृदन्तपरिच्छेदः समाप्तः ॥

---

एध्यदहुदिवूपुञ्क्रीञ्तुत्तप्तुच्चुर्युजादयः ।
एकादशेति शब्दानुशासने धातवो मताः ॥ १ ॥
एध्यद्रुहादयश्चैकं शपा सामान्यदर्शनात् ॥
शेपास्तु धातवोऽष्टापि नवैते परिकीर्तिताः ॥ २ ॥
गहनं व्याकरणं स्यात्, तत्रापि प्रक्रिया महागहनम् ॥
लिङ्लुङ्सन्यङ् कष्टं तस्मादपि चेत्परं महाकष्टम् ॥३॥
अर्थान् सुखेतरार्थान्, आगममानुः प्रकाशयति नित्यम्
तस्याप्युदयं कुर्वद् व्याकरणं तद्बुधर्घोष्यम ॥ ४ ॥

अथ केषांचित् धातूनां प्रक्रियाविशेष उच्यते—

हन हिंसागत्योः ततो लट् तस्य तिपादयः हदादेः इत्युन्लुगिति शपो लुक् हन्ति । " हनमन्यमित्यादिना नेकारस्य लुक् हतः । गंहनिसादिनोपान्त्यस्य लुक् घ्नन्ति । हंसि, हथः, हथ । हन्मि, हन्वः, हन्मः ।

९६५ । यङ्घ्नः स्नेञ्चे चाङः । १ । ४ । ५८ ।

आङ्पूर्वाद् यमेः हन्तेश्च लस्तङो भवन्ति कर्मण्यसति । स्वे आत्मीये चांगे कर्तुः कर्मणि । आहते, आघ्नाते, आघ्नते, आहसे, आघ्नाथे, आहध्वे, आघ्ने, आहन्वहे आहन्महे । लङि— ला इति लुक् अहन्, अहताम्, अघ्नन्, अहन्, अहतम्, अहत, अहनम्, अहन्व, अहन्म, आहत, आघ्नाताम्, आघ्नत, आहथाः, आघ्नाथाम्, आहध्वम्, आघ्नि, आहन्वहि, आहन्महि। लेटि–हन्तु, हताद्वा, हताम्, घ्नन्तु ।

९६६ । शाध्येधिजहि । ४ । २ । ३३ । शाध्येधिजहीति निपात्यन्ते । शाधीति शास्तेः प्रकृतेर्यङ्लुगन्तस्य च हौ शाभावः हो धश्च निपात्यते । एधीति अस्तेः हौ एत्वम् हो धश्च, जहि इति हन्तेर्हौ जभावः, यङ्लुगन्तस्यापि जहि, हताद्वा, हतम्, हत, हनानि, हनाव हनाम । आहताम्, आघ्नाताम्, आघ्नताम्, आहस्व, आघ्नाथाम्, आहध्वम्, आहनै, आहनावहै, आहनामहै । लेङि–हन्यात्, हन्यातामित्यादि । आघ्नीत, आघ्नीयातामित्यादि । कर्मणि हन्यते इत्यादि ।

९६७ । लिङि च । ४ । २ । १२३ । हन्तेर्लुङि लिङि च विषये वधादेशो नित्यं भवति । अत इति लुक् वध्यात, वध्यास्तामित्यादि । आवधिषीष्ट, आवधिषीयास्तामित्यादि । कर्मण्यप्येवम् । वधिषीष्ट । ञिटि तु घानिषीष्ट, घानिषीयास्तामित्यादि । लिटि—

९६८ । हिघ्नोऽङे कुः पूर्वात् । ४ । १ । ७१ । ङवर्जिते प्रत्यये परे हिहनोर्धात्वोर्द्विर्भावे पूर्वस्मात्परयोरादे कव·

र्गादेशो भवति । जघान, जघ्नतुः, जघ्नुः, जघनिथ, जघन्थ, जघ्नथुः, जघ्न, जघन, जघान, जघ्निव, जघ्निम। आजघ्ने, आजघ्नाते इत्यादि । कर्मण्यप्येवम् । लुङि—वधा-देशे—अवधीत्, अवधिष्टामित्यादि । तङ्क्षु—

९६९ । हनो वधस्तङि लुङि । ४ । २ । १२२ । हन-स्तङि लुङि वधादेशो वा भवति । आवधिष्ट, आवधिषाताम् , आवधिषत इत्यादि । वधादेशाभावे—

९७० । हनः । ४ । २ । २४५ । हनस्तङि सकारादौ सिप्रत्यये परे कित्कार्यं भवति । तेन "हनुमनित्यादि भवति । आहत, आहसाताम् , आहसत इत्यादि । कर्मणि अवधि, अवधिषातामित्यादि । अघानि अहसातामित्यादि । ञिटि अघानि, अघानिषातामित्यादि । लुटि - हन्ता, हन्तारौ इत्यादि । कर्मण्यप्येवम् । ञिटि तु घानिता इत्यादि । ऌटि— "ऋघ्नःस्ये" इतीट् हनिष्यतीत्यादि । ञिटि—घानिष्यते इत्या-दि । ऌङि—अहनिष्यत् इत्यादि । ञिटि अघानिष्यत इत्यादि । लटः शतृ घ्नन्, घ्नन्तौ, घ्नन्तः इत्यादि । स्त्रियां घ्नती, आघ्नानः, आघ्नाना, आघ्नानाम् इत्याद्यशेषं सुबोधम् । लिटः—

९७१ । गमहनविदृदशविशो वा । ४ । २ । १३६ । गम्-हन्विद्दृशविश् इत्येतेभ्यः क्स इड् वा भवति । जघ्निवान् जघन्वान् । स्त्रियां—जघ्नुषी । यङि—

९७२ । हनो घ्नी हिंसायाम् । ४ । २ । ९० । हनेर्धातोः

हिंसायामर्थे वर्तमानस्य यङि घ्नी इति ईक् अलुक् च निपात्यते जेघ्नीयते । गतौ जंघन्यते । णिचि—

९७३ । हनो नस्तोऽञ्णिणे । ४ । १ । २३८ । हन्तेर्ञिणश्वर्जिते ञ्णिति नकारस्य तकारो भवति ।

९७४ । हो घः । ४।१।२३९ । हन्तेर्ञ्णिति हकारस्य घकारो भवति । घातयति, अजीहतत् । सनि—

९७५ । इट्नः । ४।१।१३८ । इणिगिङादेशस्य गमेः हन्तेश्चाचो झलादौ सनि परे दीर्घो भवति । जिघांसति, हन्ता, हतः हत्वा, उपहत्य, घातंघातमित्यादि । इण् गतौ एति, इतः । ह्निगोऽचीकः श्लेले यत्र् । ४ । २ । १ । इति यत्र् । यन्ति । एषि, इथः इथ, एमि, इवः इमः । लङि—ऐत्, ऐताम् ।

९७६ । यसः । । । । इण इकश्च असुभुवि इत्यस्य च धाश्च: लङ्लुङ्लृङ्विषये आ ऐ आसन्न ऐकार आकारश्चादेशो भवत्यमाङ्योगे । यब्लुगपवादः । आयन् , ऐः ऐतम् , ऐत, आयम् , ऐव, ऐम । लेटि—एतु इताद्वा इताम् , यन्तु, इहि इताद्वा, इतम् , इत, अयानि, अयाव, अयाम । लेङि—इयात् , इयाताम् इत्यादि । कर्मणि—ईयते इत्यादि । लिङि—ईयात् ईयास्तामित्यादि । कर्मणि एषीष्ट । ञिटि—आयिषीष्ट । लिटि——

९७७ । पूर्वस्यास्वेऽचीयुव्योः । ४ । १७६ । द्विर्भावे यः पूर्वस्तस्य इवर्णोवर्णयोरस्वेऽचि परे यथासंख्यं इयुवौ

भवतः। इयाय। किति दीर्घ एव। ईयतुः, ईयुः इययिथ, ईयथुः, ईय, इयाय, ईयिव, ईयिम। कर्मणि— ईये ईयाते इत्यादि। लुटि— एता, एतारौ इत्यादि। ञिटि आयिता। लृटि—एष्यति। ञिटि—आयिष्यते। लृङि—ऐष्यत्, ऐष्यतामित्यादि। ञिटि—आयिष्यत, आयिष्येतामित्यादि।

९७८। गेत्यो। ४। २। १२४। इण इकश्च लुङि गा इत्यादेशो भवति। घुपेत्यादिना सेर्लुक् अगात्, अगाताम्, अगुः। इत्यादि। कर्मणि—अगायि अगासाताम्, अगासत इत्यादि। ञिटि—अगायि, अगायिषाताम्, अगायिषत इत्यादि।

९७९। णौ गमज्ञाने। ४। २। १२५। एतयो णौ प्रत्यये परेऽज्ञानेऽर्थे गम् भवति। इदमर्थविशेषणमिण एवेकोऽसम्भवात्। गमयति ग्रामम्। ज्ञाने—अर्थान् सम्प्रत्याययति। लुङि अजीगमत् ग्रामम्, अर्थान् संप्रत्यायियत्।

९८०। सनीङश्च। ४। २। १२६। सनि इङ एत्योश्च गम भवत्यज्ञाने। जिगमिषति ग्रामम्, अर्थान् प्रतीषिषति। शत्रानशौ—यन्, यन्तौ, यन्तः इत्यादि। स्त्रियां यती इत्यादि। यत् इत्यादि। इयानः इयानावित्यादि।

९८१। श्रुविणूवस्सदोऽनुवचश्च कर्तरि भूते।१।४। ८१। श्रुवादिभ्यः कर्तरि भूतसामान्ये लिटः क्वसुर्भवति अनुवचश्च कानः। इति कर्तरि भूतसामान्ये भवन्। क्वसुः लिटः

स्थाने भवति भूतसामान्ये लिटि अस्मादेव वचनात् भवति पूर्ववत् पश्चात् द्विर्वचनम् इयादेशो दीर्घश्च । उपेयिवान्, उपेयुषी, उपेयिवत् । एता, इतः इतवान्, इतवती, इतवत्, उपेत्य, आयमायम् ।

९८२ । ह्यपेतेरित् । ४ । २ । ६ । उपसर्गात् परस्य इणधातोरिक ङ्किति यकारादौ लादेशे परे इकारो भवति । " यङ्लेङीत्यादिर्दीर्घे ह्रस्वः । समियात्, समियास्ताम्, समियासुरित्यादि । उदियात्, उदियास्ताम्, उदियासुरित्यादि । अन्वियात्, अन्वियास्ताम्, अन्वियासुरित्यादि । अभीयात्, अभीयास्ताम्, अभीयासुरित्यादि । ह्रस्वे कृते पुनर्दीर्घ इति दीर्घः । पुनः ह्रस्वो न भवति निमित्ताभावात् । लीति किम् ? समीयते, उदीयते । इक इति किम् ? एयात्, समेयात् । इङ् अध्ययने इङिकावध्युपसर्गं न व्यभिचरत इति वचनादधिपूर्वः अधीते, अधीयाते, अधीयते इत्यादि । लङि—इयादेशे कृते ऐच् अध्यैत, अध्यैयाताम्, अध्यैयत इत्यादि । अधीताम्, अधीयाताम्, अधीयताम् इत्यादि । लेङि—अधीयीत, अधीयीयाताम्, अधीयीरन् इत्यादि । कर्मणि—अधीयते, अधीयेते, अधीयन्ते इत्यादि । लिङि—अध्येषीष्ट अध्येषीयास्ताम्, अध्येषीरन् इत्यादि । णिटि—अध्यायिषीष्ट, अध्यायिषीयास्ताम्, अध्यायिषीरन् इत्यादि ।

९८३ । गाङ् लिटि । ४ । २ । १२७ । इङः लिटि गाङ् भवति । अधिजगे, अधिजगाते, अधिजगिरे, अधिज-

गिपे इत्यादि । लुङि—

९८४ । लुङ्लङोर्णौ सनूङे वा । ४ । २ । १२८ । इङः लुङि लङि सन्परे ङपरे च णौ गाङ् वा भवति । ' गाङ्-कुटाङ्ङिद्वद्ञ्णि ' इति ङिद्वद्भावः, ' ईहल्यघ्वे ' इति ईत्वम् अध्यगीष्ट, अध्यगीषाताम् , अध्यगीषत इत्यादि । गाङभावे अध्यैष्ट, अध्यैषाताम् , अध्यैषत इत्यादि । कर्मणि–अध्यगायि, अध्यगायिषाताम् , अध्यगायिषत इत्यादि । गाङभावे अध्यायि, अध्यैषाताम्, अध्यैषत । चिटि-अध्यायि, अध्यायिषाताम् , अध्यायिषत इत्यादि । लङि— अध्यगीष्यत, अध्यगीष्येताम्, अध्यगीष्यन्त इत्यादि। गाङभावे—अध्यैष्यत अध्यैष्येताम् , अध्यैष्यन्त इत्यादि । कर्मणि अध्यायिष्यत इत्यादि । लुटि अध्येता, अध्येतारौ, अध्येतार इत्यादि । लटि अध्येष्यते, अध्येष्येते, अध्येष्यन्ते इत्यादि । चिटि--अध्यायिष्यते, अध्यायिष्येते, अध्यायिष्यन्ते इत्यादि । णौ सनि— अधिजिगापयिषति, अध्यापिपयिषति । णौ ङे—अध्यजीगपत, अध्यापिपत् । णिग्रहणं किम् ? " सनीङ्श्चेति गमादेश, इच्न " इति दीर्घः, अधिजिगांसते व्याकरणमित्यादि समस्तं सप्रपञ्चं शब्दानुशासनं विद्वद्भिरुन्नेतव्यम् ।

इति धातुप्रत्ययसिद्धिः ।

---

" व्याकरणोदधिं तीर्त्वा, प्राप्तुं भावशुभामृतम् ।
बालानामृजुमार्गोऽयं संक्षेपेण प्रदर्शितः ॥ १ ॥
दयापालकृता स्रग्वत् रूपसिद्धिर्विवर्द्धताम् ।
भूमावियं तमो भेत्री दिगिने भानुरश्मिवत् ॥ २ ॥

---

॥ इति दयापालमुनिकृता रूपसिद्धिः समाप्ता ॥

